जत्थज्झयणे वण्णिज्जते, ते अ दो अज्झयणा, तत्थेक्कं सुत्तत्थेहिं संखित्तयरं खुड्डुंति, बितियं सुत्तत्थेहिं विच्छिण्णयरं महल्लंति ।

अंगस्स चूलिता जधा आयारस्स पंच चूलातो, दिट्ठिवातस्स वा चूलियागत्ति, विवक्खावसातो अज्झयणादिसमूहो वग्गो, जधा अन्तगडदसाणं, अणुत्तरोववाइयदसाणं तिन्नि वग्गा, तेसिं चूला वग्गचूडा, वियाहो-भगवती तीए चूला वियाहचूला, पुव्वभणितो अभणितो य समामतो (वित्थरओ) य चूलाए अत्थो भण्णतीत्यर्थः, अरुणो णाम देवो तस्समयणिबद्धं अज्झयणे जाव तं अज्झयणं उवउत्ते समाणे अणगारे परियट्टेति ताव से अरुणदेवे समयणिबिद्धत्तणतो चलितासणो जेणेव से समणे तेणेव आगच्छति उववूहति, ताहे ताहे समणस्स पुरतो अंतठितो कतंजलीओवउत्ते सुणेमाणे २ चिट्ठइ, से समत्ते य भणति-सुभासितं २ वरेह वरंति, इहलोकणिप्पिवासे समणे पडिभणति-ण मे वरेण अट्ठोत्ति, ताधे स पदाहिणं करेत्ता णमंसेत्ता य पडिगच्छति, एवं गरुलो वरुणो वेसमणो सक्को देविंदे वेलंधरे यत्ति, उट्ठाणसुयंति अज्झयणं सिंगणाइयकज्जे जस्स णं गामस्स वा जाव रायधाणीए वा एगकुलस्स वा समणे आसुरुत्ति रुट्ठे उवउत्ते तं उट्ठाणसुएत्ति अज्झयणं परियट्टइ एक्कं दो तिन्नि वा वारे ताधे से गामे वा जाव रायधाणीउ वा उलं वा उट्ठेति उव्वसइत्तिवुत्तं भवति, से चेव समणे तस्स गामस्स वा जाव रायधाणीए वा तुट्ठे समाणे पसण्णे पसण्णलेसे सुहासणत्थे उवउत्ते समुट्ठाणं तं परियट्टइ एक्कं दो तिण्णि वा वारं ताहे से गामे वा जाव रायहाणी वा आवासेति, समुवट्ठाणसुयंति वत्तव्वे वगारलोवातो समुट्ठाणसुयत्तिभणितं, अप्पण्णा पुव्वयम्मि कयसंकप्पस्स आवासेति, णागपरियाणियत्ति अज्झयणं, णागत्ति णागकुमारो तस्स समयबद्धं अज्झयणं, तं जया समणे उवउत्ते परियट्टेति तया अकयसंकप्पस्सवि ते णागकुमारा तत्थत्था चेव परियायंति वंदंति णमंसंति भत्तिबहुमाणं वा करेंति सिंगणाइयकज्जेसु य वरया भवंतीत्यर्थः, निरियावलियासु आवलियादेवीओ जा जेण तवोविसेसेण उववण्णा, आवालिपविट्ठेतरे य णीरयातग्गामिणो य णरतिरिया य संगता वण्णिज्जंति, सोधम्मीसाणकप्पेसु जे कप्पविमाणा ते कप्पवडेंसया तं वण्णिता तेसु य देवीओ जा जेण तवोविसेसे-

ण उव्वण्णा ता वण्णिता ताओ य कप्पवडेंसया भणिता, संजमभावविगासितो पुप्फितो संजमभावचुतो अवपुप्फितो, अगारभावं परिट्ठावित्ता पव्वज्जाभावेण विगसित्ता पच्छा सीयइ जो तस्स इह भवे परभवे य विलंबणा दंसिज्जइ जत्थ ता पुप्फिया, एस विसेसो पुप्फचूलाए दंसिज्जइ। अंधगवण्हिणो जे कुले ते अंधगसद्दलोवातो वण्हिणो भणिया, ते मंथरियगती सिज्झणा य जत्थ भणिता ते वण्हिदसातो, दसत्ति अवत्था अज्झयणा वा, भगवतो उसभस्स चउरासीइसमणसाहस्सीतो होत्था, पइण्णगज्झयणावि सव्वे कालियउक्कालिया चउरासीइसहस्सा, कथं?, जतो ते चउरासीइसमणसहस्सा अरिहंतमग्गउवदिट्ठे जं सुतमणुसरेंता किंचि णिज्जूहंति ते सव्वे पइण्णगा, अहवा सुतमणुस्सरंतो अप्पणो वयणकोसल्लेण जं धम्मदेसणादिसु भासंतो तं सव्वं पइण्णगं, जम्हा अणंतगमपज्जगं सुत्तं दिट्ठं, तं च वयणं णियमा अण्णयरगमाणुपाती भवति, तम्हा तं पइण्णगं, एवं चउरासीइ पइण्णगसहस्सा भवंतीत्यर्थः, एतेणेव विहिणा मज्झिमतित्थगराणं संखेज्जा पइण्णगसहस्सा, समणस्सवि भगवतो जम्हा चोद्दससमणसाहस्सीतो उक्कोसिता समणसंपया तम्हा चोद्दसपइन्नगज्झयणसहस्सा भवंति, अहवा 'जत्तिया सिस्सा' इत्यादिसूत्रं, इह सुत्ते अपरिमाणा पइण्णगा, पइण्णगसामिअपरिमाणत्तणतो, किंच-इह सुत्ते पत्तेयबुद्धप्पणीयपइण्णगं भणियव्वं, कम्हा?, जम्हा पतिण्णयपरिमाणेण चेव पत्तेयबुद्धपरिमाणं करेइत्ति भणितं, पत्तेयबुद्धा वेत्तिया चेवत्ति, चोदक आह--णणु पेत्तयबुद्धा सिस्सभावो य विरुज्झए, आचार्य्याह--तित्थगरपणीयसासणपडिवण्णत्तणतो, तस्सीसो भवतीत्यर्थः, भणितं कालियसुतं, अंगबाहिरं च ॥ इदाणिं अंगपविट्ठं—

(से किं तं अंगपविट्ठं (४५--२०९) इत्यादि (से किं तं आयारे ४५--२०९) सूत्रं, आयरणं आयारो गोयरो भिक्खागहणविहाणं विणओ नाणाइओ विविधो वावण्णविधाणो वा वेणइया-सीसा तेसिं जहा आसेवणसिक्खा भासा सच्चा असच्चमोसा य एयं सव्वं आयारे अभासामोसा सच्चामोसा य, चरणं 'वयसंजम' गाधा करणं 'पिंडस्स जा विसोधी' गाहा, जत्तत्ति य संजमजत्ता तस्स साहणत्थं आहारो मत्तत्ति-

मात्रा, कुतो घेत्तव्वो? वर्तनं वृत्तिः, एयं सव्वं आयारे अग्घविज्जइत्ति आख्यायते, सुत्तमत्थस्स य पदाणं वातणाओ परित्ता, अणंता ण भवंति, आदिअंतोवलंभत्तणतो, अहवा उस्सप्पिणिकाले वा पडुच्च तीताणागतसव्वद्धं वा पडुच्च अणंता, उव्वक्कमादिणामादिणिक्खेवकरणं च अणुयोगदारा ते आयारे संखेज्जा, तेसिं पण्णवगवयणत्तो गोचरत्तणतो, वेढो छंदजाती, पडिवत्तिओत्ति दव्वादिपयत्थब्भुवगमो, पडिमाभिग्गहविसेसा य पडिवत्तीतो ते समासतो सुत्तपडिबद्धा संखेज्जा, तिविहा जेण णिक्खेवमादिणिज्जुत्ती तेण संखेज्जा, णव बंभचेरा पिंडेसणा सेज्ज इरिया भासज्जाय वत्थेसणा पादेसणा उग्गहपडिमा सत्त सत्तिक्कया भावणा विमुक्ती, एवं ते पंचासी हवेज्जा, पणवीसं अज्झयणा, पंचासीतिउद्देसणकाला, कथं?, उच्यते, अंगस्स सुतखंधस्स अज्झयणस्स उद्देसगस्स एते चउरोवि एक्को उद्देसणकालो, एवं सत्थपरिण्णाए सत्त उद्देसणकाला लोगविजयस्स छ सीतोसणेज्जस्स चउरो सम्मत्तस्स चउरो लोगसारस्स छ धुअस्स पंच महापरिण्णाए सत्त विमोहज्झयणस्स अट्ठ उवधाणसुत्तस्स चउरो, पिंडेसणाए एक्कारस, सेज्जाए तिण्णि, भासजायाए दो, पादेसणाए दो उग्गहपडिमाए दो, सत्तिक्कयाणं सत्त, भावणाए एक्को, विमोत्तीए एक्को एते सव्वे पंचासीति, चोदक आह-जति दो सुतखंधा पणुवीसअज्झयणाण अट्ठारससहस्सा पदग्गेणं भवति, जतो भणितं'णवबंभचेरमयितो अट्ठारसपदसहस्सितो वेओ' त्ति एतं विरुज्झति, आचार्य आह-णणु एत्थवि भणितं 'सपंचचूलो अट्ठारसपदसहस्सितो वेदो' त्ति, इह सुत्तालावगपदेहिं सहितो बहु बहुतरो य वक्तव्येत्यर्थः, अहवा दो सुतखंधा पणुवीसं अज्झयणा य एते आयारग्गसाहितस्स आयारस्स पमाणं भणितं, अट्ठारसपदसहस्सा पुण पढमसुयक्खंधस्स णवबंभचेरमइयस्स पमाणं, विचित्तत्थपदा य सुत्ता, गुरूवदेसा तेसिं अत्थो भणितव्वो, अक्खररयणाए संखेज्जा अक्खरा, अभिधाणाभिधेयवसतो गमा भवंति, ते अणंता इमेण विहिणा-सुतं मे आउसंतेणं भगवता, सुतं मेआ तदासु मे आउसंतेहिं सुतं मे आसुयं मे आतं, सुतं मया आतदा सुयमदा अहिं सुयं मया आ एवमादिगमेहिं भण्णमाणं अणंतगमं, अक्खरपज्जएहिं अत्थपज्जएहिं य

अणंतं, परित्ता तसा अणंता ण भवंति, अणंता थावरा वणप्फइसहिता, सासतत्ति पंचत्थिकाइयाइया कडात्ति कित्तिमा पयोगातो वीससापरिणासतो वा जहा अब्भा अब्भरुक्खादी, जहा एते सव्वे आयारे सुत्तेण णिबद्धा णिज्जुत्तिसंगहणीहेतूदाहरणादिएहि य निकाइया, किंच-एते अण्णे य जिणपण्णत्ता-जिणप्पणीया भावा आघविज्जंति जाव उवदंसेज्जंति, एतेसिं पदाणं पूर्ववद् व्याख्या, एवंविधमायारं धिज्जिउं से पुरिसे एवं जधा आयारणिबद्धा परूविता य तधा सव्वभावाणं णाता भवति, विविधेति अणेगधा जाणमाणो विण्णाता भवति, अण्णवावादुगेहिंतो वा विसिट्ठतरे व विसिट्ठयरं वा जाणमाणो विण्णाता भवति, सेसं णिगमणंतं सुत्तं कंठ्यं, सेतं आयारो ॥ 'से किं तं सुयगडे' त्यादिसूत्रं (४७-२१२) सूइज्जइत्ति जधा णट्ठा सूई तंतुणा सूइज्जइ, उवलभ्यतेत्यर्थः, अथ सूति पडं वुतेइ तधा सूयगडो जीवाइपदत्था सूइति, वूहं किच्चाति प्रतिव्यूहं तेन प्रतिव्यूहेन तेन परप्पवादी णिप्पट्ठपसिणं काउं ससमयस्स सब्भावे ठविज्जइ, उद्देसयपरिमाणाओ उद्देसणकाला जाणेज्जा, सेसं कंठ्यं, सेतं सूयगडे ॥ 'से किं तं ठाणे' त्यादिसुत्तं (४८-२२८) ठाविज्जंवित्ति स्वरूपतः स्थाप्यन्ते, प्रज्ञाप्यन्ते इत्यर्थः, छिन्नतडं टंकं कूडात्ति जधा वेदड्डस्सोवरि णव सिद्धायतणादिया कूडा, हिमवंतादिया सेला, सिहरेण सिहरी, जधा वेदड्डो, जं कूडं उवरि अंवखुज्जयं तं पब्भारं, जं वा पव्वयस्स उवरिभागे हत्थिकुंभागिती कुडहं णिग्गतं तं पब्भारं, गंगाइया कुंडा तिमिसादिया गुहा रुप्पसुवण्णरयणादिया आगरा पुंडरीयादीया दधा, गंगासिंधूमादियाओ णदीओ, सेसं कठ्यं, से तं ठाणं । 'से किं तं समवाय' इत्यादि ( ४९--२२९ ) समवाए णिक्खेवो चउव्विहो, दव्वे सचित्तादिदव्वसमवायो, भावसमवातो इमं चेव अंगं, अहवा जत्थ वा पसत्था उदयाई बहू भावा संणिवादियजोगा वा भावसमवातो, भावसमवाए वा इमं णिरुत्तं जीवा समासासिज्जति समं असिज्जति समंति ण विसमं जधावत्थितं अनूनातिरिक्तं इत्यर्थः आश्रीयते बुध्यते ज्ञानेन गृह्यतेत्यर्थः, अहवा समासत्ति इह मग्गेऽभिहितं सव्वपदत्थाण समासतो विसरिसोत्ति, सेसं कंठ्यं, उक्तं समवायं । 'से किं तं वियाधे' त्यादी (५०--२२९)

वियाहित्ति व्याख्या इह जीवादयो व्याख्यायंते, इह सतं चेव अज्झयणसन्नं, गोयमादिएहिं पुट्ठे अपुट्ठे वा जो पण्हंतवागरणं, सेसं कंठ्यं से तं वियाहि ॥ 'से किं तं णाताधम्मकहे' त्यादि सूत्रं (५१-२३०) एगूणवीसं णातज्झयणा, णातात्ति आहरणा, दिट्ठंतियो वा णज्जइ ते णाता, एते पढमसुयखंधे, अहिंसादिलक्खणस्स धम्मस्स कहा धम्मकहा, धम्मियाओ वा कहाओ धम्मकहाओ, अक्खाणगात्ति वुत्तं भवति, एते वितियसुतखंधे, दस धम्मकहाणं वग्गा, वग्गोत्ति समूहो, तव्विसेसणविसिट्ठा दस अज्झयणा वेते दट्ठव्वा, एगूणवीसं णाता दस य धम्मकहातो, तत्थ णातेसु आदिया दस णाता चेव, णेतेसु अक्खाइयादिसंभवो, सेसा णव णाता, तेसु एक्केक्के णाते चत्तालीसं अक्खादियाओ भवंति, तत्थवि एक्केकाए अक्खाइयाए पंच पंच उवक्खाइयसयाइं भवंति, तेसुवि एक्केकाए उवक्खाइयाए पंच पंच अक्खाइयउवक्खाइयसयाइं भवंति, एवं एते णव कोडीओ, ताओ धम्मकहासुं सावेतव्वत्तिकाउं एकूणवीसाए णाताणं दसण्ह य धम्मकथाणं विसेसो कज्जइ, दस णाता दसणव धम्मकथाओ, दसहिं परोप्परा सुद्धा, एवं विसेसे कते सेसा णव णाता, ते णाया चतालीसाए गुणिता, जाता तिण्णि सया सट्ठा अक्खाइताणं, एते अक्खाइया पंचसतेहिंतो सोभिता, तत्थ सेसं चत्ताळं सतं, तं उवक्खाइयपंचसतेहिं गुणितं, जाता उवक्खाइयाणं सत्तरिसहस्सा, ते इणिंह अक्खाइतोवक्खाइयसतेहिं गुणिता, एवं जाया अद्धुट्ठातो अक्खाइयकोडीओ, पदग्गेणंति उवसग्गपदं निवातपदं णामितपदं अक्खातपदं मिस्सपदं च, एते पदे अधिकिच्च पंच लक्खा छावत्तरिं च सहस्सा पदग्गेणं भवंति, अथवा सुत्तालावयपदग्गेणं संखेज्जाइं पदसहस्साइं भवंति, अहवा छोहत्तरावि त सहस्स पंचलक्खावि संखेज्जपदसहस्सेहिं ण विरुज्झंति, सेसं कंठ्यं, 'से तं णाताधम्मकहाओ॥ 'से किं तं उवासगदसाओ' इत्यादि सुत्तं (५२-२३१) 'उवासय'त्ति सावता तेसिं अणुव्वयगुणसीलवतोवदेसणा दससु अज्झयणेसु अक्खातिज्जति उवासगदसा भणिता, तासु य पदग्गं एक्कारस लक्खा बावण्णं च सहस्सा पदग्गेणं, सुत्तालावयपदेहिं संखेज्जाणि वा पदसहस्साइं पद-

ग्गेणं, सेसं कंठ्यं, 'से तं उवासगदसाओ' ॥ 'से किं तं अंतगडदसाओ' इत्यादि सुत्तं (५३-२३२) 'अंतकडदस'त्ति कम्मणो संसारस्स वा अंतो कडो जेहिं, ते य तित्थगरादी, ते पढमवग्गो दसज्झयणंति तस्संखतो अंतकडदसत्ति, अहवा दसात्ति अवत्था, तेसिं जा अवत्था सा वण्णिज्जतित्ति अतो अंतकडदसा, सरीरा धुज्झणे वा दसण्हं अंतकगेत्ति अंतकडदसा, णवरं अंतकडकिरियाओत्ति अस्य व्याख्या-अंतकडाणं किरिया अंतकडकिरिया, बहूणं ता अंतो कडे किरियाओत्ति भणिता, किरियात्ति क्रिया कडावल्या इत्यर्थः, अहवा किरियत्ति कर्मक्षपणक्रिया ससेलेसादिअवत्थाए, अहवा किरियत्ति सुहुमकिरियं झाणं, अहवा घातिकम्मेसु अंतकडेसु किरियत्ति कम्मबंधो, सो य इरियावहितोत्ति भणितं भवति, आघविज्जइ, वग्गोत्ति समूहो, सो य अंतकडाणं अज्झयणाणं वा, सव्वे अज्झयणा जुगवं उद्दिस्संति, तासु सुत्तपदग्गा तेवीसं लक्खा चउरो य सहस्सा पदग्गेणं, संखेज्जाणि वा पदसहस्साणि सुतालावगा अ पदग्गेणं, सेसं कंठ्यं, से तं अंतकडदसा'॥ 'से किं तं अणुत्तरोववाइयदसा' इत्यादि सुत्तं ( ५४-२३३ ) णत्थि जस्सुत्तरं सो अणुत्तरो, उववज्जणमुववातो उप्पत्तीत्यर्थः, अणुत्तरो उववाओ जस्स सो अणुत्तरोववाइतो तेसिं, बहुवयणाओ अणुत्तरोववाइयत्ति वग्गे वग्गे दसज्झयणात्ति अतो अणुत्तरोववाइयदसा भणिता, संसारे सुहभावं पडुच्च अणुत्तरं, अहवा गतिचउक्कं पडुच्च अणुत्तरं, अहवा देवगतीए चेव अणुत्तरं, अणुत्तरदेवेसु जेसिं उववातो तेसिं णगरादिया कहिज्जंति, इह वग्गोत्ति समूहो, सो य अज्झयणाणं, वग्गे वग्गे दस अध्ययणा इत्यर्थः, तेसिं पदसंखा छायालीसं लक्खा अट्ठ य सहस्सा, संखेज्जाणि वा पदसहस्साणि, सेसं कंठ्यं 'से तं अणुववाइयदसा' (अणुत्तरोववाइयदसा) ॥ 'से किं तं पण्हावागरणाइं' इत्यादि सूत्रं ( ५५-२३४ ) पण्होत्ति पुच्छा, पडिवयणं वागरणं प्रत्युत्तरमित्यर्थः, तम्हि पण्हावागरणे अंगे पंचासवदारादिका व्याख्येया परप्पवादिणो य अंगुट्ठबाहूप्पासिणादियाणं च पसिणाणं अट्ठुत्तरं सतं, किंच-जे विज्जमंता विवाए जविज्जमाणा अपुच्छिता चेव सुभासुभं कहयंति तारिसाणं अपासिणाणं अट्ठुत्तरं सयं

अंगुट्ठाइपसिणभावं चेव करेंति तं तारिसाणं पसिणापासिणवज्जाणं अट्ठुत्तरं सयं, अहवा अणंतरा जे कहिता ते पासिणा परंपरे पसिणापासिणा तं पुण विज्जाकहितस्स परंपरे भवति, अण्णे य विविधातिसया कहेज्जंति, किं वा णागा सुवण्णा अण्णे य भवणवासिणो ते विज्जमंतागरिसिता आगता साधुणा सह संवदंति-जल्पं करेंति, पाठान्तरं वा दिव्वा संघाया संवयंति त दुमुक्खा संभवंति, वरदाधावगतादि वा कुर्वंति, दसमस्संगस्स पदग्गं दोणउतिलक्खा सोलस य सहस्सा, पदग्गेणं संखेज्जाणि वा पदसहस्साणि, सेसं कंठ्यं, 'से तं पण्हावागरणं ॥ 'से किं तं विवागसुतं' इत्यादि ( ५६-२३४ ) विविधो पाकः विपचनं विपाकः कर्मणां सुभमसुभो जंमि वा सुत्ते विपाको काहिज्जइ तं विपाकसुत्तं, विपाकसुत्तस्स सुतपदग्गं एगा पदकोडी चुलसीती च लक्खा बत्तीसं च सहस्सा पदग्गेणं, संखेज्जाणि वा पदसहस्साइं पदग्गेणं, सेसं कंठ्यं,

'से किं तं दिट्ठिवाति'ति ( ५७-२३५ ) दृष्टिर्दर्शनं वदनं वादः दृष्टीनां वादः दृष्टिवादः तत्र वा दृष्टीनां पातो दृष्टिपातः, सभेदभिण्णातो सव्वणतदिट्ठीतो तत्थ वयंति पतंति वत्ति अतो दिट्ठिवातो, सो य पंचभेदो परिकम्मादि, तत्थ परिकंमात्ति जोगकरणं, जधा गाणितस्स सोलस परिकम्मा तग्गाहितसुतत्थो सेसगणितस्स जोगो भवाते, एवं गाहिदपरिकम्मसुत्तत्थो सेससुत्ताइदिट्ठिवादसुतस्स जोगो भवति, तं च परिकम्मं सिद्धसेणितपरिकम्मादिथूलभेदयो सत्तविधं उत्तरभेदयो तेसीतिविधं मातुअपदादी, तं च सव्वं मूलुत्तरभेदं सुत्तत्थओ वोच्छिण्णं जधागतसंपदातं वा वच्चं, किं च-एतेसिं सत्तण्हं परिकम्माणं जे आदिमा परिकंमा ससमयिका, स्वसिद्धान्तप्रज्ञापना एवेत्यर्थः, आजीविया पासंडत्था गोसालयवत्तिता, तेसिं सिद्धन्तमतेण चुताचुतसेणिता सत्त परिकम्मा पण्णविज्जंति । इयाणिं परिकम्मे णयचिंता-णेगमो दुविहो-संगहितो असंगहिओ य, संगहितो संगहं पविट्ठो, असंगहितो ववहारं, तम्हा संगहो ववहारो रिजुसुतो सद्दाइया य एक्को, एवं चउरो णया, एतेहिं छ ससमइकाइ परिकम्माइं चिंतिज्जंतित्ति, अतो भणितं 'चउक्कणइयाणं' ति, ते चेव जीवकाए

तेरासिता भणिता, कम्हा ?, उच्यते, जम्हा ते सव्वं जगं त्र्यात्मकं इच्छंति, जस्स जीवो अजीओ जीवाजीवा, लोए अलोए लोयालोया, संते असंते सन्तासंतो, एवमादिनयचिंताए चिन्तेन्ति, तिविहं णयमिच्छंति, तंजहा-दव्वठितो पज्जवठितो उभयठितो य, अतो भणितं 'सत्त तेरासियाइं' ति सत्त परिकम्मा तेरासिया पाखंडत्था तिविधाए णयचिंताए चिंतयंतीत्यर्थः 'सुत्ताइं'ति उज्जुसुताइयाइं बावीसं सुत्ताइं, सव्वदव्वाण सव्वपज्जवाण सव्वणयाण सव्वभंगविकप्पणोवदंसगाणि, सव्वस्स णयगतस्स यऽत्थस्स सूयगत्ति सूयणतो सुत्ता भणिता जधाभिधाणत्थातो, ते य इदाणिं सुत्तत्थतो वोच्छिण्णा, जहागतसंप्रदायतो बोद्धव्वा, ते चेव बावीसं सुत्तावि भगवतो अट्ठासीतिं सुत्ता भवंति इमेण विधिणा-बावीसं सुत्ता विच्छिन्नछेयणयाभिप्पायया, कहं छेदछेदणतो छेदणतोवि भण्णति ?, उच्यते, जो ततो सुतं छिण्णं छेदेण इच्छइ जधा 'धम्मो मंगलमुक्किट्ठं' ति सिलोगो, एस सिलोगो सुत्तत्थतो पत्तेयभेदेण ठितो, णो बितियाइसिलोगे अवेक्खइत्ति वुत्तं भवति, छिण्णो छेदो जस्स स भवति छिण्णछेदः, प्रत्येकं कप्पितपयतेत्यर्थः। एते एवं बावीसं ससमयसुत्तपरिवाडीए सुत्तादि, ता एते चेव बावीसं अछिण्णछेदत्तणताऽभिप्पायतो आजीवियसुत्तपरिवाडीए ठिया अच्छिण्णछेदणतो, जधा एसेव दुमपुप्फियापढमसिलोगो अत्थतो बितियाइसिलोगे अविक्खमाणो बितिए य पढमं, अच्छिण्णच्छेदणयाभिप्पायतो भवति, एवंपि बावीसं सुत्ता अक्खररयणठितावि अत्थयो अण्णोण्णमवेक्खमाणा अछिण्णछेयत्तणयठियात्ति भण्णति, णयचिंताए बावीसं चेव सुत्ता 'तेरासितेणं तिकणइयाइं'न्ति त्रिकनयाभिप्रायतो चिंत्यंतेत्यर्थः, तधा ससमएवि णयचिंताए बावीसं चेव सुत्ता चउक्कणइया, एवं चउरो बावीसातो अट्ठासीइं सुत्ता भवति, से तं सुत्ताइं॥ से किं तं पुव्वगतं?, कम्हा पुव्वगतंति ?, उच्यते, जम्हा तित्थकरो तित्थपवत्तणकाले गणहरा सव्वसुताधारत्तणतो पुव्वं पुव्वगतसुत्तत्थं भासइ तम्हा पुव्वंति भणिता, गणधरा सुत्तरयणं करेन्ता आयाराइरयणं करेंति ठवेंति य, अण्णायरियमतेणं पुण पुव्वगतसुत्तत्थो पुव्वं

अरहता भासिया गणहरेहिवि पुव्वगतं चेव पुव्वं रइयं पच्छा आयाराइ, एवमुत्तो चोदक आह-णणु पुव्वावरविरुद्धं, कम्हा ?, आयारणिज्जुत्तीए भणितं-'सव्वेसिं आचारो०' गाहा, आचार्याह-सत्यमुक्तं, किंतु ठावणा, इमं पुण अक्खररयणं पडुच्च भणितं, पुव्वं पुव्वा कता इत्यर्थः, ते य उप्पायपुव्वादय चोद्दस पुव्वा पण्णत्ता, पढमं उप्पायपुव्वंति-तत्थ सव्वदव्वाणं पज्जवाण य उप्पायभावमंगीकाउं पण्णवणा कया, तस्स पदपरिमाणं एका पदकोडी, बितियं अग्गेणीयं, तत्थवि सव्वदव्वाण पज्जवाण य सव्वजीवविसेसाण त अग्गं-परिमाणं णउतिपदसहस्सा, तइयं वीरियपवायं, तत्थवि अजीवाण जीवाण य सकामेतराण वीरियं प्रवदंतीति वीरियप्पव्वादं तस्सवि चत्तारि पदसहस्सा, चउत्थं णत्थिअत्थिप्पवायं, जं लोगे जधा अत्थि णत्थि वा अहवा सितवायाभिप्पाददो तदेवास्ति नास्तीत्येवं प्रवाद इति अत्थिणत्थिप्पवादं भणितं, तंपि पदपरिमाणतो सट्ठिं पदसहस्साणि, पंचमं णाणप्पवादंति, तम्मि मइणाणाइपंचकस्य सप्रभेदं प्ररूपणा जम्हा कता तम्हा णाणप्पवादं, तंमि पदपरिमाणं एगा पदकोडी एगपदूणा, छट्ठं सच्चप्पवादं, सच्चं-संजमो तं सच्चवयणं वा, तं सच्चं जत्थ सभेदं सपडिवक्खं च वण्णिज्जइ तं सच्चप्पवायं, तस्स पदपरिमाणं एगा पदकोडी छप्पदधिया, सत्तमं आयप्पवातं, आयत्ति-आत्मा सोऽणेगधा जत्थ णतदरिसणेहिं वण्णिज्जइ तं आयप्पवादं, तस्सवि पदपरिमाणं छव्वीसं पदकोडीओ, अट्ठमं कम्मप्पवादं, णाणावरणाइयं अट्ठविहं कम्मं पगतिठितिअणुभागप्पदेसादिएहिं भेदेहिं अण्णेहिं उत्तरुत्तरभेदेहिं जत्थ वण्णिज्जइ तं कम्मप्पवादं, तस्सवि पदपरिमाणं एगा पदकोडी असीतिं च पदसहस्साणि भवंति, णवमं पच्चक्खाणं, तंमि सव्वपच्चक्खाणसरूवं वण्णिज्जइत्ति अतो पच्चक्खाणप्पवादं, तस्स पदपरिमाणं चउरासीति पदसहस्साणि भवंति, दसमं विज्जणुप्पवातं, तत्थ य अणेगे विज्जाइसया वण्णिता, तस्स पदपरिमाणं एगा पदकोडी दस य पदसहस्साणि, एगादसमं अवंझंति, वंझं णाम णिप्फलं ण वंझमवंझं सफलेत्यर्थः, सव्वे णाणतवसंजमजोगा सफला वण्णिज्जंति अप्पसत्था य पमादादिया

सव्वे असुभफला वण्णिता अतो अवंझं, तस्सवि पदपरिमाणं एकवीसं पदकोडी, बारसमं पाणाउं, तत्थ आयुप्रमाणं सविहाणं सव्वं सतिपदं अण्णे य प्राणा वर्णिता, तस्स पदपरिमाणं एगा पदकोडी छप्पण्णं च पदसयसहस्सा, तेरसमं किरियाविसालं, तत्थ कायकिरियादओवि सासति सभेदा संजमकिरियाओ य बंधकिरियाविधाणा, तस्सवि पदपरिमाणं णव कोडीओ, चोद्दसमं लोगबिंदुसारं, तं च इमंसि लोए सुयलोए वा बिंदुसारं भणितं, तस्स पदपरिमाणं अद्धतेरस पदकोडीओ ॥ इदाणिं **अणुयोगोत्ति** अनुयोग इत्येतत्, अनुरूपो योग अनुयोग इत्येवं सर्व एव सूत्रार्थो वाच्यः, इह जन्मभेदपर्यायशिक्षादि योगः, विवक्षितोऽनुयोगो वाच्यः, स च द्विविधो-मूलपढमाणुयोगो गंडिकाविशिष्टश्च, तत्थ मूलपढमाणुयोगेत्ति, इह मूलभावस्तु तीर्थकरः, तस्स प्रथमं पूर्वभवादि अथवा मूलस्स पढमा भवाणुयोगो एत्थ तित्थगरस्स अतीतभवभावा वट्टमाणवयजम्मादिया भावा कहेज्जंति, अहवा जे मूलस्स पढमा भावा ते मूलपढमाणुयोगो, एत्थ तित्थकरस्स जे भावा प्रसूतास्ते परियायपुरिसत्ताइ भाणियव्वा, **'गंडियाणुयोगो'**त्ति-इक्खुमादिपर्वकंडिकावत् एकाधिकारत्तणतो गंडियाणुयोगो भण्णति, ते च कुलकरादियातो विमलवाहणादिकुलकराणं पुव्वभव्वजम्मणामप्पमाण०गाहा, एवमादि जं किंचि कुलकरस्स वत्तव्वं तं सव्वं कुलकरगण्डियाए भाणितं, एवं तित्थगरादिगंडियासुवि, **'चित्तंतरगंडिय'** त्ति, चित्ता इति अनेकार्थाः अंतरे इति उसभअजियंतरे वा दिट्ठा, गंडिका इति खंडं, अतो चित्तंतरे गंडिका दिट्ठा, तो तेसिं **परूवणा** पुव्वायरिएहिं इमा निद्दिट्ठा—

आदिच्चजसादीणं उसभस्स **पओप्पए** णरवतीणं । सगरसुयाण सुबुद्धी इणमो संखं परिकथेइ ॥ १ ॥ चोद्दस लक्खा सिद्धा णिवईणेक्को य होति सव्वट्ठे । एवेक्केक्के ठाणे पुरिसजुगा होंतऽसंखेज्जा ॥ २ ॥ पुणरवि चोद्दस लक्खा सिद्धा णिवदीण दोण्णि सव्वट्ठे । जुगठाणे-

वि असंखा पुरिसजुगा होंति णायव्वा ॥ ३ ॥ जाव य लक्खा चोद्दस सिद्धा पण्णास होंति सव्वट्ठे। पण्णासट्ठाणेवि य पुरिसजुगा होंतिऽसंखेज्जा ॥ ४ ॥ एगुत्तरा दुलक्खा सव्वट्ठाणे य जाव पण्णासा। एक्केक्कुत्तरठाणे पुरिसजुगा होंतिऽसंखेज्जा ॥ ५ ॥ विपरीयं सव्वट्ठे चोद्दसलक्खा य निव्वुओ एगो। सच्चेव य परिवाडी पण्णासा जाव सिद्धीए ॥ ६ ॥ तेण परं लक्खादि दो दो ठाणा य समग वच्चंति। सिवगतिसव्वट्ठेहिं इणमो तासिं विधी होइ ॥ ७ ॥ दो लक्खा सिद्धीए दो लक्खा णरवदीण सव्वट्ठे। एवं तिलक्खचउ पंच जाव लक्खा असंखेज्जा ॥ ८ ॥ सिवगतिसव्वट्ठेहिं चित्तंतरगंडिता ततो चउरो। एगा एगुत्तरिया एगादि बितिउत्तरा तइया ॥ ९ ॥ ततिएगादि तिओत्तर तिगमादि ओत्तरा चउत्थे य। पढमाए सिद्धेक्को दोण्णि य सव्वट्ठसिद्धंमि ॥ १० ॥ तत्तो तिण्णि णरिंदा सिद्धा चत्तारि होंति सव्वट्ठे। इय जाव असंखेज्जा सिवगतिसव्वट्ठ सिद्धेहिं ॥ ११ ॥ ताए विउत्तराए सिद्धेक्को तिण्णि होंति सव्वट्ठे। एवं पंच य सत्त य जाव असंखेज्ज दो तिन्नि ॥ १२ ॥ एग चउ सत्त दसगं जाव असंखेज्ज होंति दो तिण्णि। सिवगतिसव्वट्ठेहिं तिउत्तरा एत्थ णेयव्वा ॥१३॥ ताहे तियगादिबिउत्तराए अऊणतीसं तु तियग ठावेउं। पढमे उ णत्थि खेवो सेसेसु इमे भवे खेवा ॥ १४ ॥ 'दुग पण नवगं तेरस सत्तरस दुवीस छच्च अट्ठेव। बारस चोद्दस अथ अट्ठवीस छव्वीस पणुवीसा ॥ १५ ॥ एक्कारस तेवीसा सीयाला सतरि सतहत्तरी वहय। इग दुग सत्तासीती एगत्तरिमेव छावट्ठी ॥ १६ ॥ अउणत्तरि चउवीसा बायालसयं तहेव छव्वीसा। एए रासीक्खेवा तिगअंतता जहाकमसो ॥१७॥ सिवगतिसव्वट्ठेहिं दो दो ठाण विसमुत्तरा णेया ॥ जावूणतीसठाणे उणतीसं पुण छवीसाए ॥ १८ ॥ विसमुत्तरा य पढमे एवमसंखविसमुत्तरा णेया। सव्वट्ठवि अंतिल्लं अण्णाए आदिमं ठाणं ॥१९॥ अउणत्तीसं वारा ठावेउं णत्थि पढम पक्खेवो। सेसे सगवीसाए सव्वत्थ दुगादिउक्खेवो ॥२०॥ सिवगतिपढमादीए वितियाए तह य होति सव्वट्ठे। इय एगंतरियाइं सिवगतिसव्वट्ठठाणाइं ॥ २१ ॥

एवमसंखेज्जाओ चित्तंतरगंडियाओ णेयव्वा । जाव जियसत्तु राया अजियजिणपिया समुप्पण्णो ॥ ३२ ॥ एवं गाहाहिं चित्तंतरगंडिया सम्मत्ता । इमा एतासिं ठवणा —

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| एत्तिया लक्खा सिद्धा— | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |
| एत्तिया सव्वट्ठगया— | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

एवं जाव असंखेज्जा पुरिसजुगा सिद्धा, एसा पढमा, अतो परं सिद्धा लक्खा

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| सिद्धा एत्तिया लक्खा— | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| सव्वट्ठंमि गया एत्तिया लक्खा | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |

सव्वट्ठे लक्खा जाव असंखेज्जा पुरिसजुगा सिद्धा, एसा बीया, अओ परं एत्ति-

अलक्खा सिद्धा सव्वट्ठेऽवि एत्तिया एगादि एगुत्तरं दोवि गच्छंति

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |

एवं जाव असंखेज्जा आवलिया । आवलिया दूरगमणाओ पंचासीइमे ठाणे चिट्ठंति, एसा तइया गंडिया, अतः परं चतस्रो गंडिया एकोत्तरा प्रदर्श्यंते ।

एगाइ एगुत्तरा पढमा णेया एगादि सिद्धा एवं जाव असंखेज्जा. एगादि सिवगति बिउत्तारिया सव्वट्ठे लक्खा. तिउत्तरा तइया चित्तंतरगंडिया.

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | ३ | ५ | ७ | ९ | ११ | १३ |
| २ | ४ | ५ | ८ | १० | १२ | १४ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | ५ | ९ | १३ | १७ | २४ | ७२ | द्धा९ |
| ३ | ७ | ११ | १५ | १९ | ४२ | २७ | १०३ |

| | | | | | |
|---|---|---|---|---|---|
| १ | ७ | १३ | १९ | २५ | ३१ |
| ४ | १० | १५ | २२ | २८ | ३४ |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| २९ | ३४ | ४२ | ५१ | ३७ | ४३ | ५५ | ४० | ७६ | १०६ | ३१ |
| ३१ | ३८ | ४६ | ३५ | ४७ | ५७ | ५४ | ४२ | ९९ | ३० | ११६ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | ८ | १५ | २५ | ११ | १७ | २१ | १४ | ५० |
| ६ | १२ | २० | ९ | १५ | १३ | २८ | २६ | ७३ |

एवं गाहाणुसारेण णायव्वं जाव असंखेज्जा । चूलत्ति सिहरं दिट्ठिवाते जं परिकम्मसुत्तपुव्वपुव्वाणुओगे य भणितं तच्चूलासु भणितं, ता य चूलाओ आदिल्लपुव्वाण चउण्हं, चूलवत्थू भणितातो चेव सव्वुवरि ठविस्ता पढिज्जंति य, अतो ते सुतपव्वयचूला इव चूला, तेसिं जहक्कमेणं संखा, चतु बारस अट्ठ दस य भवंति चूडा चउण्ह पुव्वाणं । एए य चूलवत्थू सव्वुवरिं किल पढिज्जंति ॥ १ ॥ संखेज्जा वत्थू, पणुवीसुत्तरा दो सता, संखेज्जा चूलवत्थुत्ति चउतीसं,(*८५--२४६)अणंता भावात्ति भवनं भूतिर्वा भावः, ते य जीवाजीवात्मका अणंता प्रति-

बद्धा, अणंता अभावत्ति अभवनं अभावः अभूतिर्वा, जम्हा जीवा अजीवत्तेण अभावः अजीवो य जीवत्तेण, घडो पडत्तेण पडो य घडत्तेण, एमादि अणंता अभावा प्रतिबद्धा, अहवा जे जहा जावइया भावा तेसिं पडिपक्खतो तावइया चेव अणंता अभावा भवंति, 'अणंता हेउ' त्ति पंचदसावयववयणे सपक्खधम्मसपक्खत्तअभिलसितसज्झसाधकं वयणं हेतू भवति, अहवा सव्वजुत्तिजुत्तं वदणं हेतू भण्णति, अहवा सव्वे जिणवयणपहा हेतू प्रतिपादकत्तणतो, णिद्दोसहेतुवयणं वा, सुत्तस्स य अणंतगमत्तणतो, एवं अणंता अहेतू, भाणितपडिपक्खो, ते य अणंता चेवाहेतू, अणंता कारणत्ति कज्जसाहयं कारणंति, ते य पयोगवीससातो अणंता भाणियव्वा, जं च जस्स असाधकं तं तस्स अकारणं, जहा चक्कदंडादयो पडस्स, एवं अणंता अकारणा, अणता जीवा इत्यादि कंठ्यं, 'इच्चेयं दुवालसंगं गणिपिडगं तीते काले अणंता जीवा आणाय विराधेत्ता इत्यादि, (५८-२४७) दुवालसंगं गणिपिडगं तिविहं पण्णत्तं-सुत्ततो अत्थतो तदुभयओ, एसेव आणा तिविहा सुत्ताणा अत्थाणा तदुभयाणा य, एगट्ठिता तहवि अभिहाणतो विसेसो कज्जइ, यथा आज्ञाप्यते एभिः तदा आज्ञा भवति, तंतुभिः पटं व्यय, देवदत्तवत् आज्ञाप्यते यया हितोपदेशः तदा आज्ञा इति । इदाणिं एतेसिं विराहणा चिंतिज्जइ, जं सुत्ततो दुवालसंगं गणिपिडगं तं अत्थतो भणितं अभिणिवेसेण अण्णहा पण्णवेंतो ताए अत्थाणाए सुत्तं विराहित्ता तीते कालेऽणंता जीवा संसारं भमियपुव्वा गोट्ठामाहिलवत्, अहवा जं अत्थतो जं दुवालसंगं गणिपिडगं सुत्ततो अभिनिवेसेण अण्णहा पढित्ता ताए सुत्ताणाए अत्थं विराहेत्ताऽतीते कालेऽणंता जीवा संसारं भमियपुव्वा जहा जमाली, अहवा आणंति पंचविहायाराराधणसीलत्ता गुरुणो हितोवदेसवदणं आणाए अण्णहा आयरंतेण गणिपिडगं विराधितं भवति, एवं तीए काले अणंता जीवा संसारं भमियपुव्वा, एसो अक्खरसमो अत्थो, इमो यऽणक्खरसमो-आणाए विराधेत्ता इति, जहा छायाए भुंजित्ता गतो, णो छायाए करणभूयाए भुंजेत्ता, किं तु छायायां भुक्त्वा गतोत्ति, एवं आज्ञायां विराधनं कृत्वा, सा य आणा इमा-

इच्चेइयं दुवालसंगं गणिपिडगं आणाए विरोहत्ता' सेसं पूर्ववत्, पडुप्पण्णअणागतेसु एवं चेव वत्तव्वं, णवरं पडुप्पण्णे काले परित्ता जीवा इति, अणंता असंखेज्जा य ण भवातित्ति, मणुयाणं संखेज्जत्तणतो, आराहणसुत्तेसु एवं चेव वत्तव्वं, ण कयाती णासी अतीतकाले नास्तित्व-भावप्रतिषेधकं सूत्रं, 'भुविं च' इत्यादि त्रिकाले अस्तित्वसाधकं सूत्रं, त्रिकालभावणता चेव अचलता, ठिच्चा धुवा मेर्वादिवत्, धुवत्तणतो चेव जीवादिणवपदत्थेसु नियुक्तं नियतं जधा लोकवचनं पंचास्तिकायेष्विव, णियत्तणतो चेव सासयं शश्वद् भवतीति समयावलिकामुहूर्तदिनादि-ष्वाकालं, सासयत्तणतो चेव वायणादिसु अक्खयं, नास्ति क्षयो अक्षयं गंगासिंधुपवाहिष्वपि पोंडरीयादिहदवत्, अक्खयत्तणतो चेव अव्ययं नास्य व्ययो अव्ययं, मानुषोत्तरा बहियसमुद्रवत्, अव्वयत्तणतो चेव स्वप्रमाणे अवट्ठितं जंबूद्दीपादिवत्, अक्खयत्तणतो चेव सव्वहा चिंतिज्ज-माणं णिच्चं आकाशवत्, अविनाशीत्यर्थः, अहवा एते धुवादिया एगट्ठिया, चोदक आह-इच्चेवं दुवालसंगं धुवादिपदपरूवितं किमाणा-गेज्झं?, आचार्याह-जम्हा जिणा णण्णहावादिणो तम्हा तेसिं वयणं सव्वं आणाते चेव गेज्झं, कहिंवि दिट्ठंतावि गेज्झं, इह दुवालसंगस्स धुवादि-परूवितत्थस्स साधको इमो दिट्ठंतो से जधा णामएइत्यादि, कठ्यं, तच्च दुवालसंगं सुत्तं चउव्विहं दव्वादियाण जाव सुयणाणकेवलंते पडुच्च भणितं-दव्वतो णं सुयणाणी सुयणाणेणोवउत्तो सुत्तविण्णत्तीए सव्वदव्वादि जाणति, पासइत्ति विरोधो?, उच्यते, जम्हा अदिट्ठाणावि मेरुमा-दियाण पासणयाए आगारया लिहइ णो वाऽदिट्ठं लेक्खइ, पण्णवणाए य भणिता सुयणाणपासणतत्ति ण विरोहो, आरतो पुण जे सुतणाणी ते सव्वदव्वाण पासणतासु भइया, सा य भयणा मतिविसेसतो जाणियव्वा, एवं खेत्तकालभावेसुवि भाणितव्वा, सुतणाणदंसणत्थं भण्णति 'अक्खर' गाहा ( *८६-२४९ ) (५१-२४९) इमा चोद्दसविहसुतभावपरूवणा कता, एत्थं आयारादि गणधरपणीयं तस्स पत्तेयबुद्धसासि-तस्स वा तधाकालाणुभावतो बलबुद्धिमेधाविहाणिं जाणिऊण जे य सुयभावा आयरिएहिं णिज्जूढा तेसु गहणविही दंसिज्जइ--'आगम०' गाहा

(*८७-२४९) इमेते अट्ठ बुद्धिगुणा 'सुस्सूसइ०' गाथा (*८८-२४९) विणेयस्स अत्थसवणे इमा विही 'मूयं हुंकारं०' गाहा(*८९-२४९) गुरुणो अणुयोगकहणे इमा विही'सुत्तत्थो खलु०' गाहा (*९०-२४९) 'जं नु भणियमूणं वा अतिरित्तं वावि अहव विवरीयं। तं सम्मणुयोगधरा कहेउ काउं समक्खंति ॥ १ ॥ णिरेणगामेत्तमहासद्दा जिता, पसूयती संख जगट्ठिताकुला। कमट्ठिता वीमत चिंतितक्खरा फुडं कहेयंतभिधाणकंमुणा ॥ १ ॥ सकराजतो पंचसु वर्षशतेषु नंद्यध्ययनचूर्णी समाप्ता इति ॥ ग्रन्थाग्रं ॥ १५०० ॥

## इति श्रीनन्द्यध्ययनचूर्णिः समाप्ता।

॥ नमः सर्वज्ञाय ॥

# श्रीमद्धरिभद्रसूरिसूत्रिता नन्दीवृत्तिः



**जयति भुवनैकभानुः सर्वत्राविहतकेवलालोकः । नित्योदितः स्थिरस्तापवर्जितो वर्द्धमानजिनः ॥ १ ॥**

इह सर्वेणैव संसारिणा सत्त्वेन नारकतिर्यङ्नरामरगतिनिबन्धनानेकशारीरमानसातितीव्रतरदुःखौघसङ्घातपीडितेन जातिजरामरणशोकरोगाद्युपद्रवव्रातरहितनिरतिशयालोकसुखस्वभावापवर्गगतिसम्भवे सति पीडानिर्वेदात् तत्परित्यागाय निरतिशयालोकसुखाभिलाषाच्च तदवाप्तये आत्मपरतुल्यचित्तेन सर्वथा स्वपरोपकाराय प्रवर्त्तितव्यमिति, तत्रान्यपरिरक्षणादिना परोपकारपूर्वक एवात्मोपकार इति विशेषतस्तत्र, स पुनः परोपकारो द्विधा-द्रव्यतो भावतश्च, तत्र द्रव्यतो भोजनादिविचित्रविभवप्रदानजनितः, अयं चानैकान्तिकोऽनात्यन्तिकश्च, भावतस्तु सद्धर्मप्रदानजनितः, अयं चैकान्तिकस्तथा आत्यन्तिकश्च, सद्धर्मश्च श्रुतधर्मचारित्रधर्मभेदाद् द्विभेदः, तत्र श्रुतधर्मो जिनवचनस्वाध्यायः, चारित्रधर्मस्तु तदुक्तः श्रमणधर्म इति, उक्तश्च-"सुयधम्मो सज्झाओ चरित्तधम्मो समणधम्मो।" तत्र श्रुतधर्मसम्पत्समन्विता एव प्रायश्चारित्रधर्मग्रहणपरिपालनसमर्था भवन्तीति तत्प्रदानमेवादौ न्याय्यमिति, तत्रापि श्रुतप्रदाने सत्यपि नाविज्ञातार्थादेव तस्मादभिलपितार्थावाप्तिः प्राणिनामित्यतः प्रारभ्यते अर्हद्वचनानुयोगः, अयं च

परमपदप्राप्तिहेतुत्वाच्छ्रेयोभूतो वर्त्तते, श्रेयांसि बहुविघ्नानि भवन्ति, यथोक्तम्-''श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि । अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायका ॥१॥' इति, अतोऽस्य प्रारम्भ एव विघ्नविनायकोपशान्तये मङ्गलाधिकारे नन्दिर्वक्तव्यः । अथ नन्दिरिति कः शब्दार्थः?, उच्यते, 'टु णदि समृद्धा' वित्यस्य धातोः 'इदितो नुम् धातो' रिति ( ७-१-५८ ) नुमि विहितेऽनुबन्धलोपे च कृते उणादिकः इन् प्रत्ययो विधीयते, 'इन् सर्वधातुभ्य' इति वचनाद्, अनुबन्धलोपे च कृते सति नन्दि, सो रुत्वं विसर्जनीयश्चेति नन्दिः, नन्दनं नन्दिः नन्दन्त्यनेनेति वा नन्दन्त्यस्मिन्निति वा नन्दयतीति वा तदभेदोपचारान्नन्दिः हर्षः प्रमोद इत्यनर्थान्तरं, 'ताभ्यामन्यत्रोणादय' इति वचनाद् ताभ्यामिति सम्प्रदानापादानाभ्यां अन्यत्र उणादयः प्रत्यया भवन्ति, अन्ये तु नन्दीत्यभिदधति, तत्रापि नन्दिस्थिते 'इक् कृष्यादिभ्य' इति (उणा.) इक् प्रत्ययः, स च 'कृत्यल्युटो बहुल'(३-३-११३) मिति वचनाद्भावे करणे वा अवगन्तव्य इति, ततः 'कृदिकारादक्तिनः, (वार्तिकं) 'सर्वतोऽक्तिन्नर्थादित्येक' इति स्त्रीप्रत्ययः, अस्य भावार्थः कृदिकारान्तो यः शब्दः क्तिन्वर्जितस्तस्मात् स्त्रीप्रत्ययो भवति, अपरे तु सर्वतः अक्तिन्नर्थादिकारान्तात् स्त्रीप्रत्ययो भवतीति मन्यन्ते, अनुबन्धलोपे च कृते 'यस्ये' (६-४-१४८) तीकारलोपे च नन्दीति रूपं भवति, नन्दनं नन्दी नन्दन्त्यनयेति वा भव्याः प्राणिन इति नन्दी, इत्यलमप्रस्तुतातिप्रसङ्गेनेति।

अयं च नन्दिश्चतुर्विधः, तद्यथा- नामनन्दिः स्थापनानन्दिः द्रव्यनन्दिः भावनन्दिश्चेति, तत्र नामस्थापने प्रकटार्थे, द्रव्यनन्दिर्द्विधा-आगमतो नोआगमतश्च, तत्रागमतो नन्दिपदार्थज्ञः तत्र च अनुपयुक्तः 'अनुपयोगो द्रव्य' मिति वचनात्, नोआगमतस्तु ज्ञशरीरद्रव्यनन्दिः भव्यशरीरद्रव्यनन्दिः ज्ञशरीरभव्यशरीरव्यतिरिक्तश्च द्रव्यनन्दिः, तत्र ज्ञशरीरद्रव्यनन्दिः नन्दिपदार्थज्ञस्य

शरीरं जीवविप्रमुक्तं अनुभूतनंदिभावत्वात्, पश्चात्कृतभावस्य द्रव्यत्वात्, यथोक्तम्—"भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके। तद् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम् ॥ १ ॥' भव्यशरीरद्रव्यनंदिश्च नन्दिपदार्थपरिज्ञानभावयोग्यं बालादिशरीरं, पुरस्कृतभावत्वादस्य, व्यतिरिक्तः पुनः क्रियाविष्टो द्वादशविधस्तूर्याङ्गसङ्घातोऽयम्-तद्यथा-'भंभा १ मउंद २ मद्दल ३ कडंब ४ झल्लरि ५ हुडुक्क ६ कंसाला ७। काहल ८ तलिमा ९ वंसो १० संखो ११ पणवो १२ य बारसमो ॥ १ ॥' भावनन्दिरपि द्विविधैव-आगमतो नोआगमतश्च, तत्रागमतो भावनन्दिः नन्दिपदार्थज्ञस्तत्र चोपयुक्तः, 'उपयोगो भाव'इतिकृत्वा, नोआगमतस्तु भावनन्दिः पञ्चप्रकारज्ञानसमुदायः, नोशब्दो देशवचनः, अथवा पञ्चप्रकारज्ञानस्वरूपप्रतिपादकोऽध्ययनविशेषः, नोशब्दो देशवचन एव ॥ अयं चाध्ययनविशेषः श्रुतांशेन सर्वश्रुताभ्यन्तरभूतो वर्त्तते, अत एव सर्वश्रुतारम्भेष्वेव विघ्नविनायकोपशान्तये मङ्गलार्थमभिधीयत इति, अस्य च मंगलस्थानावसरप्राप्तस्य सत आचार्याः विनेयानां सूत्रार्थगौरवोत्पादनार्थमविच्छेदेन सन्तानागतसूत्रार्थपददर्शनार्थं चादावेवावलिकामभिधाय व्याख्यानाय यतन्ते, सर्वे श्रुतार्थाश्च यतस्तीर्थकरप्रभवा अतः प्रज्ञापकश्रावकपाठकाः अभिलषितार्थसिद्धये प्रवर्त्तमानाः प्रधानोपायत्वाद्भगवत एव नमस्कारपूर्वकं प्रवर्त्तन्त इत्यत आह ग्रंथकारः

जयति०गाथा॥(*१-२ पत्रे)॥ इन्द्रियविषयकषायघातिकर्मभवोपग्राहिकर्मशत्रुगणजयाज्जयतीत्युच्यते, किंविशिष्टो जयति?-जगज्जीवयोनिविज्ञायकः, इह जगच्छब्देन सकलधर्माधर्माकाशपुद्गलास्तिकायपरिग्रहः, जीवशब्देन तु सकलजीवास्तिकायपरिग्रहः, उक्तं च-"जगन्ति जंगमान्याहुः,जगद् ज्ञेयं चराचरम्"योनयः-सचित्ताद्याः,उक्तञ्च-'सचित्तशीतसंवृत्तेतरमिश्रास्तद्योनयः'(तत्त्व०२-३३

जीवोत्पत्तिस्थानानीत्यर्थः, 'यु मिश्रणे' युवन्ति-तैजसकार्मणशरीरवन्तः सन्तः ओदारिकादिशरीरेण मिश्रीभवन्त्यस्यामिति योनिः, उक्तञ्च-'जोएण कम्मएणं आहारेइ अणंतरं जीवो । तेण परं मीसेणं जाव सरीरस्स निप्फत्ती ॥ १ ॥' ततश्च जगच्च जीवाश्च योनयश्च जगज्जीवयोनयः विविधम्-अनेकधोत्पादाद्यनन्तधर्मात्मकं जानातीति विज्ञायकः जगज्जीवयोनीनां विज्ञायक २ इति समासः, अनेन केवलज्ञानप्रतिपादनात् स्वार्थसम्पदमाह। तथा जगद् गृणातीति जगद्गुरुः, यथोपलब्धजगद्वक्तेति भावना, अनेनापि स्वार्थसम्पदमेवाह । तथा जगदानन्दः इह जगच्छब्देन संज्ञिजङ्गमपरिग्रहः, तेषां सद्धर्मदेशनाद्वारेणानन्दहेतुत्वादैहिकामुष्मिकप्रमोदकारणत्वात् जगदानन्द इत्यनेन परार्थसम्पदमाह, तथा 'जगन्नाथ' इह जगच्छब्देन सकलचराचरपरिग्रहः तस्य यथावस्थितस्वरूपप्ररूपणद्वारेण वितथप्ररूपणापायेभ्यः पालनात् नाथवन्नाथ इति, अनेनापि परार्थसम्पदमिति। तथा जगद्बन्धुः इह जगच्छब्देन सकलप्राणिपरिग्रहस्तदव्यापादनोपदेशप्रणयनेन सुखस्थापकत्वाद् बन्धुवत् बन्धुः, तथा चोक्तम्-'सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता ण हंतव्वा ण अज्जावेयव्वा ण परितावेयव्वा ण उवद्दवेयव्वा, एस धम्मे धुवे णितीए सासते समेच्च लोयं खेदण्णेहिं पवेदिते' इत्यादि, अनेनापि परार्थसम्पदमिति । तथा 'जयति जगत्पितामह' इति, इह जगच्छब्देन सकलसत्त्वपरिग्रह एव, तेषां च कुगतिगमनभयापायरक्षणात् पिता धर्मो वर्त्तते, अतो जगत्पितामहः, तथोक्तम्-'दुर्गतिप्रसृतान् जीवान्, यस्माद्धारयते ततः । धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म इति स्मृतः ॥ १ ॥' तस्यापि चार्थप्रणेतृत्वेन भगवान् पिता वर्तते, अतो जगत्पितामह इति, स्तवाधिकाराच्च पुनः क्रियाभिधानमदुष्टं, उक्तञ्च-'सज्झायझाणतवओसहेसु उवएसथुइपयाणेसु । सन्तगुणकित्तणेसु य न होंति पुणरुत्तदोसा ओ ॥ १ ॥' अनेनापि परार्थसम्पदमाह । भगवानिति भगः-समग्रैश्वर्यादिलक्षणः, तथा चोक्तम्-

'ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः । धर्मस्याथ प्रयत्नस्य, षण्णां भग इतींगना ॥१॥' भगोऽस्यास्तीति भगवानिति, अनेन चोभयसम्पदमाह, स्वपरोपकारित्वादैश्वर्यादेरित्यलं प्रसङ्गेनेति गाथार्थः ॥ १ ॥ 'व्याख्यानयन्ति केचित् स्तुतिमेनामन्यथापि विद्वांसः । तत्राप्यपौनरुक्त्यं सूक्ष्मधिया चिन्तनीयमिति ॥१॥ एवं तावदनादिमन्तो मतास्तीर्थकरा इति ज्ञापनार्थं सामान्येन नमस्कारमभिधाय साम्प्रतमासन्नोपकारित्वात् सकलदुःखपरमौषधभूतप्रवचनप्रणेतृत्वाद्वर्त्तमानतीर्थाधिपतेः नमस्कारं प्रतिपादयन्नाह-

जयति सु० गाहा ॥ (* २-१५) ॥ जयतीति पूर्ववत्, श्रुतानां-आचारादिभेदभिन्नानां प्रभवः प्रभवन्त्यस्मादिति प्रभवः, तदर्थाभिधायकत्वात्, कारणमित्यर्थः, ऋषभादयोऽप्येवंभूता एव अत आह-तीर्थकराणामपश्चिमो जयति, तत्र तीर्थकरणशीलास्तीर्थकरास्तेषां तीर्थकराणां भरते अधिकृतावसर्पिण्यां पश्चिम एवानिष्टशब्दपरिहारार्थमपाश्चिम इत्युच्यते, पश्चानुपूर्व्या वा पश्चिम इति, जयति गुरुर्लोकानां गृणाति शास्त्रार्थमिति गुरुः, लोकानां इति-सत्त्वानां, जयति महात्मा अनन्तज्ञानवीर्ययुक्तत्वान्महानात्मा यस्य स महात्मा, महावीर इति 'शूर वीर विक्रान्ता' विति कषायादिशत्रुजयान्महाविक्रान्तो महावीरः, 'ईर गतिप्रेरणयो' रित्यस्य वा विपूर्वस्य विशेषेण ईरयति कर्म गमयति याति वेह शिवमिति वीरः, महाँश्चासौ वीरश्च महावीर इति गाथार्थः ॥ पुनरस्यैवातिशयप्रदर्शनद्वारेण स्तुतिमभिधित्सुराह—

भद्दं०गाहा(*३-२३)'भद्रं' कल्याणं भवतु, कस्य ?-सर्वजगदुद्योतकस्येत्यनेन ज्ञानातिशयमाह, इह च "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितै" रिति(२-३-७२) वचनात् षष्ठ्यपि भवत्येव, यथा आयुष्यं देवदत्तायायुष्यं देवदत्तस्येति, एवं भद्रादिष्वपि

जीवोत्पत्तिस्थानानीत्यर्थः, 'यु मिश्रणे' युवन्ति-तैजसकार्मणशरीरवन्तः सन्तः ओदारिकादिशरीरेण मिश्रीभवन्त्यस्यामिति योनिः, उक्तञ्च-'जोएण कम्मएणं आहारेइ अणंतरं जीवो। तेण परं मीसेणं जाव सरीरस्स निप्फत्ती ॥ १ ॥' ततश्च जगच्च जीवाश्च योनयश्च जगज्जीवयोनयः विविधम्-अनेकधोत्पादाद्यनन्तधर्मात्मकं जानातीति विज्ञायकः जगज्जीवयोनीनां विज्ञायक २ इति समासः, अनेन केवलज्ञानप्रतिपादनात् स्वार्थसम्पदमाह। तथा जगद् गृणातीति जगद्गुरुः, यथोपलब्धजगद्वक्तेति भावना, अनेनापि स्वार्थसम्पदमेवाह। तथा जगदानन्दः इह जगच्छब्देन संज्ञिजङ्गमपरिग्रहः, तेषां सद्धर्मदेशनाद्वारेणानन्दहेतुत्वादैहिकामुष्मिकप्रमोदकारणत्वात् जगदानन्द इत्यनेन परार्थसम्पदमाह, तथा 'जगन्नाथ' इह जगच्छब्देन सकलचराचरपरिग्रहः तस्य यथावस्थितस्वरूपप्ररूपणद्वारेण वितथप्ररूपणापायेभ्यः पालनात् नाथवन्नाथ इति, अनेनापि परार्थसम्पदमिति। तथा जगद्बन्धुः इह जगच्छब्देन सकलप्राणिपरिग्रहस्तदव्यापादनोपदेशप्रणयनेन सुखस्थापकत्वाद् बन्धुवत् बन्धुः, तथा चोक्तम्-'सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता ण हंतव्वा ण अज्जावेयव्वा ण परितावेयव्वा ण उवद्दवेयव्वा, एस धम्मे धुवे णितीए सासते समेच्च लोयं खेदण्णेहिं पवेदिते' इत्यादि, अनेनापि परार्थसम्पदमिति। तथा 'जयति जगत्पितामह' इति, इह जगच्छब्देन सकलसत्त्वपरिग्रह एव, तेषां च कुगतिगमनभयापायरक्षणात् पिता धर्मो वर्त्तते, अतो जगत्पितामहः, तथोक्तम्-'दुर्गतिप्रसृतान् जीवान्, यस्माद्धारयते ततः। धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म इति स्मृतः ॥ १ ॥' तस्यापि चार्थप्रणेतृत्वेन भगवान् पिता वर्तते, अतो जगत्पितामह इति, स्तवाधिकाराच्च पुनः क्रियाभिधानमदुष्टं, उक्तञ्च-'सज्झायझाणतवओसहेसु उवएसथुइपयाणेसु। सन्तगुणाकित्तणेसु य न होंति पुणरुत्तदोसा ओ ॥ १ ॥' अनेनापि परार्थसम्पदमाह। भगवानिति भगः-समग्रैश्वर्यादिलक्षणः, तथा चोक्तम्-

'ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः । धर्मस्याथ प्रयत्नस्य, षण्णां भग इतींगना ॥१॥' भगोऽस्यास्तीति भगवानिति, अनेन चोभयसम्पदमाह, स्वपरोपकारित्वादैश्वर्यादेरित्यलं प्रसङ्गेनेति गाथार्थः ॥ १ ॥ 'व्याख्यानयन्ति केचित् स्तुतिमेनामन्यथापि विद्वांसः । तत्राप्यपौनरुक्त्यं सूक्ष्मधिया चिन्तनीयमिति ॥१॥ एवं तावदनादिमन्तो मतास्तीर्थकरा इति ज्ञापनार्थं सामान्येन नमस्कारमभिधाय साम्प्रतमासन्नोपकारित्वात् सकलदुःखपरमौषधभूतप्रवचनप्रणेतृत्वाद्वर्त्तमानतीर्थाधिपतेः नमस्कारं प्रतिपादयन्नाह-

जयति सु० गाहा ॥ (* २-१५) ॥ जयतीति पूर्ववत्, श्रुतानां-आचारादिभेदभिन्नानां प्रभवः प्रभवन्त्यस्मादिति प्रभवः, तदर्थाभिधायकत्वात्, कारणमित्यर्थः, ऋषभादयोऽप्येवंभूता एव अत आह-तीर्थकराणामपश्चिमो जयति, तत्र तीर्थकरणशीलास्तीर्थकरास्तेषां तीर्थकराणां भरते अधिकृतावसर्पिण्यां पश्चिम एवानिष्टशब्दपरिहारार्थमपश्चिम इत्युच्यते, पश्चानुपूर्व्या वा पश्चिम इति, जयति गुरुर्लोकानां गृणाति शास्त्रार्थमिति गुरुः, लोकानां इति-सत्त्वानां, जयति महात्मा अनन्तज्ञानवीर्ययुक्तत्वान्महानात्मा यस्य स महात्मा, महावीर इति 'शूर वीर विक्रान्तौ' विति कषायादिशत्रुजयान्महाविक्रान्तो महावीरः, 'ईर गतिप्रेरणयो' रित्यस्य वा विपूर्वस्य विशेषेण ईरयति कर्म गमयति याति वेह शिवमिति वीरः, महाँश्चासौ वीरश्च महावीर इति गाथार्थः ॥ पुनरस्यैवातिशयप्रदर्शनद्वारेण स्तुतिमभिधित्सुराह—

भद्दं०गाहा(*३-२३)'भद्रं' कल्याणं भवतु, कस्य ?-सर्वजगदुद्योतकस्येत्यनेन ज्ञानातिशयमाह, इह च "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितै" रिति(२-३-७३) वचनात् षष्ठ्यपि भवत्येव, यथा आयुष्यं देवदत्तायायुष्यं देवदत्तस्येति, एवं भद्रादिष्वपि

वक्तव्यमिति, भद्रं जिनस्य 'जिं जये' अस्य औणादिकनक्प्रत्ययान्तस्य जिन इति भवति, रागादिजयाज्जिन इति, अनेनापायातिशयमाह, अपायो-विश्लेषः रागादिभिः सार्द्धमात्यन्तिकवियोग इत्यर्थः, आह–अपायातिशये सति ज्ञानातिशयभावाद् व्यतिक्रमः किमर्थ ?, फलप्रधानाः समारम्भा इति ज्ञापनार्थं, भद्रं सुरासुरनमस्कृतस्येत्यनेन पूजातिशयमाह, नहि विभवानुरूपां पूजामकृत्वैव सुरासुरा नमस्कारक्रियायां प्रवर्त्तन्त इति, उक्तं च-"अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासनं च । भामण्डलं दुन्दुभिरातपत्रं, सत्प्रातिहार्याणि जिनेश्वराणाम् ॥१॥" इति, पूजातिशयान्यथाऽनुपपत्त्यैव वागतिशयो गम्यते, भद्रं धुतरजस इत्यनेन सकलसंसारिक्लेशविनिर्मुक्तां सिद्धावस्थामेवाह, यतो बध्यमानं कर्म रजो भण्यते, तदभावस्त्वयोगिसिद्धानामेव, न पुनरन्येषां, यत आह–"जीवे णं एस जीवे एयइ वेदति चलइ फंदइ ताव णं अट्ठविहबंधए वा सत्तविहबंधए वा छव्विहबंधए वा एगविहबंधए वा" इत्यादि, तत्थ "सत्तविहबंधगा होंति पाणिणो आउवज्जगाणं तु । तह सुहुमसम्पराया छव्विहबंधा विणिद्दिट्ठा ॥१॥ मोहाउगवज्जाणं पगडीणं ते उ बंधगा भणिया । उवसन्तखीणमोहा केवलिणो एगविहबंधा ॥२॥ ते उण दुसमयठिइतस्स बंधगा ण उण संपरायस्स । सेलेसिं पडिवन्ना अबंधगा होंति विन्नेया ॥३॥" आह-भगवतः संसारातीतत्वात् परमकल्याणरूपत्वात् किमेवमुच्यते-भद्रं भवतु, न च स्तोत्रा भणितं सर्वमेव भवतीति, अत्रोच्यते, सत्यमेतत्, तथापि कुशलमनोवाक्कायप्रवृत्तिकारणत्वान्न दोष इत्यलं प्रसङ्गेनेति गाथार्थः ॥२॥ एवं तावत्तीर्थकरनमस्काराः प्रतिपादिताः, साम्प्रतं तीर्थकरानन्तरः सङ्घ इतिकृत्वा तीर्थान्तरग्रामव्युदासेन नगररूपकेण तत्संस्तवं कुर्वन्नाह–

गुण० गाहा ( * ४-४२ ) 'गुणभवनगहन' इह गुणाः-पिण्डविशुद्ध्यादयः उत्तरगुणा अभिगृह्यन्ते, यथोक्तम्–"पिंडस्स

जा विसोही समितीओ भावणा तवो दुविहो । पडिमा अभिग्गहाविय उत्तरगुणमो वियाणाहि ॥१॥" एत एव भवनानि एभिर्गह-नं-प्रचुरत्वादुत्तरगुणानामेभिः संकुलं, सङ्घनगरमभिगृह्यते, तस्यामन्त्रणं हे गुणभवनगहन !, तथा श्रुतरत्नभृत् श्रुतान्येव अनिरुपमसुखहेतुत्वाद्रत्नानि तैर्भृतं-पूरितमित्यर्थः तस्यामन्त्रणं, तथा दर्शनविशुद्धरथ्याक, इह दर्शनं--प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं सम्यग्दर्शनं गृह्यते, तच्चौपशमिकादिभेदात् पञ्चविधं, तथा चोक्तम्--"तं च पंचधा सम्मं-उवसमं सासायणं खयोवसमियं वेदयं खइयं" ति, दर्शनमेवासारमिथ्यात्वादिकचवररहिता शुद्धा रथ्या यस्य तत्तथाविधं. तस्यामन्त्रणं, 'संघनगर' सङ्घः-चातुर्वर्णः श्रमणादिसंघातः स नगरमिव संघनगरं तस्यामन्त्रणं, यथा पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः, उक्तश्च-"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे"(२-१-५६) भद्रं कल्याणं तव भवतु, अखण्डचारित्रप्राकार! चारित्रं-मूलगुणा अखण्डम्-अविराधितं चारित्रमेव प्राकारो यस्य तत्तथाविधं तस्यामन्त्रणमिति गाथार्थः ॥४॥ संसारोच्छेदित्वात् संघस्यैव चक्ररूपकेण स्तवं कुर्वन्नाह—

**संयम० गाहा** ( * ५-४३ ) **संयमतपस्तुम्बारकाय नमः** संयमश्च तपांसि च संयमतपांसि, तुम्बं च अरकाश्च तुंबारकाः, तत्र यथासंख्यं संयमतपांस्येव तुम्बारका यस्य तत् तथाविधं तस्मै नमः, तत्र संयमः 'पञ्चाश्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः कषायजयः । दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥१॥ तपो द्वादशप्रकारं बाह्यमभ्यन्तरं च, तत्र बाह्यं षड्विधं, यथोक्तम्--"अनशनमूनोदरता वृत्तेः संक्षेपणं रसत्यागः । कायक्लेशः संलीनतेति बाह्यं तपः प्रोक्तम् ॥१॥ अभ्यन्तरमपि षड्विधम्,उक्तञ्च-"प्रायश्चित्तं विनयो वैयावृत्त्यं स्वाध्यायो ध्यानं व्युत्सर्गश्च" ति, **सम्मत्तपारियल्लस्सा**त्ति पारियल्लं-बाह्यपृष्ठकस्य बाह्या भ्रमिरुच्यते, ततश्च सम्य-

त्ववाद्यभ्रमिणे नमः, व्याख्यातं गाथार्धं, चरकादिभिरतुल्यत्वान्नास्य प्रतिचक्रं विद्यते इत्यप्रतिचक्रं तस्य जयो भवतु इति, सुप्रणिधानमेतत्, सदा सर्वकालं, संघश्चक्रमिव संघचक्रं तस्येति गाथार्थः ॥५॥ इदानीं संघस्यैव मार्गगामित्वतो रथरूपकेण स्तवं कुर्वन्नाह-

भद्दं० गाहा ( * ६-४३ ) भद्रं कल्याणं भवतु, कस्य ?-संघरथस्य, भगवत इति योगः, किंविशिष्टस्य ?-शीलोच्छ्रितपताकस्य, प्राकृतशैल्याऽन्यथोपन्यासः, शीलग्रहणात् अष्टादशशीलाङ्गसहस्रपरिग्रहः, तथा तपोनियमतुरगयुक्तस्य तपःसंयमाश्वयुक्तस्येत्यर्थः स्वाध्यायो-वाचनादिः, यथोक्तम्-"वाचना प्रच्छना परावर्त्तना अनुप्रेक्षा धर्मकथा चे"ति, तत्र स्वाध्याय एव शोभनो नन्दिघोषतूर्यरवो 'सुनेमिघोसस्स'त्ति नेमिनिर्घोषो वा यस्य स तथाविधो यस्य, इह च शीलांगनिरूपणे सत्यापि तपोनियमनिरूपणं प्रधानपरलोकांगत्वख्यापनार्थम्, अस्ति चायं न्यायो यदुत सामान्योक्तावपि प्राधान्यख्यापनार्थं विशेषाभिधानमिति, यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति, एवमन्यत्रापि योजनीयमित्यलं प्रसंगेनेति गाथार्थः ॥ संघस्यैव लोकासंश्लिष्टत्वतः पद्मरूपकेण स्तवं प्रतिपादयन्नाह--

कम्मरय० गाहा ॥ ( * ७-४४॥) सावय० गाहा॥ * (८-४४ ॥) संघपद्मस्य भद्रं-मङ्गलं भवत्वितिक्रिया, किम्भूतस्य?-कर्मरजोजलौघाविनिर्गतस्य इह ज्ञानावरणादिलक्षणं कर्म तदेव अनेकधा जीवगुण्डनाद्रजो भण्यते तदेव भवकारणत्वाज्जलौघः तस्माद्विनिर्गत इव विनिर्गतः, तथा चाविरतसम्यग्दृष्टेरप्यपार्द्धपुद्गलपरावर्त्तः परः संसार उक्त इत्यतो विनिर्गतस्तस्य, श्रुतरत्नमेव दीर्घनालं यस्य सः, तद्बलादेव निर्गत इति भावनीयं, पंच महाव्रतानि-प्राणातिपातादिविनिवृत्तिलक्षणानि तान्येव स्थिरा-दृढा कर्णिका

मध्यगण्डिका यस्य, गुणा-उत्तरगुणाः त एव तत्परिकरत्वात् केसराणि यस्य विद्यन्ते इति गुणकेसरवत् तस्य गुणकेसरवतः, श्रावकजनमधुकरीपरिवृतस्येति प्रकटार्थं, नवरमभ्युपेत्य सम्यक्त्वं प्रतिपन्नाणुव्रतोऽपि प्रतिदिवसं यतिभ्यः सकाशात् साधूनामगारिणां च समाचारीं शृणोतीति श्रावकः, उक्तं च—"योऽह्यभ्युपेतसम्यक्त्वो, यतिभ्यः प्रत्यहं कथाम्। शृणोति धर्मसम्बद्धामसौ श्रावक उच्यते ॥ १ ॥" जिनसूर्यतेजोबुद्धस्य--केवलज्ञानभास्करविशिष्टसंवेदनप्रभवधर्मदेशनाबुद्धस्येति भावार्थः, श्रमणगणसहस्रपत्रस्येति प्रकटार्थमेव, नवरं श्राम्यतीति श्रमणः 'कृत्यलुटो बहुल' मितिवचनात् कर्त्तरि ल्युट्, श्राम्यतीति तपस्यति, एतदुक्तं भवति-प्रव्रज्यादिवसादारभ्य सकलसावद्ययोगविरतो गुरूपदेशादनशनादि यथाशक्त्याऽऽप्राणोपरमात्तपश्चरतीति श्रमणः, उक्तं च-"यः समः सर्वभूतेषु, स्थावरेषु त्रसेषु च। तपश्चरति शुद्धात्मा, श्रमणोऽसौ प्रकीर्तितः॥१॥ इति गाथाद्वयार्थः ॥ इदानीं सङ्घस्यैव सौम्यतया चन्द्ररूपकेण स्तवमाह—

तवसंयम०गाहा ॥(*९-४५)॥ तपःसंयममृगलाञ्छन! तपःसंयममृगचिन्ह!-अक्रियाराहुमुखदुष्प्रधृष्य! इह अक्रियाशब्देन नास्तिका गृह्यन्ते, अनभ्युपगमाद्, अविद्यमानपरलोकक्रियाः अक्रियाः त एव राहुमुखं तेन दुष्प्रधृष्यः-अनभिभवनीयस्तस्यामन्त्रणं, नित्यमिति सदा जय सङ्घचन्द्र!, निर्मलसम्यक्त्वविशुद्धज्योत्स्नाक इह मिथ्यात्वभावतमोरहितं निर्मलं सम्यक्त्वमुच्यते तदेव विशुद्धा-निर्मला ज्योत्स्ना-चन्द्रिका यस्य स तथाविधः तस्यामन्त्रणमिति गाथार्थः ॥ अधुना सङ्घस्यैव प्रकाशकतया सूर्यरूपकेण स्तवमाह—

परतित्थिय०गाहा ॥(*१०-४५)॥ परतीर्थिकग्रहप्रभानाशकस्य इह परतीर्थिकाः-कपिलकणभक्षाक्षपादादिमतावल-

भिनः त एव ग्रहास्तेषां प्रभा—एकदुर्णयज्ञानलक्षणा तां नाशयति अनन्तनयसंकुलप्रवचनसमुत्थज्ञानालोकेन अपनयतीति समासस्तस्य, तपस्तेजोदीप्तलेश्यस्य तपस्तेज एव दीप्ता—उज्ज्वला लेश्या दीधितयो यस्य, ज्ञानोद्योतस्येति गतार्थं, जगति लोके भद्रं-मङ्गलं भवतु, कस्य?-दमसङ्घसूर्यस्य दमः-उपशमो भण्यते तत्प्रधानः सङ्घसूर्यः दमसङ्घसूर्यस्तस्येति गाथार्थः॥साम्प्रतं सङ्घस्यैव महत्तया समुद्ररूपकेण स्तवमाह—

**भद्दं०गाहा** ॥(*११-४५)॥ **सङ्घसमुद्रस्य भद्रं भवत्विति** क्रिया, किम्भूतस्य?-**धृतिवेलापरिगतस्य** धृतिः-आत्मपरिणामः सैव वेला--वेदिका जलान्तररमणलक्षणा मर्यादा वा तया परिगतस्तस्य, **स्वाध्याययोगमकरस्य** कर्मविदारणमहाशक्तियुक्तत्वात् स्वाध्याय एव मकरो यस्मिंस्तस्य, **अक्षोभ्यस्य** परीषहोपसर्गसम्भवे निष्प्रकम्पस्य **भगवतः** समग्रैश्वर्यादियुक्तस्य, **रुन्दस्येति** विस्तीर्णस्येति गाथार्थः॥ इदानीं सङ्घस्यैव स्थिरतयाऽचलेन्द्ररूपकेण स्तुतिं कुर्वन्नाह—

**सम्मद्दंसण०गाहा**॥(*१२-४७)॥सम्यग् अविपरीतं **दर्शनं** सम्यग्दर्शनं तदेव प्रथमं मोक्षाङ्गत्वात् सारत्वाद्वज्रं सम्यग्दर्शनवज्रं तदेव **दढं रूढं गाढं अवगाढं** पीठं यस्य सङ्घमहामन्दरगिरेः स सम्यग्दर्शनवज्रदढरूढगाढावगाढपीठस्तस्य, 'वंदे' त्ति द्वितीयार्थे षष्ठी प्राकृतशैल्या आर्षत्वाच्च, तं वन्दे इत्यर्थः, तत् सम्यग्दर्शनवज्रपीठं, दृढमिति निष्प्रकम्पं शङ्कादिशल्यरहितत्वात्, रूढमिति वृद्धिमुपगतं, प्रतिसमयं विशुध्यमानत्वात्, प्रशस्ताध्यवसायस्थानेषु वर्तनात्, गाढमिति निविडं तीव्रतत्त्वरुचिरूपत्वात्, 'सुष्ठुश्रद्धानरूपत्वादित्यर्थः, अवगाढमिति निमग्नं, जीवादिपदार्थेषु सम्यगवबोधरूपतया प्रविष्टमित्यर्थः, **धर्मवरेत्यादि** धारयतीति धर्मः

धर्म एव वररत्नमण्डिता प्रधानरत्नमण्डिता चामीकरमेखला यस्य स धर्मवररत्नमण्डितचामीकरमेखलाकः, क्रियायोजना पूर्ववदेव अवसेया, इह धर्मो द्विविधः, मूलगुणोत्तरगुणरूपः, तत्रोत्तरगुणधर्मो रत्नानि मूलगुणधर्मस्तु चामीकरमेखलेति, तथा च न राजते मूलगुणधर्मचामीकरमेखलोत्तरगुणधर्म्मरत्नभूषणाविकलेति गाथार्थः ॥

नियमूसिय०गाहा॥(*१३-४५)॥इहोत्सृतशब्दस्य व्यवहितः प्रयोगो द्रष्टव्यः, ततश्चैवं भवति-नियम एव कनकशिलातलानि-नियमकनकशिलातलनि तेषूच्छ्रितानि उज्ज्वलानि ज्वलन्ति चिन्तान्येव प्राकृतशैल्या कूटानि यस्मिन् स तथाविधः, इह च नियमः इन्द्रियनोइन्द्रियानियमः परिगृह्यते, उत्सृतानि अशुभाध्यवसायपरित्यागात्, उज्ज्वलानि प्रतिसमयं कर्ममलविगमात्, ज्वलन्ति सदा सूत्रार्थानुस्मरणरूपत्वात्, चिन्त्यते यैस्तानि चित्तानि, उक्तं च-"चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते। यस्य तन्मुषितं दोषैस्तस्य शिष्टा विपत्तयः ॥ १ ॥" इति, वनं वृक्षसमुदायः, नन्दनं च तद्वनं च नन्दनवनं, तत्र नन्दन्ति यत्र सुरसिद्धदैत्यविद्याधरादयस्तन्नंदनं वनमित्यशोकसहकारादिजालं, मनो हरतीति मनोहरं,लतावितानविविधपुष्पफलप्रवालाद्युपपेतत्वात्,नन्दनवनं च तन्मनोहरं चेति 'विशेषणं विशेष्येण बहुल'मिति समासः, तस्य, सुरभिश्चासौ शीलगन्धश्च सुरभिशीलगन्धः तेनाध्मातः-व्याप्तो यः स तथाविधस्तस्य. क्रिया पूर्ववत्, इह च संघमंदरगिरेः सन्तोष एव नन्दनवनं, तथाहि-नन्दन्ति तत्र साधव इति, तदेव विविधामर्षौषध्यादिलब्ध्युपेतत्वान्मनोहरं तस्य सुरभिशीलगन्ध एवेति, अथवा मनोहरत्वं सुरभिशीलगन्धविशेषणमिति गाथार्थः ॥

जीवदय० गाहा ॥(*१४-४५)॥ जीवदयैव सुन्दराणि स्वपरनिर्वृत्तिहेतुत्वात् कन्दराणि वस्तुतस्तपस्विनिलयत्वात्,

तथाहि-अहिंसाव्यवस्थितः तपस्वीति, मुनिवरा एव शाक्यादिमृगपराजयान्मृगेन्द्राः मुनिवरमृगेन्द्राः, उत्प्राबल्येन दर्पिताः उद्दर्पिताः, कर्मशत्रुजयं प्रति उद्दर्पिताश्च मुनिवरमृगेन्द्राश्चेति विशेषणसमासः, जीवदयासुन्दरकन्दरेषु उद्दर्पितमुनिवरमृगेन्द्रास्तैः आकीर्णो-व्याप्तो यस्तस्येति, हेतुशत इत्यादि, प्रगलन्ति च तानि रत्नानि च प्रगलद्रत्नानि निस्यन्दवन्ति चन्द्रकान्तादीनि परिगृह्यन्ते, धातवः कनकादिधातवो गृह्यन्ते, धातवश्च प्रगलद्रत्नानि च धातुप्रगलद्रत्नानि, दीप्ताश्च ता औषधयश्च दीप्तौषधयः, धातुप्रगलद्रत्नानि च दीप्तौषधयश्च, ताः गुहासु यस्य स तथोच्यते, इह च संघमंदरगिरौ हेतुशतान्येव धातवः, अन्वयव्यतिरेकलक्षणा हेतवो गृह्यन्ते, प्रगलद्रत्नानि तु क्षायोपशमिकभावनिष्यन्दवन्ति श्रुतरत्नानि गृह्यन्ते, दीप्तौषधयस्तु विशुद्धा आमर्षौषध्यादयो गृह्यन्ते, गुहास्तु समवायाः प्ररूपणगुहा वा गृह्यन्ते, इति गाथार्थः ॥

संवर० गाहा ॥(*१५-४६)॥ संवरश्चासौ वरश्च संवरवरः, संवरः-प्रत्याख्यानरूपः सर्वप्राणातिपातादिविनिवृत्तिरूपत्वाद्वरः असावेव कर्ममलक्षालनाज्जलमिव जलं संवरवरजलं तस्मात् प्रगलितं च तदुज्झरं च संवरवरजलप्रगलितोज्झरं, तथा च संवरवर-जलादुपचारतः प्रगलति श्रुतज्ञानाद्युज्झरमिति, तदेव प्रविराजमानः हारो यस्य स तथाविधः, 'सावगजणे'त्यादि, रवन्तश्च ते मयूराश्च रवन्मयूराः प्रचुराश्च ते रवन्मयूराश्च २ श्रावका एव जनास्त एव प्रचुररवन्मयूरास्तैर्नृत्यन्तीव कुहराणि यस्येति समासः, इह च स्तुतिस्तोत्रगन्धर्वादि रवणं कुहराणि शास्त्रमण्डपादीनि गाथार्थः ॥

विणय०गाहा॥(*१६-४६)॥स्फुरन्तश्च ता विद्युतश्च स्फुरद्विद्युतः, विनयेन नताः विनयनताः विनयनताश्च ते प्रवरमुनिवराश्चेति,

त एव स्फुरद्विद्युज्ज्वलन्ति शिखराणि यस्येति समासः, इह च विनयस्यान्तरतपोभेदत्वात्तपांस्येव स्फुरन्ति प्रावचनिकाश्च विशिष्टाचार्यादयः शिखराणि, 'विविधगुणे'त्यादि, विविधा गुणा येषां ते विविधगुणाः, विशेषणान्यथाऽनुपपत्त्या साधवो गृह्यन्ते, त एव विशिष्टकुलोत्पन्नत्वात् सत्त्वसुखहेतुधर्मफलप्रदानाच्च कल्पवृक्षकाः विविधगुणकल्पवृक्षकाः, फलभरश्च कुसुमानि च २ गृह्यन्ते, त एव विशिष्टकुलोत्पन्नत्वात् ... फलभरो धर्मफलभरो गृह्यते, कुसुमानि विविधगुणकल्पवृक्षकाणां फलभरकुसुमानि २ तैराकुलानि वनानि यस्येति समासः, इह च फलभरो धर्मफलभरो गृह्यते, कुसुमानि ऋद्धयो, वनानि गच्छा इति गाथार्थः ॥

णाण०गाहा ॥(*१७-४६)॥ ज्ञानं च तद्वरं च २ परमनिर्वृत्तिहेतुत्वात् तदेव रत्नं दीप्यमानत्वात् कान्ता विमला वैडूर्यचूडा यस्य स तथाविधः, दीप्यते यथावस्थितजीवादिपदार्थस्वरूपोपलम्भात् , कान्ता भव्यजनमनोहारित्वाद् , विमला तदावरणाभावाद्, वन्देत्ति विनयप्रणतसंघमहामन्दरगिरेर्यन्माहात्म्यमिति, कर्मणि वा षष्ठीति गाथार्थः ॥ एवं संघनमस्कारा अपि प्रतिपादिताः, साम्प्रतमावलिका प्रतिपाद्यते, सा च त्रिविधा- तीर्थकरावलिका गणधरावलिका स्थविरावलिका च, तत्र तीर्थकरावलिकां प्रतिपादयन्नाह—

वंदे० गाहा, विमल० गाहा ॥(*१८।१९-४७)॥ गाथाद्वयमपि निगदसिद्धं । गणधरावलिका तु या यस्य तीर्थकृतः सा प्रथमानुयोगानुसारेण द्रष्टव्येति, महावीरवर्द्धमानस्य पुनरियम्-'पढमेत्थ इंदभूई बीओ पुण होइ अग्गिभूइत्ति । तइए य वाउभूई तओ वियत्ते सुहम्मे य ॥ १ ॥ मंडिय मोरियपुत्ते अंकपिए चेव अयलभाया य। मेयज्जे य पभासे गण-

हरा हुंति वीरस्स ॥ २ ॥' साम्प्रतं वर्त्तमानतीर्थाधिपतेः स्थविरावलिकां प्रतिपादयन्नतिशयभक्त्या सामान्यतस्तच्छासनस्तवं प्रतिपादयन्नाह—

निव्वुइपह० रूपकं ॥(*२२-४८)॥ निर्वृत्तिपथशासनकमित्यत्र यद्यपि सम्यग्दर्शनज्ञानचारित्राणि निर्वाणमार्गस्तथाप्यनेन दर्शनचरणपरिग्रहः, यत आह—जयति सदा सर्वभावदेशनकं, सर्वभावप्ररूपकमित्यर्थः, अनेन तु ज्ञानपरिग्रहः, अथवा निर्वृत्तिपथशासनकमित्यनेन सम्पूर्णनिर्वाणमार्गकथनमेवेति गृह्यते, जयति सदा सर्वभावदेशनकमित्यनेन तु विधिप्रतिषेधद्वारेण न निर्वृत्तिमार्गव्यतिरेकेण किंचिदस्तीति ख्याप्यते, यत एवंभूतमत एव कुसमयमदनाशनकं कुसिद्धान्तावलेपनाशनकमित्यर्थः, जिनेन्द्रवरवीरशासनकं चरमतीर्थकरप्रवचनमिति हृदयं, अयं रूपकार्थः ॥ अधुना यैरविच्छेदेन स्थविरैः क्रमेणेदंयुगीनानामानीतं तदावलिकां प्रतिपादयन्नाह—

सुधम्मं० गाहा ॥(*२३-४८)॥ इह स्थविरावलिका सुधर्मस्वामिनः प्रवृत्ता, उक्तं च-"तित्थं च सुधम्माओ णिरवच्चा गणहरा सेस" त्ति, अतस्तमेव पुरस्कृत्येयं प्रतिपाद्यते सुधर्मं भगवद्गणधरं अग्निवैशायनमित्यग्निवैशायनसगोत्रं, तथा तच्छिष्यं जम्बुनामानं च काश्यपं काश्यपगोत्रं, तस्मात् प्रभवं तच्छिष्यं प्रभवनामानं कात्यायनमिति कात्यायनसगोत्रं, वंदे इति क्रिया प्रत्येकमभिसम्बध्यते, तथा तच्छिष्यं 'वच्छ' मिति वत्ससगोत्रं सय्यम्भवं तथेति गाथार्थः ॥

जसभद्दं० गाथा ॥(*२४-४९)॥ शय्यंभवशिष्यं यशोभद्रं 'तुङ्गिक' मिति तुङ्गिकगणं व्याघ्रापत्यसगोत्रं वन्दे, अस्य च

द्वौ प्रधानशिष्यौ बभूवतुः, तद्यथा--सम्भूतविजयो माढरसगोत्रः, भद्रबाहुश्च प्राचीनसगोत्र इति, तथा चाह-सम्भूतं चैव माढरं भद्रबाहुं प्राचीनमिति, तत्र सम्भूतस्य विनेयः स्थूलभद्रो गौतमसगोत्र आसीद्, आह च-स्थूलभद्रं च गौतमामिति गाथार्थः ॥

एलावच्च० गाहा ॥(*२५-४९)॥ स्थूलभद्रस्यापि द्वावेव प्रधानशिष्यौ, तद्यथा--एलापत्यसगोत्रो महागिरिः वशिष्ठसगोत्रः सुहस्ती च, यत आह--एलापत्यसगोत्रं वन्दे महागिरिं, सुहस्तिनं च, तत्र सुहस्तिनः सुस्थितसुप्रतिबुद्धादिक्रमेणावलिका यथा दसासु तथैव द्रष्टव्या, न तयेहाधिकारः, महागिर्यावलिकयेहाधिकारः, तत्र महागिरेर्बहुलबलिस्सहौ कौशिकसगोत्रौ जमलभातरौ द्वौ प्रधानशिष्यौ बभूवतुः, तयोरपि बलिस्सहः प्रावचनीय आसीदत आह--ततः कौशिकगोत्रं बहुलस्य सदृशवयसं, यमलत्वात्, वन्द इति गाथार्थः ।

हारिय०गाहा ॥(*२६-४९)॥ बलिस्सहशिष्यं हारीतसगोत्रं स्वातिं च वन्दे, तथा स्वातिशिष्यं हारीतं च हारीतसगोत्रमेव श्यामार्यं, शिष्यं च वन्दे कौशिकसगोत्रं साण्डिल्यं, किम्भूतं?-आर्यजीतधरं आराद्यातं सर्वहेयधर्मेभ्य इत्यार्य्य, जीतमिति सूत्रं, जीतं मर्यादा व्यवस्था स्थितिः कल्प इति पर्यायाः, मर्यादादिकारणं च सूत्रमिति भावनीयं, धारयतीति धरः, आर्यजीतस्य धरः २ तं, अन्ये तु व्याचक्षते--किल साण्डिल्यस्य शिष्यः आर्यसगोत्रो जीतधरनामा सूरिरासीदिति गाथार्थः ॥

तिसमुद्द० गाहा ॥ (*२७-४९) ॥ साण्डिल्यशिष्यं वन्दे, आर्यसमुद्रमिति क्रिया, किम्भूतं?-त्रिसमुद्रख्यातकीर्तिं पूर्वदक्षिणापरास्त्रयः समुद्राः उत्तरतस्तु हिमवान् वैताढयो वेति, अत्रान्तरे प्रथितकीर्तिमित्यर्थः, द्वीपसमुद्रेषु गृहीतप्रमाणं अति-

शयेन द्वीपसागरप्रज्ञप्तिविज्ञायकमिति भावः, अक्षुभितसमुद्रवद् गम्भीरो २ अतस्तमिति गाथार्थः ॥

भणग० गाहा ॥(*२८-५०)॥ आर्यसमुद्रशिष्यं वन्दे आर्यमङ्गुमिति योगः, किम्भूतं?-भणकं कालिकादिसूत्रार्थं भणतीति भणः स एव प्राकृतशैल्या भणकस्तं, कारकं कालिकादिसूत्रोक्तमेवोपधिप्रत्युपेक्षणादिक्रियाकलापं करोतीति कारकस्तं, ध्यातारं धर्मध्यानं ध्यायतीति ध्याता तं, इहौघतः कारकमित्युक्ते प्रधानपरलोकांगताख्यापनार्थं ध्यानस्य ध्यातारमिति विशेषाभिधानं, यत इत्थंभूतः अत आह-प्रभावकं ज्ञानदर्शनगुणानां यथावस्थितपदार्थावबोधादीनाम्, एकग्रहणात्तज्जातीयग्रहणाच्चरणपरिग्रहः, श्रुतसागरपारगं धीरमिति गाथार्थः ।

णाणम्मि० गाहा (* २९-५० ) आर्यमंगुशिष्यं आर्यनन्दिलक्षपणं शिरसा वन्दे, प्रसन्नमनसं, किम्भूतं ?-ज्ञाने दर्शने च तपसि विनये च, अनेन चरणमाह, नित्यकालं उद्युक्तम्-अप्रमादिनमिति गाथार्थः ॥

वड्डउ गाहा (* ३०-५० ) वर्द्धतां-वृद्धिमुपयातु, कोऽसौ ?--वाचकवंशः, तत्र विनेयेभ्यः पूर्वगतं सूत्रमन्यच्च वाचयन्तीति वाचकाः तेषां वंशः भाविपुरुषपर्वप्रवाहः, किम्भूतः ?-यशोवंशः, अनेन विपक्षव्यवच्छेदमाह, तथा ह्यलमयशःप्रधानस्य संसारहेतोः परमगुनिविधृतलिंगविडम्बकस्य वृध्ध्येति, केषां सम्बन्धिसम्भूतः?-आर्यनन्दिलक्षपणशिष्याणां आर्यनागहस्तिनां, किम्भूतानां ?-व्याकरणभंगिककर्मप्रकृतिप्रधानानां तत्र व्याकरणं-प्रश्नव्याकरणं शब्दप्राभृतं वा करणं-पिण्डविशुध्ध्यादि, उक्तं च-"पिंडविसोही समिती भावण पडिमा य इंदियणिरोहो । पडिलेहण गुत्तीओ अभिग्गहा चेव करणं तु ॥१॥" भंगिकाः-चतुर्भं-

गिकाद्यास्तच्छ्रुतं वा कर्मप्रकृतिः प्रतीता एतेषु प्ररूपणामधिकृत्य प्रधानानामिति गाथार्थः ॥

**जच्चंधणधाउसमप्पहाण० गाहा** ( * ३१-५१ ) जात्यश्चासावंजनधातुश्चेति समासः तत्समा प्रभा-देहच्छाया येषां ते तथाविधास्तेषां, मा भूदत्यन्तकृष्णसम्प्रत्ययस्तत आह---**मुद्रिकाकुवलयनिभानां** पक्वसरसद्राक्षानीलोत्पलनिभानामित्यर्थः, रत्नविशेषः कुवलयमित्यन्ये, तथाऽप्यविरोधः, वर्द्धतां वाचकवंशः, केषां ?-आर्यनागहस्तिशिष्याणां रेवतिनक्षत्रनाम्नां रेवतिवाचकानामिति गाथार्थः ॥

**अयलपुरा० गाहा** (* ३२-५१) अचलपुरात् निष्क्रान्तान् कालिकश्रुतानुयोगेन नियुक्ताः कालिकश्रुतानुयोगिकास्तान् यद्वा कालिकश्रुतानुयोग एषां विद्यत इति समासस्तान् कालिकश्रुतानुयोगिनः, धीरान् स्थिरान्, ब्रह्मद्वीपिकान् सिंघान् ब्रह्मद्वीपिकशाखोपलक्षितान् सिंघाचार्यान् रेवतिवाचकशिष्यान्, वाचकपदं तत्कालापेक्षया उत्तमं प्रधानं प्राप्तानिति गाथार्थः ॥

**जेसिं० गाथा** ( * ३३-५१ ) येषामयमनुयोगः प्रचरति अद्याप्यर्द्धभरते वैताढ्यादारतः, बहुनगरेषु निर्गतं प्रसिद्धं यशो येषां ते बहुनगरनिर्गतयशसः तान् वन्दे, सिंघवाचकशिष्यान् स्कान्दिलाचार्यान्, कहं पुण तेसिं अणुओगो ?, उच्यते, बारससंवच्छरिए महन्ते दुब्भिक्खे काले भत्तट्ठा फिडियाणं गहणगुणणणुप्पेहाऽभावतो सुत्तं विप्पणट्ठं, पुणो सुभिक्खे काले जाते महुराए महन्ते समुदए खंदिलायरियप्पमुहसंघेण जो जं संभरइत्ति एवं संघडितं कालियं सुयं, जम्हा एयं महुराते कयं तम्हा माहुरा वायणा भन्नति, सा य खंदिलायरियसम्मतत्तिकाउं तस्संतिओ अणुओगो भण्णति, अन्ने भणंति-जहा सुयं णो णट्ठं, तम्मि दुब्भि-

क्खकाले जे अन्ने पहाणा अणुओगधरा ते विणट्ठा, एगे खंदिलायरिए संधरे, तेण महुराए पुणो अणुओगो पवत्तिओत्ति महुरा वायणा भन्नइ, तस्संतिओ अणुओगो भण्णइत्ति गाथार्थः ॥

तत्तो० गाहा ( * ३४-५१ ) ततः स्कन्दिलाचार्यशिष्यं हिमवन्तं वन्दे शिरसेति क्रिया, किम्भूतं?-हिमवन्महाविक्रमं हिमवत इव महाविक्रमो-विहारव्याप्त्यादिलक्षणो यस्य स तथाविधस्तं 'धीपरक्कममणंत' न्ति अनन्तधृतिपराक्रमं, प्राकृतशैल्या तु अन्यथोपन्यासः, अनन्तः धृतिप्रधानः पराक्रमः कर्मक्रियता वा ( शत्रुजये ) यस्य स तथाविधस्तं 'सज्झायमणंतधरं' ति अनन्तस्वाध्यायधरं, धरतीति धरः अनन्तगमपर्यायत्वादनन्तं—सूत्रं तद्विषयः स्वाध्यायस्तस्य धर इति समासः तमिति गाथार्थः ॥

कालिय० गाहा ( * ३५-५२ ) मिउ० गाहा ( ३६-५२ ) कालिकश्रुतानुयोगस्य धारकान्, धारकांश्च पूर्वाणां-उत्पादादीनां, हिमवत्क्षमाश्रमणान् वन्दे, तथैतच्छिष्यानेव वन्दे नागार्जुनाचार्यानिति गाथार्थः ॥ किंभूतान् ?-मृदुमार्दवसम्पन्नान् उपलक्षणत्वान्मृदुत्वस्य, कान् ?-क्षमामार्दवार्जवसन्तोषसम्पन्नानित्यर्थः, आनुपूर्व्या वयःपर्यायकालगोचरया वाचकत्वं प्राप्तान्, ऐदंयुगीनानामपि सामाचारीप्रदर्शनपरमेतत्, न चायुक्तं द्वितीयपदमाश्रित्यैदंयुगीनानामपि युज्यते कालोचितानुपूर्वी विहाय क्वचिदप्याचार्यत्वाद्यारोपणं, महापुरुषाणां गौतमादीनामाशातनाप्रसंगात्, कृतं प्रसंगेन, संसार एव दण्डो भगवदाज्ञावितथकारिणां इति, ओघश्रुतसमाचरकान् ओघश्रुतम्-उत्सर्गश्रुतं तत् समाचरन्ति ये ते तथाविधास्तान् नागार्जुनवाचकान् वन्दे इति गाथार्थः ॥

वरकणग० अड्ड० भूआहियय० ॥ ( * ३७ । ३८ । ३९--५२ ) ॥ इदं गाथात्रयमपि प्रायो निगदसिद्धमेव, नवरं भव्यजनहृदयदयितान् भव्यजनहृदयवल्लभान्, तथा सुविज्ञातबहुविधस्वाध्यायप्रधानान् बहुविध आचारादिभेदात् स्वाध्यायः, अनुयोजिता यथोचिते वैयावृत्त्यादौ वरवृषभाः-सुसाधवो यैस्तान्, नागेन्द्रकुलवंशनान्दिकरानिति प्रमोदकरानित्यर्थः, भूतहितप्रगल्भान्, भूतदिन्नाचार्यान् इत्यत्रानुस्वारोऽलाक्षणिकः, भवभयव्यवच्छेदकरानिति सदुपदेशादिना संसारभयव्यवच्छेदकरणशीलान् ।

'सुमुणिय० ॥ गाहा ( * ४० ) ॥, अनेकधा सत्त्वहितनिपुणानिति भावः, वन्देऽहं भूतदिन्नाचार्यशिष्यं, वन्देऽहं लोहिच्चामिति क्रिया, किम्भूतं ?-सुष्ठु विज्ञातं नित्यानित्यं येन स तथाविधस्तं, किं ज्ञातं ?, विशेषणान्यथाऽनुपपत्तेः वस्तु इति गम्यते, यथा 'सवच्छा धेनु' रित्युक्ते गोरवडवाया विशेषणायोगादिति, तच्च वस्तु सचेतनाचेतनं, तत्र सचेतनमात्मा चेतनत्वाद्यपेक्षया नित्यः नारकतिर्यङ्नरामरपर्यायापेक्षया चानित्यः, एवमचेतनमप्यण्वादि विज्ञातव्यं, तथाहि--परमाणुरजीवत्वमूर्त्तत्वादिभिर्नित्यः, वर्णादिभिर्व्यणुकादिभिस्त्वनित्य इति, उक्तश्च-'सर्वव्यक्तिषु नियतं क्षणे२ऽन्यत्वमथ च न विशेषः । सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थाना ॥ १ ॥ दित्यत्र बहु वक्तव्यं तच्च नोच्यते ग्रन्थविस्तरभयाद्, गमनिकामात्रप्रधानोऽयमारंभ इति, अनेन न्यायवेदित्वमाह, सुविज्ञातसूत्रार्थधारकमित्यनेन त्वोघत एव स्वभ्यस्तसूत्रार्थधारकामिति सद्भावोद्भावना, तथ्यमित्यनेन सम्यक्प्ररूपकत्वमाहेति गाथार्थः ॥

अत्थमहत्थक्खाणि० गाहा॥(*४१-५२)॥ लौहित्यशिष्यं प्रयतःसन् अनुत्सृष्टप्रयत्नपरः सन्नित्यर्थः, प्रणमामि दुष्य-

गणिनमिति क्रिया, किम्भूतं ?--अर्थमहार्थखानिं खानिरिव खानिः अर्थमहार्थानां खानिः २ तं, तत्र भाषाऽभिधेयाः अर्थाः विभाषावार्तिकगोचरा महार्था इति, सुश्रमणव्याख्यानकथने निवृत्तिर्यस्य स तथाविधस्तं, तत्र व्याख्यानं प्रतीतं कथनं-संशये सति विनेयप्रश्नोत्तरकालभावि व्याकरणं, अथवा व्याख्यानम्-अनुयोगः कथनमोघतो धर्मस्य, धर्मकथेत्यर्थः, प्रकृत्या स्वभावेन मधुरवाचं मधुरगिरमिति गाथार्थः ॥

सुकुमालकोमल० गाहा ॥(*४२-५४)॥ निगदसिद्धा, एवं आवलिकाक्रमेण महापुरुषाणां स्तवमभिधाय साम्प्रतं सामान्येनैव श्रुतधरनमस्कारं प्रतिपिपादयिषुराह—

जे अन्ने भगवंते० ॥(*४३-५४)॥ ये चान्येऽतीता भाविनश्च भगवन्तः, श्रुतरत्नोपपेतत्वात् समग्रैश्वर्यादिमन्त इत्यर्थः, कालिकश्रुतानुयोगिनो धीराः सत्त्ववन्तस्तान् प्रणम्य शिरसा उत्तमाङ्गेन ज्ञानस्य-आभिनिबोधिकादेः प्ररूपणं वक्ष्ये, क एवमाह-दूष्यगणिशिष्यो देववाचक इति गाथार्थः ॥ इदं च पञ्चप्रकारं ज्ञानम्, एतत्प्रतिपादकं चाध्ययनं योग्येभ्य एव विनेयेभ्यो दीयते, नायोग्येभ्य इत्यतो योग्यायोग्यविभागोपदर्शनार्थमेव तावदिदमाह—

सेलघण० गाहा ॥(*४४-५४)॥ आह-शुभाध्ययनप्रदानाधिकारे समभावव्यवस्थितानां सर्वसत्त्वहितायोद्यतानां महापुरुषाणां अलं योग्यायोग्यविभागनिरीक्षणेन, न हि परहितार्थमिह महादानोद्यता महीयांसोऽर्थिगुणमपेक्ष्य प्रदानक्रियायां प्रवर्त्तन्ते दयालव इति, अत्रोच्यते, ननु यत एव शुभाध्ययनप्रदानाधिकारे समभावव्यवस्थिताः सर्वसत्त्वहितायोद्यता महापुरुषाश्च गुरवः अत एव

योग्या-
योग्याः

योग्यायोग्यविभागोपदर्शनं न्याय्यं, मा भूदयोग्यप्रदाने तत्सम्यग्नियोगाक्षमार्थिजनानर्थ इति, न खलु तत्त्वतोऽनुचितप्रदानेनाया-
सहेतुनाऽविवेकिनमर्थिजनमनुयोजयन्तोऽप्यनवगतपरार्थसम्पादनोपाया भवन्ति दयालव इत्यवधूय मिथ्याभिमानमालोच्यताम-
तदिति। आह-क इवायोग्यप्रदाने दोष इति, उच्यते, स ह्यचिन्त्यचिन्तामणिकल्पमनेकभवशतसहस्रोपात्तानिष्टदुष्टाष्टकर्मराशिजनित-
दौर्गत्यविच्छेदकमपीदमयोग्यत्वादवाप्य न विधिवदासेवते, लाघवं चास्य समापादयति, ततो विधिसमासेवकः कल्याणमिव मह-
दकल्याणमासादयति, उक्तं च-'आमे घडे निहत्तं जहा जलं तं घडं विणासेइ। इय सिद्धंतरहस्सं अप्पाहारं विणासेई ॥१॥' इत्यादि,
अतोऽयोग्यदाने दातृकृतमेव वस्तुतस्तस्य तदकल्याणमिति, अलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, तत्राधिकृतगाथां प्रपञ्चतः आवश्य-
कानुयोगे व्याख्यास्यामः, इह पुनः स्थानाशून्यार्थं भाष्यगाथाभिर्व्याख्यायत इति ॥

उल्लेऊण न सक्को गज्जइ इय मुग्गसेलओ रन्ने। तं संवट्टगमेहो सोउं तस्सोवरिं पडइ ॥ १ ॥ रविओत्ति ठिओ मेहो उल्लो
मि णवत्ति गज्जइ य सेलो। सेलसमं गाहेस्सं निव्विज्जइ गाहगो एवं ॥ २ ॥ आयरिए सुत्तंमि य परिवाओ सुत्तअत्थपलिमंथो।
अन्नेसिपि य हाणी पुट्ठावि न दुद्धया वंझा ॥ ३ ॥ वुट्ठेऽवि दोणमेहे ण कण्हभोमाउ लोट्टए उदगं। गहणधरणासमत्थे इय देयम-
च्छित्तिकारिम्मि ॥ ४ ॥ भाविय इयरे य कुडा अपसत्थ पसत्थ भाविया दुविहा। पुप्फाईहि पसत्था सुरतेल्लाईहिं अपसत्था ॥५॥
वम्मा य अवम्मावि य पसत्थवम्मा य होंति अग्गेज्झा। अपसत्थअवम्मावि य तप्पडिवक्खा भवे गेज्झा ॥६॥ कुप्पवयणओस-
न्नेहिं भाविया एवमेव भावकुडा। संविग्गेहिं पसत्था वम्माऽवम्मा य तह चेव ॥ ७ ॥ जे पुण अभाविया खलु ते चतुधा अथविमो
गमो अन्नो। छिद्द कुड भिन्न खंडे सगले य परूवणा तेसिं ॥ ८ ॥ सेले य छिड्ड चालिणि मिहो कहा सोउमुट्ठियाणं तु। छिड्डाऽऽह

॥ २१ ॥

तत्थ विद्धो सुमरिंसु सरामि णेदाणिं ॥ ९ ॥ एगेण विसइ बीएण णीइ कण्णेण चालणी आह । धन्नऽत्थ आह सेलो जं पविसति नीति वा तुज्झं ॥ १० ॥ तावसखउरकिढिणयं चालणिपडिवक्खि ण संदइ दवंपि । परिपूणगम्मि य गुणा गलंति दोसा य चिट्ठंति ॥ ११ ॥ सव्वन्नुप्पामन्ना दोसा हु न संति जिणमते केई । जं अणुवउत्तकहणं अपत्तमासज्ज व हविज्ज ॥ १२ ॥ अंबत्तणेण जीहाए कूचिया होइ खीरमुदगम्मि । हंसो मोत्तूण जलं आवियइ पयं तह सुसीसो ॥ १३ ॥ सयमवि न पियइ महिसो ण य जूहं पियइ लोलियं उदगं । विग्गहविकहाहि तहा अथक्कपुच्छाहि य कुसीसो ॥ १४ ॥ अवि गोपयंमिवि पिए सुढिओ तणुयत्तणेण तोंडस्स । न करेइ कलुसतोयं मेसो एवं सुसीसोवि ॥ १५ ॥ मसउव्व तुदं जच्चादिएहिं निच्छुब्भए कुसीसो उ । जलुगा व अदूमितो पियइ सुसीसोवि सुयणाणं ॥ १६ ॥ छड्डेउं भूमीए खीरं जह पियइ दुट्ठमज्जारी । परिसुड्डियाण पासे सिक्खइ एवं विणयभंसी ॥ १७ ॥ पाउं थोवं थोवं खीरं पासाइं जाहओ लिहइ । एमेव जियं काउं पुच्छइ मइमं न खिज्जेइ ॥ १८ ॥ अण्णो दोज्झिहि कल्लं णिरत्थयं किं वहामि से चारिं ? । चउचरणगवी उ मता अवन्न हाणी य बडुगाणं ॥ १९ ॥ मा मे होज्ज अवण्णो गोवज्झा मा पुणो व न दलिज्जा । वयमवि दोज्झामो पुणो अणुग्गहो अन्नदूढेऽवि ॥ २० ॥ सीसा पडिच्छगाणं भरोत्ति तेऽवि हु सीसगभरोत्ति । ण करेंति सुत्तहाणी अन्नत्थवि दुल्लभं तेसिं ॥ २१ ॥ कोमुदिया तह संगामिया य उब्भूतिगा उ तिन्नि भेरीओ । कण्हस्सासी उ (ण्हु) तया असिवोवसमी चउत्थी उ ॥ २२ ॥ सक्कपसंसा गुणगाहि केसवा णेमिवंद सुणदन्ता । आसरयणस्स हरणं कुमार भंगे य पुयजुज्झं ॥ २३ ॥ णेहि जिओमित्ति अहं असिवोवसमीइ संपयाणं च । छम्मासिय घोसणया पसमइ ण य जायए अण्णो ॥ २४ ॥ आगंतु वाधिखोभे महिड्डि मोल्लेण कंथ दंडणता । अट्ठमआराहण अन्नभेरि अन्नस्स ठवणं च ॥ २५ ॥

मुक्कं तया अगहिते दुपरिग्गहियं कयं तया कलहो । पिट्टण अइचिर विक्कय गतेसु चोरा य ऊणग्घं ॥ २६ ॥ मा णिण्हव इय दातुं उवजुंजिय देहि किं विचिंतेसि? । विच्चामेलियदाणे किलिस्ससी तं चऽहं चेव ॥ २७ ॥ भणिया जोग्गा २ सीसा गुरवो य तत्थ दोण्हंपि । वेयालियगुणदोसो जोगो जोगस्स भासेज्जा ॥ २८ ॥

एवं तावद्विभागतो योग्यायोग्यविनेयविभागोपदर्शनं कृत्वा साम्प्रतं सामान्येन पर्षदं प्ररूपयन्नाह—

**सा समासओ तिविहा पन्नत्तेत्यादि,** सा पर्षत् **समासतः** संक्षेपेण **त्रिविधा** त्रिप्रकारा **प्रज्ञप्ता** प्ररूपिता, कैः?—तीर्थकरगणधरैरिति गम्यते, 'तद्यथे' त्युदाहरणोपन्यासार्थः, 'ज्ञिके'त्यत्र'ज्ञा अवबोधन' इत्यस्य 'इगुपधज्ञाप्रीकिरः क'इति ( ३-१-१३५ ) कप्रत्ययः, 'आतो लोप इटि च क्ङिती'त्या (६-४-६४) कारलोपः परगमनं टाप् जानातीति ज्ञा कप्रत्ययः 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुप' इति ( ७-३-४४ ) इत्त्वं, ज्ञिका-परिज्ञानवती, न ज्ञिका अज्ञिका- तद्विलक्षणा, दुर्विदग्धा मिथ्यावलेपगर्भा। तत्थिमा जाणिया-'गुणदोसविसेसण्णू अणभिग्गहिया य कुस्सुतिमएसु । एसा जाणगपरिसा गुणतत्तिल्ला अगुणवज्जा ॥ १ ॥' इमा तु अयाणिया-' पगतीमुद्ध अयाणिय मिगछावयसीहकुक्कुडयभूया । रयणमिव असंठविया सुहसन्नप्पा गुणसमिद्धा ॥ २ ॥ इमा पुण दुव्वियड्डिया- किंचिम्मत्तग्गाही पल्लवगाही य तुरियगाही य। दुवियड्डिया उ एसा भणिया तिविहा भवे परिसा ॥ ३ ॥ साम्प्रतमिष्टदेवतास्तवादिसम्पादितसकलसौहित्यो देववाचकोऽधिकृताध्ययनविषयभूतस्य ज्ञानस्य प्ररूपणां कुर्वन्निदमाह—

'णाणं पंचविहं पण्णत्तं' इत्यादि, ( सूत्रम् १-६५ ) ज्ञातिः ज्ञानं ' कृत्यल्युटो बहुलं ' इति वचनाद्भावसाधनः, संविदि-

त्यर्थः, ज्ञायते वाऽनेनेति (अस्मादिति वा) ज्ञानं तदावरणक्षयोपशमादेव, ज्ञायतेऽस्मिन्निति क्षयोपशमे सति, ज्ञानमात्मैव विशिष्ट-क्षयोपशमयुक्तो जानातीति वा ज्ञानं तदेव स्वविषयसंवेदनरूपत्वात् तस्य, पंचविधमित्यत्र पञ्चेति संख्यावाचकः विधानं विधेत्यत्र 'डुधाञ् धारणपोषणयो' रित्यस्यानुबन्धलोपे कृते विपूर्वस्य स्त्रियां वर्त्तमानायां 'षिद्भिदादिभ्योऽङि' ति ( ३-३-१०४ ) वर्त्तमाने 'आतश्चोपसर्गे' ( ३-१-१३६ ) इत्यनेन अङ्प्रत्ययः अनुबंधलोपे कृते आतो लोप इति च क्ङिती ( ६-४-६४ ) त्यनेन चाकारलोपे कृते परगमने च 'अजाद्यतष्टाबिति ( ४-१-४ ) टाप्प्रत्ययोऽनुबन्धलोपः परगमनं विधा, पंच विधा अस्येति समासो 'ह्रस्वो नपुंसके प्रातिपदिकस्ये'ति ( १-२-४७ ) वर्त्तमाने 'गोस्त्रियोरुपसर्जनस्ये(१-२-४८)त्यनेन ह्रस्वत्वं, सुअम्भावः पंचविधं-पंचप्रकारमित्येतदेवमनवद्यं, कुव्याख्याव्यपोहार्थं चैतदेवं निदर्शितमित्यलं प्रसंगेन, प्रज्ञप्तं-प्ररूपितं, कैः?-अर्थतस्तीर्थकरैः सूत्रतो गणधरैरिति, उक्तं च—"अत्थं भासइ अरहा सुत्तं गंथंति गणहरा णिउणं। सासणस्स हियट्ठाए तओ सुत्तं पवत्तइ ॥ १ ॥" इत्यनेन स्वमनीषिकाव्यपोहमाह, अथवा प्राज्ञादाप्तं प्राज्ञाप्तं, तीर्थकरादाप्तमिति प्राप्तं गौतमादिभिः, अथवा प्राज्ञैराप्तं प्राज्ञाप्तं गौतमादिभिः, प्रज्ञया वाऽऽप्तं प्रज्ञाद्वाऽऽप्तं प्रज्ञाप्तं, सर्वैरेव संसारिभिरिति, तथाहि-न प्रज्ञाविकलैरिदमवाप्यते इति भावनीयं, तद्यथेत्युदाहरणोपन्यासार्थः, आभिनिबोधिकज्ञानं श्रुतज्ञानं अवधिज्ञानं मनःपर्यायज्ञानं केवलज्ञानं चेति, तत्रार्थाभिमुखो नियतो बोधोऽभिनिबोधः स एव स्वार्थिकप्रत्ययोपादानादाभिनिबोधिकं, अभिनिबोधे वा भवं तेन वा निर्वृत्तं तन्मयं तत्प्रयोजनं वेत्याभि-निबोधिकं, अभिनिबुध्यते वा तदित्याभिनिबोधिकं:-अवग्रहादिरूपं मतिज्ञानमेव, तस्य स्वसंविदितरूपत्वाद्भेदोपचारादित्यर्थः, अभिनिबोध्यतेऽनेनेत्याभिनिबोधिकं-तदावरणक्षयोपशम इति भावार्थः, अभिनिबुध्यतेऽस्मादिति वा आभिनिबोधिकं-तदावरणकर्म-

क्षयोपशम एव, अभिनिबुद्ध्यतेऽस्मिन्निति वा क्षयोपशमे सत्याभिनिबोधिकं, आत्मैव वा अभिनिबोधोपयोगपरिणामानन्यत्वादभिनिबुध्यत इति, आभिनिबोधिकं च तज्ज्ञानं चाभिनिबोधिकज्ञानं १ तथा श्रूयते इति श्रुतं–शब्द एव, भावश्रुतकारणत्वात्, कारणे कार्योपचारादिति भावार्थः, श्रूयते वा अनेनेति श्रुतं-तदावरणक्षयोपशम इति हृदयं, श्रूयतेऽस्मादिति वा श्रुतं-तदावरणक्षयोपशम एव, श्रूयतेऽस्मिन्निति वा क्षयोपशमे सति श्रुतं, आत्मैव श्रुतोपयोगपरिणामानन्यत्वाच्छृणोतीति, श्रुतं च तत् ज्ञानं च श्रुतज्ञानं२ तथाऽवधीयतेऽनेनेत्यवधिः, अवधीयत इत्यधोऽधो विस्तृतं परिच्छिद्यते मर्यादया वेति अवधिज्ञानावरणकर्मक्षयोपशम एव, तदुपयोगहेतुत्वादित्यर्थः, अवधीयतेऽस्मादित्यवधिस्तदावरणकर्मक्षयोपशम एव, अवधीयते तस्मिन्निति वेत्यवधिर्भावार्थः पूर्ववदेव, अवधानं वा अवधिः, विषयपरिच्छेदनमित्यर्थः, अवधिश्चासौ ज्ञानं च अवधिज्ञानं ३, तथा मनःपर्यायज्ञानमित्यत्र परिः सर्वतो भावे अयनं अयः गमनं वेदनमिति पर्यायाः, परि अयः पर्ययः, पर्ययनं पर्यय इत्यर्थः, मनसि मनसो वा पर्ययो मनःपर्ययः, सर्वतस्तत्परिच्छेद इत्यर्थः, स एव ज्ञानं मनःपर्यायज्ञानं, अथवा मनसः पर्याया मनःपर्याया धर्मा बाह्यवस्त्वालोचनादिप्रकारा इत्यनर्थान्तरं तेषु ज्ञानं मनःपर्यायज्ञानं तेषां वा सम्बन्धि ज्ञानं मनःपर्यायज्ञानं, इदं चार्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिसंज्ञिमनोगतद्रव्यालम्बनमेवेति भावार्थः ४, तथा केवलम्-असहायं मत्यादिज्ञाननिरपेक्षं, शुद्धं वा केवलमावरणमलकलंकांकरहितं, सकलं वा केवलं तत्प्रथमतयैवाशेषतदावरणाभावतः सम्पूर्णोत्पत्तेः, असाधारणं वा केवलं अनन्यसदृशमिति हृदयं, ज्ञेयानन्तत्वादनन्तं वा केवलं यथावस्थिताशेषभूतभवद्भाविभावस्वभावाविर्भासीति भावना, केवलं च तज्ज्ञानं च केवलज्ञानं ५ ॥ आह- एषां ज्ञानानामित्थमुपन्यासे किं प्रयोजनमिति, उच्यते, इह स्वामिकालकारणविषयपरोक्षत्वसाधर्म्यात् तद्भावे च शेषज्ञानभावादादावेव मतिश्रुत-

ज्ञानयोरुपन्यास इति, तथाहि-य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्य, 'जत्थ मतिणाणं तत्थ सुयणाणं' ति वचनात्, तथा यावान् मतिज्ञानस्य स्थितिकालस्तावानेवेतरस्य, प्रवाहापेक्षया अतीतानानागतवर्तमानः सर्व एव, अप्रतिपतितैकजीवापेक्षया च षट्षष्टिसागरोपमाण्यधिकानीति, उक्तं च भाष्यकारेण—"दो वारे विजयाइसुं गयस्स तिन्नऽच्चुते अहव ताइं । अइरेगं नरभवियं णाणाजीवाण सव्वद्धं ॥ १ ॥" यथा मतिज्ञानं क्षयोपशमहेतुकं तथा श्रुतज्ञानमपि, यथा च मतिज्ञानमादेशतः सर्वद्रव्यादिविषयमेवं श्रुतज्ञानमपि, यथा मतिज्ञानं परोक्षं एवं श्रुतज्ञानमपीति, तथा मतिज्ञानश्रुतज्ञानयोरेव अवध्यादिज्ञानभावादिति। आह-एवमपि मतिज्ञानमादौ किमर्थमिति?, उच्यते, मतिपूर्वकत्वाद्विशिष्टमत्यंशरूपत्वाद्वा श्रुतस्यादौ मतिज्ञानमिति, उक्तं च-"मतिपुव्वं जेण सुयं तेणादीए मती विसिट्ठो वा । मतिभेओ चेव सुयं तो मतिसमणंतरं भणियं ॥ १ ॥" इति, पर्याप्तं विस्तरेण । तथा कालविपर्ययस्वामिलाभसाधर्म्यान्मतिश्रुतज्ञानानन्तरमवधिज्ञानस्योपन्यासः, तथाहि—यावानेव मतिज्ञानश्रुतज्ञानयोः स्थितिकालः प्रवाहापेक्षयाऽप्रतिपतितैकसत्त्वाधारापेक्षया च तावानेवावधिज्ञानस्यापि अतः स्थितिसाधर्म्यं, तथा यथैव मतिज्ञानश्रुतज्ञाने विपर्ययज्ञाने भवत एवमिदं मिथ्यादृष्टेर्विभंगज्ञानं भवतीति विपर्ययसाधर्म्यं, तथा य एव मतिज्ञानश्रुतज्ञानयोः स्वामी स एवावधिज्ञानस्यापि (इति) भवति स्वामिसाधर्म्यं, तथा विभंगज्ञानिनस्त्रिदशादेः सम्यग्दर्शनावाप्तौ युगपदेव ज्ञानत्रयलाभसम्भवाल्लाभसाधर्म्यं । तथा छद्मस्थविषयभावाध्यक्षसाधर्म्यादवधिज्ञानानन्तरं मनःपर्यायज्ञानस्योपन्यासः, तथाहि—यथाऽवधिज्ञानं छद्मस्थस्य भवत्येवं मनःपर्यायज्ञानमपि छद्मस्थस्यैवेति छद्मस्थसाधर्म्यं, तथा यथाऽवधिज्ञानं रूपिद्रव्यविषयमेवं मनःपर्यायज्ञानमपि सामान्येनेति विषयसाधर्म्यं, तथा यथाऽवधिज्ञानं क्षायोपशमिके भावे तथा मनः-

पर्यायज्ञानमपि इति भावसाधर्म्यं, तथा यथा अवधिज्ञानं प्रत्यक्षमेवं मनःपर्यायज्ञानमपीत्यध्यक्षसाधर्म्यं। तथा मनःपर्यायज्ञानानन्तरं केवलज्ञानस्योपन्यासः, तस्य सकलज्ञानोत्तमत्वात्, तथा अप्रमत्तयतिस्वामिसाधर्म्यात्, तथाहि—यथा मनःपर्यायज्ञानमप्रमत्तयतेरेव भवति एवं केवलज्ञानमपि अप्रमत्तभावयतेरेवेति साधर्म्यं, तथाऽवसानलाभाच्च, यो हि सर्वज्ञानानि समासादयति स खल्वन्त एवेदमाप्नोतीति भावना, विपर्ययाभावसाधर्म्याच्च, तथाहि-यथा मनःपर्यायज्ञानं विपरीतं न भवत्येवं केवलमपि इति साधर्म्यं, अलं विस्तरेणेति सूत्रार्थः,

'तं समासतो दुविहं पन्नत्त'मित्यादि (२-७१) तत् पंचप्रकारं ज्ञानं **समासतः** संक्षेपेण **द्विविधमिति** द्वे विधे अस्येति द्विविधं-द्विप्रकारं **प्रज्ञप्तं** प्ररूपितं तद्यथेत्युदाहरणोपन्यासार्थम्, **प्रत्यक्षं च परोक्षं च**, तत्र प्रत्यक्षमित्यत्र जीवोऽक्षः, कथं?, 'अशू-व्याप्तौ'वित्यस्य ज्ञानात्मनाऽश्नुतेऽर्थानित्यक्षः, व्याप्नोतीत्यर्थः, 'अश भोजन' इत्यस्य वाऽश्नाति सर्वाऽर्थानित्यक्षः, पालयति भुंक्ते चेत्यर्थः, तमक्षं प्रति वर्तत्त इति प्रत्यक्षं, आत्मनः अपरनिमित्तमवध्याद्यतीन्द्रियमिति भावार्थः, चशब्दः स्वगतानेकभेदप्रदर्शनपरः, विचित्रतां चास्योत्तरत्र वक्ष्यामः, **परोक्षं** चेत्यत्राक्षस्य-आत्मनः द्रव्येन्द्रियाणि द्रव्यमनश्च पुद्गलमयत्वात् पराणि वर्तन्ते, पृथगित्यर्थः, तेभ्योऽक्षस्य यत् ज्ञानमुत्पद्यते तत् परोक्षं, परनिमित्तत्वाद्धूमादग्निज्ञानवद्, अथवा परैरुक्षा-संबंधनं विषयविषयीभावलक्षणमस्येति परोक्षं, चशब्दः पूर्ववद्, एवमन्यत्राप्युत्प्रेक्ष्य चशब्दार्थो वक्तव्य इति सूत्रार्थः ॥ एवं भेदद्वये उपन्यस्ते सत्यनयोः सम्यक्-स्वरूपमनवगच्छन्नाह चोदकः—

'से किं तं पच्चक्खं १०' (३-७५) सेशब्दो मागधदेशीप्रसिद्धो निपातोऽथशब्दार्थे वर्तते, स च प्रक्रियादिवाचकः, यथोक्तं

'अथ प्रक्रियाप्रश्नानन्तर्य्यमंगलोपन्यासप्रतिवचनसमुच्चयेषु' इहोपन्यासार्थः, किमिति परिप्रश्ने, तत् प्रागुपदिष्टं प्रत्यक्षमिति सूत्रार्थः ॥ एवं चोदकेन प्रश्ने कृते सति न्यायप्रदर्शनार्थमाचार्यः चोदकोक्तानुवादद्वारेण निर्वचनमभिधातुकाम आह—

'पच्चक्खं दुविहं पन्नत्त'मित्यादि, एवमन्यत्रापि यथायोगं प्रश्ननिर्वचनसूत्राणां पातनिका कार्येति, प्रत्यक्षं द्विविधं प्रज्ञप्तं, तद्यथा-इन्द्रियप्रत्यक्षं नोइन्द्रियप्रत्यक्षं च, इन्द्रियाणां प्रत्यक्षं इन्द्रियप्रत्यक्षं, इहेन्द्रः स्वरूपतो ज्ञानाद्यैश्वर्ययुक्तत्वादात्मा तस्येदमिन्द्रियं, तच्च द्विधा-द्रव्येन्द्रियं च भावेन्द्रियं च,तत्र पुद्गलैर्बाह्यसंस्थाननिर्वृत्तिः कदम्बपुष्पाद्याकृतिविशिष्टोपकरणं च द्रव्येन्द्रियं, 'निर्वृत्त्युपकरणे द्रव्येन्द्रिय' मिति(तत्त्वा.२-१७) वचनात् , श्रोत्रेन्द्रियादिविषया सर्वात्मप्रदेशानां तदावरणक्षयोपशमलब्धिरुपयोगश्च भावेन्द्रियं, 'लब्ध्युपयोगौ भावेन्द्रिय' मिति(तत्त्वा.२-१८) वचनात्, इन्द्रियप्रत्यक्षं न भवतीति नोइन्द्रियप्रत्यक्षं, नोशब्दः सर्वप्रतिषेधे ॥

'से किं त'मित्यादि ( ४-७६ ) अथ किं तदिन्द्रियप्रत्यक्षं ?, तत् इन्द्रियप्रत्यक्षं पञ्चविधं प्रज्ञप्तं, तद्यथा-श्रोत्रेन्द्रियप्रत्यक्षमित्यादि, श्रोत्रेन्द्रियस्य श्रोत्रेन्द्रियप्रधानं वा प्रत्यक्षं २, श्रोत्रेन्द्रियनिमित्तमित्यर्थः, एवं शेषेष्वपि वक्तव्यम् , एतच्चोपचारतः प्रत्यक्षं, न परमार्थतः, कथं ज्ञायत इति चेत् सूत्रप्रामाण्यात् , वक्ष्यति च-"परोक्खं दुविहं पन्नत्तं, तंजहा-आभिणिबोहियणाणपरोक्खं च सुयणाणपरोक्खं च" न च मतिश्रुताभ्यामिन्द्रियमनोनिमित्तमन्यदस्ति यत् प्रत्यक्षमञ्जसा भवेत् , भावे च षष्ठज्ञानप्रसंगाद् विरोध इति, तस्मात् परोक्षमेवेदं तत्त्वत इति, आह-इह लोके लिंगजं परोक्षमिति प्रतीतमिति, उच्यते, इह यदिन्द्रियमनोभिर्बाह्यलिंगप्रत्ययमुत्पद्यते तदेकान्तेनैवेन्द्रियाणामात्मनश्च परोक्षं, परनिमित्तत्वाद्धूमादग्निज्ञानवदित्यतः परोक्षमिति प्रतीतिः,

यत्पुनः साक्षादिन्द्रियमनोनिमित्तं तत्तेषामेव तत्प्रत्यक्षम्, अलिंगत्वाद्, आत्मनोऽवध्यादिवत्, न त्वात्मनः, आत्मनस्तु तत् परोक्षमेव, परनिमित्तत्वाल्लैंगिकवत्, इन्द्रियाणामपि तदुपचारतः प्रत्यक्षं, न परमार्थतः, कथम्?, अचेतनत्वादित्यत्र बहु वक्तव्यं तच्चान्यत्र वक्ष्यामो, मा भूत् प्रथमग्रन्थ एव प्रतिपत्तिगौरवमित्यलं विस्तरेण, आह--'स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणी' ति क्रमः, अयमेव च ज्यायान्, पूर्वपूर्वलाभ एवोत्तरोत्तरलाभाद्, अतः किमर्थमुत्क्रमः?, उच्यते, पश्चानुपूर्व्यादिन्यायज्ञापनार्थं, स्पष्टसंवेदनद्वारेण सुखप्रतिपत्त्यर्थं चेति, इह मनोज्ञानयपीन्द्रियज्ञानतुल्ययोगक्षेममेव द्रष्टव्यं, तथा चाभिनिबोधिकज्ञानप्ररूपणायां प्रत्यक्षत इति **सेतं इंदियपचक्खं** तदेतदिन्द्रियप्रत्यक्षम् ॥

**'से किं तं णोइंदियपचक्खं०'**( ५-७६ ) अथ किं तन्नोइन्द्रियप्रत्यक्षं? नोइन्द्रियप्रत्यक्षं त्रिविधं प्रज्ञप्तं, तद्यथा-अवधिज्ञान-प्रत्यक्षं इत्यादि ॥

**'से किं तं०'**इत्यादि ( ६-७६ ) अथ किं तदवधिज्ञानप्रत्यक्षं?, २ द्विविधं प्रज्ञप्तं, तद्यथा-भवप्रत्ययं च क्षायोपशमिकं च, तत्र भवन्त्यस्मिन् कर्मवशवर्त्तिनः प्राणिन इति भवः-नरकादिजन्मेति भावः, भव एव प्रत्ययः-कारणं यस्य तद्भवप्रत्ययं, च पूर्ववत्, तथा क्षयश्चोपशमश्च क्षयोपशमौ ताभ्यां निर्वृत्तं क्षायोपशमिकं ॥ तत्र यद्येषां भवति तत्तेषामुपदर्शन्नाह—

**'दोण्ह'**मित्यादि ( ७–७६ ) द्वयोर्जीवसमूहयोः भवप्रत्ययं, तद्यथा-देवानां नारकाणां च, तत्र दीव्यन्तीति देवाः, निरुपमक्रीडामनुभवन्तीत्यर्थः, तेषां, तथा नरान् कायन्तीति नरकाः, योग्यतया शब्दयन्तीत्यर्थः, तेषु भवा नारकास्तेषां ॥ अत्राह—न-

न्ववधिज्ञानं क्षायोपशमिके भावे वर्तते देवनारकभवश्चौदयिकस्तत् कथं तद् भवप्रत्ययमिति,उच्यते, क्षायोपशमिकमेव तत्, किंतु स एव देवनारकभवे अवश्यंभावि, पक्षिणां गगनगमनलब्धिनिमित्तवदित्येता भवप्रत्यय इति, उक्तं च-"उदयक्खयखयोवसमोवसमा जं च कम्मुणो भणिया । दव्वं खेत्तं कालं भावं च भावं च संपप्प ॥ ९ ॥( पंचसं०७६ ) तथा द्वयोः क्षायोपशमिकं, तद्यथा–मनुष्याणां पंचेन्द्रियतिर्यग्योनीनां च, न चैषामवश्यंतया भवतीत्यतः सत्यपि क्षायोपशमिकत्वे भवप्रत्ययाद् भिन्नमिदमिति, तत्त्वतस्तु सर्वमेव क्षायोपशमिकमिति ॥ अधुना क्षयोपशमस्वरूपं प्रतिपादयन्नाह—'को हेऊ' इत्यादि, को हेतुः? किंनिमित्तं किंविषयं क्षायोपशमिकं यद्वा किं कारणं क्षायोपशमिकमुच्यते इत्यध्याहारः, अत्र निर्वचनमभिधातुकाम आह-क्षायोपशमिकं तदावरणीयानाम्-अवधिज्ञानावरणीयानां कर्मणां उदीर्णानां उदयावलिकाप्राप्तानां क्षयेण प्रलयेन अनुदीर्णानां चात्मनि व्यवस्थितानामुपशमेन उदयनिरोधेन अवधिज्ञानमुत्पद्यत इति सम्बन्धः, यत एवमतः कर्मोदयानुदयविषयं, अथवा येन तदावरणीयानां कर्मणां उदीर्णानां क्षयेणानुदीर्णानामुपशमेनावधिज्ञानमुत्पद्यते तेन क्षायोपशमिकमित्युच्यत इति, स च क्षयोपशमो विशिष्टगुणप्रतिपत्तिमन्तरेण तथा गुणप्रतिपत्तितश्च भवति, तत्रान्तरेण यथाऽऽकाशे घनघनपटलाच्छादितमूर्त्तेर्दिवसकरमण्डलस्य कथंचिदुपजातरन्ध्रेण विनिर्गतास्तिमिरनिचयप्रलयहेतवः किरणाः स्वावपातदेशास्पदं द्रव्यमुद्योतयन्ति तथा प्रकृतिभास्वरस्यात्मनो मिथ्यात्वादिजनितज्ञानावरणीयादिकर्ममलपटलतिमिरातिरस्कृतस्वभावस्यानादौ संसारे परिभ्रमतो यथाप्रवृत्त्योपजातावधिज्ञानावरणक्षयोपशमविवरस्यावधिज्ञानालोकः प्रसाधयति स्वकार्यमिति, गुणप्रतिपत्तितस्तु मूलगुणादिप्रतिपत्तेर्भवति, यत आह—

'अथवा' इत्यादि ॥ (९-८१) ॥ अथवेति प्रकारान्तरप्रदर्शनार्थं, अन्तरेण प्रतिपत्तिमित्यस्मादिदं प्रकारान्तरमेव, गुणाः-

मूलगुणादयस्तैः **प्रतिपन्नो**-गृहीतो गुणप्रतिपन्न इत्यनेन अतिशयपात्रतामाह, यतः पात्राश्रयिणो गुणाः, उक्तञ्च—"नोदन्वानर्थितामेति, न चाम्भोभिर्न पूर्यते । आत्मा तु पात्रतां नेयः, पात्रमायान्ति सम्पदः ॥ १ ॥" अथवा प्राकृतशैल्या पूर्वापरनिपातकरणात् प्रतिपन्नगुणस्य **अनगारस्य** न गच्छन्तीत्यगाः-वृक्षास्तैः कृतमगारं–गृहं नास्यागारं विद्यते इत्यनगारः परित्यक्तद्रव्यभावगृह इत्यर्थः, तस्य प्रशस्ताध्यवसायस्य तदावरणकर्मक्षयोपशमे सत्यवधिज्ञानं समुत्पद्यते, **तं समासतो** इत्यादि, तद् अवधिज्ञानं **समासतः** संक्षेपेण षड्विधं षट्प्रकारं प्रज्ञप्तं प्ररूपितं, तद्यथा–**अनुगामिकं** अनुगमनशीलं, अनुगामिकं अवधिज्ञानं लोचनवद्गच्छन्तमनुगच्छतीतिभावार्थः, **अननुगामिकं** नावधिज्ञानिनं गच्छन्तमनुगच्छति संकलाप्रतिबद्धप्रदीपवत् इति हृदयं, वर्धते **वर्द्धमानं** तदेव वर्द्धमानकं, संज्ञायां कन्, उत्पत्तिकालादारभ्य प्रवर्द्धमानं, महेन्धननिबन्धनोत्पद्यमानानलज्वालाकलापवदिति भावना, **हीयमानकं** हीयते हीयमानं तदेव हीयमानकं, कुत्सायां कन्, उदयसमयसमनन्तरमेव हीयमानं दग्धेन्धनप्रायधूमध्वजार्चिर्व्रातवदित्यर्थः, **प्रतिपाति** प्रतिपतनशीलं प्रतिपाति कथंचिदापादिताजात्यमणिप्रभाजालवदिति गर्भार्थः, **अप्रतिपाति** न प्रतिपाति अप्रतिपाति क्षारमृत्पुटपाकाद्यापाद्यमानजात्यमणिकिरणनिकरवदित्यभिप्रायः, आह-आनुगामुकानानुगामुकभेदद्वय एव शेषभेदानां वर्द्धमानकादीनामन्तर्भावात् किमर्थमुपन्यास इति, उच्यते, सत्यप्यन्तर्भावे तद्विकल्पद्वयादेव तेषामपरिच्छित्तेः, तथाहि-नानुगामुकमनानुगामुकं चेत्युक्ते वर्द्धमानकादयो गम्यन्त इति, अज्ञातज्ञापनार्थं च शास्त्रप्रवृत्तिरित्यलं प्रसंगेन ।

'**से किं तमाणुगामिक**'मित्यादि ॥ (१०–८२) ॥ अथ किं तदानुगामुकं अवधिज्ञानं?, २ द्विविधं प्रज्ञप्तं, तद्यथा— अन्तगतं च मध्यगतं च, इहान्तः पर्यन्तो भण्यते, नान्तवत्, गतं स्थितमित्यनर्थान्तरं, अन्ते गतमन्तगतं अन्ते स्थितं, तच्च फड्ड-

कावधित्वादात्मप्रदेशान्ते, सर्वात्मप्रदेशक्षयोपशमभावतो वा औदारिकशरीरान्ते, एकदिगुपलम्भाद्वा तदुद्योतितक्षेत्रांते गतमंतगतं, इह चात्मप्रदेशान्तगतमुच्यते, सकलजीवोपयोगे सत्यपि साक्षादेकदेशेनैव दर्शनात्, औदारिकशरीरान्तगतमपि, औदारिकशरीरैकदेशेनैव दर्शनाच्च, यथोक्तक्षेत्रान्तगतं त्ववधिमतस्तदन्तवृत्तेरिति भावना, चशब्दः पूर्ववत्, मध्यगतं इह मध्यः प्रसिद्ध एव दण्डादिमध्यवत्, मध्ये गतं मध्यगतं मध्ये स्थितं, तच्च सर्वत्र फड्डकविशुद्धेरात्ममध्ये सर्वात्ममध्ये सर्वात्मनो वा क्षयोपशमयोगाविशेषेऽपि औदारिकशरीरमध्योपलब्धेः तन्मध्ये सर्वदिगुपलम्भाद्वा तत्प्रकाशितक्षेत्रमध्ये गतं मध्यगतं, अत्र चात्ममध्यगतमभिधीयते, सर्वात्मोपयोगे सत्यपि मध्य एव फड्डकसद्भावात्, साक्षान्मध्यभागेनोपलब्धेः, औदारिकशरीरमध्यगतमप्यादैरिकशरीरमध्यभागेनैवोपलब्धेः, प्रस्तुतक्षेत्रमध्यगतं पुनरवधिज्ञानिनस्तत्र मध्ये भावादिति भावार्थः, चशब्दः पूर्ववत्।

'से किं त'मित्यादि, प्रायः सुगमम्, नवरं उल्का-दीपिका चुडुली-पर्यन्तज्वलिता तृणपूलिका अलातम्-उल्मुकं मणिः-पद्मरागादिः प्रदीपशिखादि ज्योतिः मल्लिकाद्याधारोऽग्निः प्रदीपः प्रतीतः पुरतः-अग्रतो हस्तदण्डादौ गृहीत्वा 'पणोल्लेमाणे पणोल्लेमाणे'त्ति प्रेरयन् २ गच्छेद् यायात् सेतं तदेतत् पुरतोऽन्तगतम्, अयमत्र भावार्थः-स हि गच्छन् उल्कादिभ्यः सकाशात् पुरत एव पश्यति, नान्यत्र, एवं यतोऽवधिज्ञानाद्विविधक्षयोपशमनिमित्तत्वाद्देशपुरत एव पश्यति, नान्यत्र, तत् पुरतोऽन्तगतमभिधीयते इत्येतावताऽशेन दृष्टान्त इत्येवं सर्वत्र योज्यम्। से किं तामित्यादि, निगदसिद्धं, नवरं 'अणुकड्ढेमाणे २'त्ति अनुकर्षन् २, एवं 'परियट्टेमाणे २' परिकर्षन् २, अथ किं तन्मध्यगतमित्यादि निगदसिद्धमेव, नवरं मस्तके शिरसि कृत्वा गच्छेत् तदेतन्मध्यगतमिति, एतदुक्तं भवति-स तेन मस्तकस्थेन सर्वत्र तत्प्रकाशितमर्थं पश्यति, परमेवं यतोऽवधिज्ञानात् तदुद्योतितार्थावगमस्त-

न्मध्यगतमित्येतावताऽंशेन दृष्टान्त इति, इह व्याख्यातार्थं सम्यगनवगच्छन्नाह चोदकः- अंतगतस्स य इत्यादि सूत्रसिद्धं यावत्
'मज्झगतेण'मित्यादि, मध्यगतेनावधिज्ञानेन सर्वतः सर्वासु दिग्विदिक्षु समन्तात् सर्वैरात्मप्रदेशैर्विशुद्धफड्डकैर्वा संख्येयानि वा
असंख्येयानि वा योजनानि जानाति पश्यति, अथवा स मन्ता अवधिज्ञान्येव च गृह्यते, संख्येयानि चेत्यत्र संख्यायन्त इति संख्ये-
यानि- एकादीनि शीर्षप्रहेलिकापर्यन्तानि गृह्यन्ते, तत ऊर्ध्वमसंख्येयानि, तदेतदानुगामुकमवधिज्ञानं इति ।

'से किं त' मित्यादि ॥११-८९॥ प्रकटार्थमेव, नवरं ज्योतिःस्थानं-अग्निस्थानं कृत्वा तस्यैव ज्योतिःस्थानस्य पर्यन्तेषु,
किमेकदिग्गतेषु ?, नेत्याह- परिः सर्वतो भावे, ततश्च परिपर्यन्तेषु २ परिघूर्णन्, परिभ्रमन् इत्यर्थः, तदेव ज्योतिःस्थानं, ज्योतिः-
प्रकाशितं क्षेत्रमित्यर्थः, पश्यति, अन्यत्र गतो न पश्यति, तदुपलम्भाभावात्, तदावरणक्षयोपशमस्य तत्क्षेत्रसम्बन्धसापेक्षत्वात्,
एवमेव अनानुगामुकमवधिज्ञानं यत्रैव क्षेत्र व्यवस्थितस्य सतः समुत्पद्यते तत्रैव व्यवस्थितः सन् संख्येयानि वा असंख्येयानि वा
योजनानि सम्बद्धानि वा असम्बद्धानि वा जानाति पश्यति, नान्यत्र, क्षेत्रसम्बन्धसापेक्षत्वादवधिज्ञानावरणक्षयोपशमस्य, तदेतद-
नानुगामुकम् ॥

'से किं त' मित्यादि॥(१२-९०)॥ अथ किं तद्वर्द्धमानकं?, २ वर्द्धमानमेव वर्द्धमानकं प्रशस्तेष्वध्यवसायस्थानेषु वर्तमानस्य
वर्त्तमानचारित्रस्य, इहौघतो द्रव्यलेश्योपरंजितं चित्तमध्यवसायस्थानमुच्यते, अस्य चानवस्थितत्वात्तद्द्रव्यसाचिव्ये सति विशे-
षभावाद्बहुत्वमिति, तत्र प्रशस्तेष्वित्यनेनाप्रशस्तकृष्णलेश्यादिद्रव्योपरंजितव्यवच्छेदमाह, अध्यवसायस्थानेषु वर्त्तमानस्य, प्रश-

स्ताध्यवसायस्येत्यर्थः, सर्वतः समन्तादवधिः परिवर्द्धत इति योगः, अनेनाविरतसम्यग्दृष्टेरपि वर्द्धमानक उक्तो वेदितव्यः, वर्त्तमानचारित्रस्येत्यनेन तु देशविरतसर्वविरतयोरिति, विशुध्यमानस्य-तदावरणकर्ममलविगमादुत्तरोत्तरं शुद्धिमनुभवतः अविरतसम्यग्दृष्टेरेव, अनेनावधेः शुद्धिजन्यत्वमाह, विशुध्यमानचारित्रस्य देशसर्वविरतस्य सर्वतः समन्तादवधिः परिवर्द्धत इति, तत्र परिवर्द्धत इत्युक्तम् , अथ सर्वजघन्योऽयं कियत्प्रमाणो भवतीति प्रश्नसम्भवे क्षेत्रतः प्रतिपादयन्नाह—

जावइया०गाहा॥(*४८-९०)॥यावती यावत्प्रमाणा, आहारयतीत्याहारकः त्रिसमयं आहारकः त्रिसमयाहारकः त्रीन् वा समयानिति, तस्य, सूक्ष्मनामकर्मोदयात् सूक्ष्मस्तस्य, पनकश्चासौ जीवश्च पनकजीवः, वनस्पतिविशेषः इत्यर्थः, तस्य, अवगाहन्ते यस्यां प्राणिनः सा अवगाहना, तनुरित्यर्थः, जघन्या- सर्वस्तोका, अवधेः क्षेत्रं अवधिक्षेत्रं, जघन्यं- सर्वस्तोकं, तुशब्द एवकारार्थः, स चावधारणे, तस्य चैवं प्रयोगः-अवधिक्षेत्रं जघन्यमेतावदेवेति ॥ अत्र च सम्प्रदायसमधिगम्योऽयमर्थः—

योजनसहस्रमानो मत्स्यो मृत्वा स्वकायदेशे यः । उत्पद्यते हि सूक्ष्मः पनकत्वेनेह स ग्राह्यः ॥ १ ॥ संहृत्य चाद्यसमये स ह्यायामं करोति च प्रतरम् । संख्यातीताख्यांगुलविभागबाहल्यमानं तु ॥ २ ॥ स्वतनूपृथुत्वमात्रं दीर्घत्वेनापि जीवसामर्थ्यात् । तमपि द्वितीयसमये संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥ संख्यातीताख्यांगुलविभागविष्कम्भमाननिर्दिष्टाम् । निजतनुप्रथुत्वदैर्घ्यां तृतीयसमये तु संहृत्य ॥ ४ ॥ उत्पद्यते च पनकः स्वदेहदेशे स सूक्ष्मपरिणामः । समयत्रयेण तस्यावगाहना यावती भवति ॥ ५ ॥ तावज्जघन्यमवधेरालम्बनवस्तुभाजनं क्षेत्रम् । इदमित्थमेव मुनिगणसुसम्प्रदायात् समवसेयम् ॥ ६ ॥'

॥ ३४ ॥

अत्र कश्चिदाह- किमिति महान् मत्स्यः? किं वा तस्य तृतीयसमये निजदेशे समुत्पादः? त्रिसमयाहारकत्वं वा कल्प्यते? इति, अत्रोच्यते, स एव हि महामत्स्यस्त्रिभिः समयैरात्मानं संक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनो भवति, नान्यः, प्रथमद्वितीयसमययोश्चातिसूक्ष्मः, चतुर्थादिषु चातिस्थूरः, त्रिसमयाहारक एव च योग्य इत्यतस्तद्ग्रहणं इति, अन्ये तु व्याचक्षते-त्रिसमयाहारक इति आयामविष्कम्भसंहारसमयद्वयं सूचिसंहरणोत्पादसमयश्चैते त्रयः समयाः, विग्रहाभावाच्चाहारक एतेष्वित्यतः उत्पादसमय एव त्रिसमयाहारकः सूक्ष्मः पनकजीवो जघन्यावगाहनश्चातस्तत्प्रमाणं जघन्यमवधिक्षेत्रमिति, एतच्चायुक्तं, त्रिममयाहारकत्वस्य पनकजीवविशेषणत्वात् , मत्स्यायामविष्कम्भसंहरणसमयद्वयस्य च पनकसमयायोगात् , त्रिसमयाहारकत्वाख्यविशेषणानुपपत्तिप्रसंगाद् , अलं प्रसंगेनेति गाथार्थः ॥ एवं तावज्जघन्यमवधिक्षेत्रमुक्तमिदानीमुत्कृष्टविभागमभिधातुकाम आह—

सव्वबहुअगणिजीवा० ॥ (*४९-९०) ॥ सर्वेभ्यो-विवक्षितकालावस्थायिभ्योऽनलजीवेभ्य एव वहवः सर्ववहवो, न भूतभविष्यद्भ्यो नापि शेषजीवेभ्यः, कुतः ?, असम्भवात्, अग्नयश्च ते जीवाश्च अग्निजीवाः सर्ववहवश्च ते अग्निजीवाश्च सर्वबह्वग्निजीवाः, निरन्तरमिति क्रियाविशेषणं, यावद् यावत्परिमाणं भृतवन्तो व्याप्तवन्तः क्षेत्रम्-आकाशम्, एतदुक्तं भवति-नैरन्तर्येण विशिष्टसूचिरचनया यावद् भृतवन्त इति, भूतकालनिर्देशश्चाजितस्वामिकाल एव प्रायः सर्वबहवोऽनलजीवा भवन्त्यस्यामवसर्पिण्यामित्यस्यार्थस्य ख्यापनार्थम्, इदमनन्तरोदितविशेषणं क्षेत्रमेकदिक्कमपि भवति अत आह-सर्वदिक्कम्, अनेन सूचीपरिभ्रमणप्रमितमेवाह, परमश्चासाववधिश्च परमावधिः क्षेत्रमनन्तरव्यावर्णितं प्रभूतानलजीवमितमङ्गीकृत्य निर्दिष्टः क्षेत्रनिर्दिष्टः प्रतिपादितो गणधरादिभिरिति, ततश्च पर्यायेण परमावधेरेतावत् क्षेत्रमित्युक्तं भवति, अथवा सर्वबह्वग्निजीवा निरतरं यावद् भृतवन्तः क्षेत्रं

सर्वदिक्कं एतावति क्षेत्रे यानि अवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमंगीकृत्य निर्दिष्टो, भावार्थस्तु पूर्ववदेव, अयमक्षरार्थः, इदानीं साम्प्रदायिकः प्रतिपाद्यते-तत्र सर्वबह्वग्निजीवा बादराः प्रायोऽजितस्वामितीर्थकरकाले भवन्ति, तदारम्भकपुरुषबाहुल्यात्, सूक्ष्माश्चोत्कृष्टपदिनस्तत्रैवावरुध्यन्ते, ततश्च सर्वबहवो भवन्ति, तेषां च बुद्ध्या षोढाऽवस्थानं कल्प्यते, एकैकक्षेत्रप्रदेशे एकैकजीवावगाहनया सर्वतश्चतुरस्रो घनः प्रथमं, स एव जीवः स्वावगाहनया द्वितीयं, एवं प्रतरोऽपि द्विभेदः, श्रेण्यपि द्विभेदा, तत्राद्याः पञ्च प्रकारा अनादेशाः, क्षेत्रस्याल्पत्वात् क्वचित् समयविरोधाच्च, षष्ठः प्रकारस्तु सूत्रादेश इति, ततश्चासौ श्रेणी अवधिज्ञानिनः सर्वासु दिक्षु शरीरपर्यन्तेन भ्राम्यते, सा चासङ्ख्येयानलोके लोकमात्रान् क्षेत्रविभागान् व्याप्नोति, एतावदवधिक्षेत्रमुत्कृष्टमिति, सामर्थ्यमङ्गीकृत्यैवं प्ररूप्यते, एतावति क्षेत्रे यदि द्रष्टव्यं भवति पश्यति, न त्वलोके द्रष्टव्यमस्तीति गाथार्थः ॥ एतत्तावज्जघन्यमुत्कृष्टं चावधिक्षेत्रमभिहितम्, इदानीं विमध्यमप्रतिपिपादयिषया एतावत्क्षेत्रोपलम्भे चैतावत्कालोपलम्भः तथा एतावत्कालोपलम्भे चैतावत्क्षेत्रोपलम्भ इत्यर्थस्य प्रदर्शनाय चेदं गाथाचतुष्टयं जगाद शास्त्रकारः—

अंगुलमावलियाणं०॥(*५०)॥ हत्थम्मि० गाहा ॥(*५१)॥ भरहम्मि०गाहा ॥(*५२)॥ संखेज्जम्मि उ० गाहा ॥ (*५३-९०) ॥ अंगुलं क्षेत्राधिकारात् प्रमाणाङ्गुलं गृह्यते, अवध्यधिकाराच्चोच्छ्रयाङ्गुलमित्येके, आवलिका असङ्ख्येयसमयसङ्घातोपलक्षितः कालः, उक्तञ्च-'असंखेयाणं समयाणं समुदयसमितिसमागमेणं एगा आवलिगत्ति वुच्चइ' अङ्गुलं च आवलिका च अङ्गुलावलिके तयोरङ्गुलावलिकयोर्भागमसङ्ख्येयं पश्यति अवधिज्ञानी, एतदुक्तं भवति-क्षेत्रमङ्गुलासंख्येयभागमात्रं पश्यन् कालतः आवलिकायाः असंख्येयमेव भागं पश्यति, अतीतमनागतं चेति, क्षेत्रकालदर्शनं उपचारेणोच्यते, अन्यथा हि क्षेत्र-

व्यवस्थितानि दर्शनयोग्यानि द्रव्याणि तत्पर्यायाँश्च विवक्षितकालान्तर्वर्तिनः पश्यति, न तु क्षेत्रकालौ, मूर्त्तद्रव्यालम्बनत्वात्, एवं सर्वत्र भावना द्रष्टव्या, क्रिया च गाथाचतुष्टयेऽप्यध्याहार्या, तथा द्वयोः-अङ्गुलावलिकयोः सङ्ख्येयौ भागौ पश्यति, अङ्गुलसंख्येयभागमात्रं क्षेत्रं पश्यन्नावलिकायाः सङ्ख्येयभागमेव पश्यतीत्यर्थः, तथा अंगुलं पश्यन् क्षेत्रत आवलिकान्तः पश्यति, भिन्नामावलिकामित्यर्थः, तथा कालत आवलिकां पश्यन् क्षेत्रतः अङ्गुलपृथक्त्वं पश्यति, पृथक्त्वं हि द्विप्रभृतिरानवभ्यः, इति प्रथमगाथार्थः ॥ द्वितीयगाथाव्याख्या- हस्त इति हस्तविषयः क्षेत्रतोऽवधिः कालतो मुहूर्त्तान्तः पश्यति, भिन्नमुहूर्त्तमित्यर्थः, अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युच्यते, तथा कालतो दिवसान्तो भिन्नदिवसं पश्यन् क्षेत्रतो गव्यूत इति गव्यूतविषयो बोद्धव्यः, तथा योजनविषयः क्षेत्रतोऽवधिः कालतो दिवसपृथक्त्वं पश्यति, तथा पक्षान्तः-भिन्नं पक्षं पश्यन् कालतः पञ्चविंशति योजनानि पश्यतीति द्वितीयगाथार्थः ॥ तृतीयगाथाव्याख्या--भरत इति क्षेत्रतो भरतविषयेऽवधौ कालतः अर्द्धमास उक्तः, एवं जम्बूद्वीपविषये चावधौ साधिको मासः, वर्षं च मनुष्यलोकविषयेऽवधाविति मनुष्यलोकः खल्वर्द्धतृतीयद्वीपसमुद्रपरिमाणः, वर्षपृथक्त्वं च रुचकाख्यबाह्यद्वीपविषयेऽवधाववगन्तव्यमिति तृतीयगाथार्थः ॥ चतुर्थगाथाव्याख्या--सङ्ख्यायत इति सङ्ख्येयः, स च संवत्सरलक्षणोऽपि भवति, तुशब्दो विशेषणार्थः, किं विशिनष्टि ?, सङ्ख्येयो वर्षसहस्रात् परतोऽपि गृह्यते इति, तस्मिन् संख्येये कलनं कालः तस्मिन् काले अवधेर्गोचरे सति क्षेत्रतस्तस्यैवावधेर्गोचरतया द्वीपाश्च समुद्राश्च द्वीपसमुद्रा अपि भवन्ति संख्येयाः, अपिशब्दात् महानेकोऽपि तदेकदेशोऽपीति, तथा कालेऽसंख्येये पल्योपमादिलक्षणेऽवधेर्विषये सति तस्यैवासंख्येयकालपरिच्छेदकस्यावधेः क्षेत्रतः परिच्छेद्यतया द्वीपसमुद्रास्तु भाज्याः-कदाचिदसंख्येया एव, यदा इह कस्यचिन्मनुष्यस्यासंख्येयद्वीप-

समुद्रविषयोऽवधिरुत्पद्यत इति, कदाचिन्महान्तः संख्येयाः, कदाचिदेकदेशः स्वयम्भूरमणतिरश्चोऽवधिर्विज्ञेयः, स्वयम्भूरमणविषयमनुष्यबाह्यावधेर्वा, योजनापेक्षया च सर्वपक्षेष्वसंख्येयमेव क्षेत्रमिति गाथार्थः ॥ एवं तावत् परिस्थूरन्यायमंगीकृत्य क्षेत्रवृद्ध्या कालवृद्धिरानियता कालवृद्ध्या च क्षेत्रवृद्धिः प्रतिपादिता, साम्प्रतं द्रव्यक्षेत्रकालभावापेक्षया यस्य वृद्धौ यस्य वृद्धिर्भवति यस्य वा न भवत्यमुमर्थमभिधित्सुराह—

काले०गाहा ॥(*५४-९०)॥ कालेऽवधिज्ञानगोचरे वर्द्धमाने चतुर्णां द्रव्यादीनां वृद्धिर्भवति, कालस्तु भाज्यो विकल्पयितव्यः, क्षेत्रस्य वृद्धिः क्षेत्रवृद्धिः तस्यां क्षेत्रवृद्धौ सत्यां कदाचिद्वर्द्धते कदाचिन्नेति, कुतः?, क्षेत्रस्य सूक्ष्मत्वात्, कालस्य च स्थूलत्वाद्, द्रव्यपर्यायौ तु वर्द्धेते, सप्तम्यन्तता चास्य-'ए होइ अयारंत पयम्मि बीयाए बहुसु पुंल्लिगे। तइयाइसु छट्ठीसत्तमीण एकम्मि महिलत्थे॥१॥' अस्माल्लक्षणात् सिद्धेति, एवमन्यत्रापि प्राकृतशैल्या इष्टविभक्त्यन्तता पदानामवगन्तव्येति, तथा वृद्धौ च-द्रव्यं च पर्यायश्च द्रव्यपर्यायौ तयोर्वृद्धौ सत्यां भाज्यौ- विकल्पनीयौ क्षेत्रकालावेव, तुशब्दस्यैवकारार्थत्वात्, कदाचिदनयोर्वृद्धिर्भवति कदाचिन्नेति, द्रव्यपर्याययोः सकाशात् परिस्थूरत्वात् क्षेत्रकालयोरिति भावार्थः, द्रव्यवृद्धौ तु पर्याया वर्द्धन्त एव, पर्यायवृद्धौ च द्रव्यं भाज्यं, द्रव्यात् पर्यायाणां सूक्ष्मत्वाद् एकस्मिन् भावे (अ)क्रमवर्त्तिनामपि च वृद्धिसम्भवात् कालवृध्ध्यभावो भावनीय इति गाथार्थः ॥ अत्र कश्चिदाह- जघन्यमध्यमोत्कृष्टभेदभिन्नयोरवधिज्ञानसम्बन्धिनोः क्षेत्रकालयोरंगुलावलिकाऽसंख्येयभागोपलक्षितयोः परस्परतः प्रदेशसमयसंख्यया परिस्थूरसूक्ष्मत्वे सति कियता भागेन हीनाधिकत्वमिति, अत्रोच्यते, सर्वत्र प्रतियोगिनः खल्वावलिकाऽसंख्येयभागादः कालादसंख्येयगुणं क्षेत्रं, कुत एतदत आह—

सुहुमो य० गाहा ॥ (*५५-९०) ॥ सूक्ष्मश्च-श्लक्ष्णश्च भवति कालः, यस्मादुत्पलपत्रशतभेदे समयाः प्रतिपत्रमसंख्येयाः प्रतिपादिताः, तथापि ततः कालात् सूक्ष्मतरं भवति क्षेत्रं, कुतः-?, यस्मादंगुलश्रेणिमात्रे क्षेत्रे, प्रदेशपरिमाणं प्रतिप्रदेशं समयगणनया अवसर्पिण्यः असंख्येयास्तीर्थकृद्भिः प्रतिपादिताः, एतदुक्तं भवति-अंगुलश्रेणिमात्रक्षेत्रप्रदेशाग्रं असंख्येयावसर्पिणीसमयराशिपरिमाणमिति गाथार्थः॥ सेतं इत्यादि, तदेतद्वर्द्धमानकं अवधिज्ञानमिति ।

'से किं त'मित्यादि ॥(१३-९६)॥ अथ किं तद्धीयमानकं?, २ कथंचिदवाप्तं सत् अप्रशस्तेष्वध्यवसायस्थानेषु वर्तमानस्य सतः अविरतसम्यग्दृष्टेर्वर्त्तमानचारित्रस्य देशविरतादेः संक्लिश्यमानस्य बध्यमानकर्मसंसर्गादुत्तरोत्तरं संक्लेशमासादयतः अविरतसम्यग्दृष्टेरेव, संक्लिश्यमानचारित्रस्य देशविरतादेः, सर्वतः समन्तादवधिः परिक्षीयते, तदेतद्धीयमानकमवधिज्ञानमिति ॥

'से किं त' मित्यादि ॥(१४-९६)॥ अथ किं तत् प्रतिपात्यवधिज्ञानं?,२ 'जन्न' मिति, यदवधिज्ञानं जघन्येन सर्वस्तोकतयाऽगुलस्यासंख्येयभागमात्रं वा, उत्कर्षेण सर्वप्रचुरतया यावल्लोकं दृष्ट्वा लोकमुपलभ्य तथाविधक्षयोपशमजन्यत्वात् प्रतिपतेत् , न भवेदित्यर्थः, तदेतत् प्रतिपात्यवधिज्ञानं इति, क्रियाशेषं प्रायो निगदसिद्धं, नवरं पृथक्त्वमिति द्विप्रभृतिरानवभ्य इति सिद्धान्तपरिभाषा, तथा हस्तद्वयं कुक्षिरुच्यते, चत्वारो हस्ता धनुरिति, 'से त' मित्यादि, तदेतत्प्रतिपात्यवधिज्ञानम् ॥

'से किं त'मित्यादि ॥(१५-९७)॥ अथ किं तदप्रतिपात्यवधिज्ञानं?, 'जेणं' ति येनावधिज्ञानेनालोकस्य सम्बन्धिनं एकमप्याकाशप्रदेशं, अपिशब्दाद्बहून् वा, पश्येत् शक्त्यपेक्षयोपलभेत, एतावत्क्षयोपशमप्रभवं यत् 'तत ऊर्ध्व'मिति तत आरभ्याप्रति-

पाति आकेवलप्राप्तेरवधिज्ञानमिति, अयमत्र भावार्थः-एतावत्क्षयोपशमसम्प्राप्तात्मा विनिहतप्रधानप्रतिपक्षयोद्धसंघात इव नरपतिर्न पुनः कर्मशत्रुणा परिभूयते, किं तर्हि ?, समासादितैतावदालोक एवाप्रतिनिवृत्तः शेषमपि कर्मशत्रुं विनिर्जित्याप्नोति केवलराज्यश्रियमिति, लोकालोकविभागस्त्वयं—जीवादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥ १ ॥ 'सेत' मित्यादि, तदेतदप्रतिपात्यवधिज्ञानमिति ॥ व्याख्याताः षड् भेदाः, साम्प्रतं द्रव्यादिविषयापेक्षया भेदतोऽवधिज्ञानमेव निरूपयन्नाह—

'तं समासओ' इत्यादि ॥ (१६-९७) ॥ तदवधिज्ञानं समासतः संक्षेपेण चतुर्विधं प्रज्ञप्तं, तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावत इति, तत्र द्रव्यतः णमिति वाक्यालंकारे अवधिज्ञानी जघन्येनानन्तानि द्रव्याणि तैजसभाषाद्रव्याणामपान्तरालवर्तीनि, यत उक्तम्- 'तेयाभासादव्वाण अंतरा एत्थ लभइ पट्ठवओ' त्ति, उत्कृष्टतः सर्वरूपिद्रव्याणि बादरसूक्ष्मभेदभिन्नानि जानाति विशेषाकारेण, पश्यति सामान्याकारेण, आह-आदौ दर्शनं ततो ज्ञानमिति क्रमः तत् किमर्थमेनं परित्यज्य प्रथमं जानातीत्युक्तम् ?, अत्रोच्यते, इहावधिज्ञानाधिकारात् प्राधान्यख्यापनार्थमादौ जानातीत्युक्तं, अवधिदर्शनस्य त्ववधिविभंगसाधारणत्वात् पश्चात् पश्यतीति, अथवा सर्वा एव लब्धयस्साकारोपयोगोपयुक्तस्योत्पद्यन्त इति, अवधेश्च लब्धित्वादित्यस्यार्थस्य ख्यापनार्थमादौ जानातीत्याह, ततः क्रमेणोपयोगप्रवृत्तेः पश्यतीति, क्षेत्रतः अवधिज्ञानी जघन्येनांगुलस्यासंख्येयभागं, उत्कृष्टतोऽसंख्येयानि अलोके केवलाकाशास्तिकाये शक्तिमपेक्ष्य लोकप्रमाणानि खण्डानि जानाति पश्यति, कालतोऽवधिज्ञानी जघन्येनावलिकासंख्येयभागं उत्कृष्टतोऽसंख्येया अवसर्पिण्युत्सर्पिणीरतीतं चानागतं च कालं जानाति पश्यतीति, भावार्थः प्राक् प्रतिपादित एव, भावतोऽवधिज्ञानी

जघन्येन अनन्तानन्तान् भावान्-पर्यायान्, आधारद्रव्यानन्तत्वात्, न तु प्रतिद्रव्यमिति, उत्कृष्टतोऽनन्तान् भावान् जानाति पश्यति, तेऽपि चोत्कृष्टपदिनः सर्वभावानां सर्वपर्यायाणामनन्तभाग इति ॥ इत्थमवधिज्ञानं भेदतोऽप्यभिधाय साम्प्रतं संग्रहगाथामाह—

ओही भव० इत्यादि ( * ५६-९८ ) अवधिर्भवप्रत्ययो गुणप्रत्ययश्च वर्णितो व्याख्यातः एषः अनन्तरं, पाठान्तरं वा वर्णितो द्विविधः, तस्य द्विविधस्यापि बहवो विकल्पा द्रव्यत इति द्रव्यविषयाः परमाणुकादिद्रव्यभेदात् क्षेत्रत इति क्षेत्रविषया अंगुलासङ्ख्येयभागादिविशिष्टक्षेत्रभेदात्, कालत इति कालविषयाः आवलिकाऽसङ्ख्येयभागाद्युपलक्षितकालभेदात्, चशब्दाद्भावविषयाश्च, वर्णाद्यनेकप्रकारत्वाद्भावानामिति गाथार्थः ॥ एवं तावदवधिज्ञानमभिधाय साम्प्रतं ये बाह्यावधयो ये चाभ्यन्तरावधयो भवन्ति तानुपदर्शयन्नाह—

णेरइय० गाहा (* ५७-९८) नारकाश्च देवाश्च तीर्थकराश्चेति समासः, चशब्द एवकारार्थः, स चावधारणे, अस्य च व्यवहितः प्रयोग इति दर्शयिष्यामः, एते नारकादयः अवधेः अवधिज्ञानस्य न बाह्या अबाह्या भवन्ति, इदमत्र हृदयम्—अवध्युपलब्धक्षेत्रस्यान्तर्वर्तन्ते, सर्वतोऽवभासकत्वात् प्रदीपवत् अबाह्यावधय एव भवन्ति, नैषां बाह्यावधिर्भवतीत्यर्थः, तथा पश्यति सर्वतः सर्वासु दिक्षु विदिक्षु च, खलुशब्दोऽप्येवकारार्थः, स चावधारणे, सर्वास्वेव दिक्ष्विति, आह-अवधेरबाह्या भवन्तीत्यस्मादेव सर्वत इत्यस्य सिद्धत्वात् सर्वतो ग्रहणमतिरिच्यत इति, अत्रोच्यते, नन्वभ्यन्तरत्वे सत्यपि न सर्वे सर्वतः पश्यन्ति, दिगन्तरालादर्शनाद्, अवधेर्विचित्रत्वात्, अतो नातिरिच्यते इति, शेषास्तिर्यङ्नराः देशेनेत्येकदेशेन पश्यन्ति, अत्रेष्टतोऽवधारणविधिः शेषा एव देशतः

पश्यन्ति, न तु देशत एवेति गाथार्थः ॥ अथवाऽन्यथा व्याख्यायते-एवं तावदवधिज्ञानमभ्यधायि, साम्प्रतं ये नियतावधयो ये चानियतावधयो भवन्ति तान् प्रतिपादयन्नाह—'नेरइय' गाहा, नारका देवास्तीर्थकरा एव अवधेरबाह्या भवन्ति, किमुक्तं भवति ?-नियतावधयो भवन्ति, नियमेनैषामवधिर्भवतीत्यर्थः, तेन चावधिना पश्यन्ति सर्वत एव, न पुनर्देशतोऽपि, अत्राह-पश्यन्ति सर्वत एवेत्येतावदेवास्तु, अवधेरबाह्या भवन्तीत्येतत्त्वनर्थकं, नियतावधित्वस्यार्थसिद्धत्वात्, तथा चोक्तम्-'द्वयोर्भवप्रत्ययः, तद्यथा-देवानां च नारकाणां चे' त्यतोऽर्थगम्यमेवैषां नियतावधित्वं, तीर्थकृतामपि प्रसिद्धतरपारभविकावधिसमन्वागमादेव नियतावधित्वसिद्धिरिति, अत्रोच्यते, नियतावधित्वे सिद्धेऽपि न सर्वकालावस्थायित्वसिद्धिरित्यतस्तत्प्रदर्शनार्थं अवधेरबाह्या भवन्तीति सदाऽवधिज्ञानवन्तो भवन्तीति ज्ञापनार्थत्वाददुष्टं, यद्येवं तीर्थकृतां सर्वकालावस्थायित्वं विरुध्यत इति, न, छद्मस्थकालस्यैव विवक्षितत्वात्, अलं विस्तरेण, शेषं पूर्ववदिति गाथार्थः । 'सेतं ओहिणाणंति, तदेतदवधिज्ञानम् ॥

'से किं तं मणपज्जवणाण' मित्यादि ॥ १७–९९ ॥ अथ किं तन्मनःपर्यायज्ञानं?, इदं प्राग्निरूपितशब्दार्थमेव, साम्प्रतमुत्पत्तिस्वामिमार्गणाद्वारेण चिन्त्यते, तथा चाह—'मणपज्जवणाणं भंते' इत्यादि, मनःपर्यायज्ञानं णामिति वाक्यालङ्कारे, भदन्त! इति गुर्वामन्त्रणं, किमिति परिप्रश्ने, मनुष्याणामुत्पद्यत इति प्रकटार्थम्, अमनुष्याणामुत्पद्यत इत्यमनुष्या-देवादयः, अत्रेद निर्वचनं-गौतम! माणुस्साणमित्यादि । आह-किमिदं अकाण्ड एव गौतमामन्त्रणं, ननु देववाचकरचितोऽयं ग्रन्थ इति, उच्यते, सत्यं, किन्त्वेते पूर्वसूत्रालापका एवार्थवशाद्विरचिताः, 'जावइया तिसमयाहारगस्से' त्यादिनिर्युक्तिगाथासूत्रवदित्यतो न दोषः, तत्र च गौतमप्रश्नभगवन्निर्वचनरूप एव ग्रन्थ इति, पुनरप्याह-ननु गौतमोऽपि सूत्रतः प्रवचन-

प्रणेतृत्वाच्चतुर्दशपूर्वधरत्वात् सकलप्रज्ञापनीयभावपरिज्ञानयुक्तत्वात् सर्वज्ञकल्प एव, उक्तञ्च—"संखातीतेऽवि भवे साहइ जं वा परो उ पुच्छेज्जा । ण य णं अणाइसेसी वियाणई एस छउमत्थो ॥ १ ॥ ततः किमर्थं पृच्छति?, अत्रोच्यते, कुतश्चिदभिप्रायात्, जानत एव स्वशिष्येभ्यो वा प्ररूप्य तत्सम्प्रत्ययनिमित्तं, सूत्ररचनाकल्पतो वेति न दोषः, कृतं प्रसङ्गेन, प्रकृतं प्रस्तुमः,गौतमेन पृष्टो भगवानाह—गौतम! मनुष्याणामुत्पद्यते, नान्येषां, विशिष्टचारित्रप्रतिपत्त्यभावाद्, एवमन्यत्रापि भावना कार्येति, सम्मूर्च्छिममनुष्या गर्भव्युत्क्रान्तिकमनुष्यवान्तादिसमुद्भवाः, उक्तञ्च—"कहि णं भंते! संमुच्छिममणुस्सा संमुच्छंति?, गोयमा! अंतो मणुस्सखेत्ते पणयालीसाए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसुं छप्पन्नाते अंतरदीवएसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा सुक्केसु वा सोणिएसु वा सुक्कपोग्गलेसु वा सुक्कपोग्गलपरिसाडेसु वा विगयकलवरेसु वा णगरणिद्धमणेसु वा सव्वेसु चेव असुईएसु असुइट्ठाणेसु वा, एत्थ णं संमुच्छिममणुस्सा संमुच्छन्ति अंगुलस्स असंखेज्जइभागमेत्तीए ओगाहणाए असन्नी मिच्छद्दिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अन्तोमुहुत्तद्धाउया चेव कालं करंति"॥ भरताद्याः पंचदश कर्मभूमयः, हेमवताद्यास्त्रिंशदकर्मभूमयः, त्रीणि योजनशतानि लवणजलधिजलमध्यमधिलङ्घ्य हिमवत्शिखरिपादप्रतिष्ठा एकोरुकाद्याः षट्पंचाशदन्तर्द्वीपा भवन्ति, कर्मभूमौ जाताः कर्मभूमिजा इत्येवमक्षरगमनिका कार्या, संख्येयवर्षायुषः पूर्वकोट्यादिजीविनः असंख्येयवर्षायुषः पल्योपमादिजीविन इति, इह पर्याप्तिर्नाम शक्तिः, सा च पुद्गलद्रव्योपचयादुत्पद्यते, सा पुनः षट्प्रकारा, तद्यथा—आहारपर्याप्तिः शरीरपर्याप्तिः इन्द्रियपर्याप्तिः प्राणापानपर्याप्तिः भाषापर्याप्तिः मनःपर्याप्तिश्चेति, तत्र पर्याप्तिः क्रियापरिसमाप्तिः, आत्मनः शरीरेन्द्रियप्राणापानवाङ्मनोयो-

ग्यदलिकद्रव्याहरणक्रियापरिसमाप्तिराहारपर्याप्तिः, गृहीतस्य शरीरतया संस्थापनाक्रियापरिसमाप्तिः शरीरपर्याप्तिः, संस्थानरचनाघटनमित्यर्थः, त्वगादीन्द्रियनिर्वर्त्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्तिः, प्राणापानाक्रियायोग्यद्रव्यग्रहणशक्तिनिर्वर्त्तनक्रियापरिसमाप्तिः प्राणापानपर्याप्तिः, भाषायोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्त्तनक्रियापरिसमाप्तिः भाषापर्याप्तिः, मनस्त्वयोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्त्तनक्रियापरिसमाप्तिर्मनःपर्याप्तिरित्येके, आसां युगपदारब्धानामपि क्रमेण परिसमाप्तिः, उत्तरोत्तरसूक्ष्मतरत्वाद्, अत्र चाद्याश्च तस्र एकेन्द्रियाणां, पंच विकलेन्द्रियाणां, षट् संज्ञिनां, उक्तंच—"आहारसरीरिंदियपज्जत्ती आणुपाणभासमणे। चत्तारि पंच छप्पिय एगिंदियविगलसन्नीणं ॥१॥" तत्र पर्याप्तकनामकर्मोदयात् निष्पद्यमाननिष्पन्नपर्याप्तिमन्तः पर्याप्ताः, अर्शआदित्वात् मत्वर्थीयः, त एव पर्याप्तकाः, एवमपर्याप्तकनामकर्मोदयादनिष्पन्नपर्याप्तियोगादपर्याप्तास्त एवापर्याप्तका इति, सम्यग्-अविपरीता दृष्टिर्येषां ते तथा, मिथ्या-विपरीता दृष्टिर्येषां ते तथा, सम्यग्मिथ्यादृष्टयस्तु प्रतिपत्त्यभिमुखा अन्तर्मुहूर्तमात्रं भवन्ति, न तु परित्याभिमुखाः, यत उक्तम्— "मिच्छत्ता संकंती अविरुद्धा होइ सम्ममीसेसु । मीसाओ वा दोसुवि सम्मा मिच्छं न पुण मीसं ॥ १ ॥" संयताः सकलचारित्रिणः असंयता अविरतसम्यग्दृष्टयः संयतासंयताः देशविरतिमन्तः श्रावकाः प्रमत्तसंयता गच्छवासिनः क्वचिदनुपयोगसम्भवात् अप्रमत्तसंयतास्तु जिनकल्पिकादयः सततोपयोगात्, अथवा गच्छवासिनः तन्निर्गताश्च परिणामविशेषतः प्रमत्ताश्चाप्रमत्ताश्चावगन्तव्या इति, आमर्षौषध्यादिलब्धिलक्षणा ऋद्धयस्तासामन्यतरप्राप्तियोगात् प्राप्तर्द्धयः, अवधिऋद्धिभावाद्वा, अन्ये त्ववधिऋद्धौ नियममभिदधति, इह च सर्वत्रैव मनुष्यादिषु विधाने सत्यर्थतो गम्यमानस्यापि विपक्षनिषेधस्याभिधानमव्युत्पन्नविनेयजनानुग्रहार्थमदुष्टमेवेति, तथाहि-सर्वपार्षदं हीदं शास्त्रं, त्रिविधाश्च विनेया भवन्ति, तद्यथा--

उद्घटितज्ञा मध्यमबुद्धयः प्रपञ्चधियश्चेत्यलं विस्तरेण, स्थितमेतत्-प्राप्तर्धिअप्रमत्तसंयतानामुत्पद्यते, एतच्चोत्पद्यमानं द्विधोत्पद्यते, तद्यथा-ऋजुमतिश्च विपुलमतिश्च, मननं मतिः, संवेदनमित्यर्थः, ऋज्वी-सामान्यग्राहिणी मतिः ऋजुमतिः, घटोऽनेन चिन्तितः इत्यध्यवसायनिबन्धनमनोद्रव्यप्रतिपत्तिरित्यर्थः, एवं विपुला-विशेषग्राहिणी मतिर्विपुलमतिः घटोऽनेन चिन्तितः, स च सौवर्णः पाटलिपुत्रकोऽद्यतनो महानित्याद्यध्यवसायहेतुभूतमनोद्रव्यविज्ञप्तिरिति भावार्थः, अस्या व्युत्पत्तौ स्वतन्त्रं ज्ञानमेव गृह्यत इति, अथवा ऋज्वी-सामान्यग्राहिणी मतिरस्य सोऽयं ऋजुमतिस्तद्वानेव गृह्यते, एवं विपुला-विशेषग्राहिणी मतिरस्येति विपुलमतिस्तद्वानेव, भावार्थः प्राग्वद्, उत्तरत्र वा वक्ष्यामः ।

"तं समासतो" इत्यादि ( १८-१०७ ) तत् समासतश्चतुर्विधं प्रज्ञप्तं, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतः, तत्र द्रव्यतः णमिति पूर्ववत् ऋजुमतिः अनन्तान्-अपरिमितान् अनन्तपरमाण्वात्मकानित्यर्थः, **स्कन्धान्** विशिष्टैकपरिणामपरिणतान् संज्ञिभिः पञ्चेन्द्रियैः पर्याप्तकैरर्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिभिर्मनस्त्वेन परिणामितानित्यर्थः, जानीत इति मनःपर्यायज्ञानावरणक्षयोपशमस्य पटुत्वात् साक्षात्कारेण विशेषभूयिष्ठपरिच्छेदाज्जानीत इत्युच्यते, तदालोचितं पुनरर्थं घटादिलक्षणमध्यक्षतो न जानाति, किन्तु तत्परिणामान्यथाऽनुपपत्त्याऽनुमानतः पश्यतीत्युच्यते, उक्तं च **भाष्यकारेण**—"जाणति बज्झेऽणुमाणाओ" त्ति, इत्थं चैतदङ्गीकर्त्तव्यं, यतो मूर्त्तद्रव्यालम्बनमेवेदं, मंतारस्त्वमूर्त्तमपि धर्मास्तिकायादिकं मन्येरन्, नच तदनेन साक्षात्कर्त्तुं शक्यते, तथा चतुर्विधं च चक्षुर्दर्शनादि दर्शनमुक्तम्, अतो भिन्नालम्बनमेवेदमवसेयं, तत्र च दर्शनसम्भवात् पश्यतीत्यपि न दुष्टं, एकप्रमात्रपेक्षया तदनन्तरभावित्वाच्चोपन्यस्तमिति, ओघतो वैकविधक्षयोपशमलब्धौ विविधोपयोगसम्भवाद्विशेषसामान्यार्थापेक्षया जानाति पश्यति

चेत्यदुष्टमित्यलं विस्तरेण, तानेव विपुलमतिः अभ्यधिकतरान् स्कन्धान् द्रव्यार्थतया वर्णादिभिश्च जानाति पश्यति च, क्षेत्रतः ऋजुमतिः अधो यावदस्या रत्नप्रभायाः पृथिव्या उपरिमाधस्त्यानि क्षुल्लकप्रतराणीति ॥ क्षुल्लकप्रतरपरिज्ञानार्थमिमं पण्णविज्जति-तिरियलोकस्स उड्ढहमट्ठारसजोयणसतियस्स बहुमज्झे एत्थ असंखेज्जंगुलभागमेत्ता लोगागासपतरा अलोगेण संवेढिया सव्वखुड्ड-गतरा खुड्डागपतरत्ति भन्नंति, ते य सव्वतो रज्जुप्पमाणा, तेसिं बहुमज्झे दो खुड्डागपतरा, तेसिं बहुमज्झे जंबुदीवे रयणप्पभपुढ-वीवहुसमभूमिभागेऽत्थ मंदरस्स बहुमज्झे, एत्थऽट्ठपएसो रुयगो, जत्तो दिसिविदिसाविभागो पवत्तो, एयं तिरियलोयमज्झं, एयातो तिरियलोयमज्झातो रज्जुप्पमाणखुड्डागपतरेहिंतो उवरिं तिरियं असंखेयंगुलभागवुड्ढी, उवरिहुत्तोवि अंगुलअसंखेयभागा-रोहो चेव, एवं तिरियमुवरिं च अंगुलासंखेयभागवुड्ढीए ताव लोगवुड्ढी णेयव्वा जाव उड्ढलोयमज्झं, ततो पुणो तेणेव कमेणं संवट्टो कायव्वो जाव उवरिमलोगंतो रज्जुप्पमाणो, तत्तो उड्ढलोगमज्झातो उवरिं हेट्ठा य कमेण खुड्डागपतरा भाणियव्वा, जाव रज्जुप्प-माणा खुड्डागपयरत्ति, तिरियलोयमज्झरज्जुप्पमाणखुड्डगपतरेहिंतोवि हेट्ठा अंगुलस्स असंख्येयभागवुड्ढी तिरियं, अहोअवगाहेणवि अंगुलस्स असंख्येयभागो चेव, एवमहोलोगो वट्टेयव्वो जाव अहोलोगंतो सत्तरज्जूओ, सत्तरज्जुपतरेहिंतोऽवि उवरिक्कमेण खुड्डागपयरा भाणियव्वा, जाव तिरियलोयमज्झा रज्जुप्पमाणा खुड्डागपयरत्ति, एवं खुड्डागपरूवणे कते इमं भन्नइ 'उवरिम'त्ति तिरियलोयमज्झाओ अहो जाव णव जोयणसयाणि ताव इमीसे रयणप्पभाए पुढवीते उवरिमखुड्डागपतरत्ति भन्नति, तदधो अधो-लोगे जाव अहोलोगिया गामत्ति, एए हेट्ठिमखुड्डागपयरत्ति भन्नंति, रिजुमती अहो ताव पस्सतित्ति भणियं होइ, अहवा अहो-लोगस्स उवरिमा खुड्डागपयरा तिरियलोगस्स य हेट्ठिमा खुडागपयरत्ति ते जाव पश्यतीत्यर्थः, अन्ने भणंति-उवरिमात्ति अधो-

लोगोवरि जे ते उवरिमा, के य ते?, उच्यते, सव्वतिरियलोगवत्तिणो, तिरियलोगस्स वा अहो नव जोयणसतवत्तिणो, ताण चेव जे हेट्ठिमा ते जाव पश्यतीत्यर्थः, इमं च ण घडाति, अहोलोइयगाममणपज्जवणाणसंभवबाहल्लत्तणओ, उक्तश्च—"इहाधोलौकिकान् ग्रामान्, तिर्यग्लोकविवर्त्तिनः। मनोगतांस्त्वसौ भावान्, वेत्ति तद्वर्त्तिनामपि ॥१॥" अलं प्रसंगेन, एवमूर्ध्वं यावज्ज्योतिश्चक्रस्योपरितलं, तिर्यग्यावदन्तो मनुष्यक्षेत्रे, मनुष्यलोकान्त इत्यर्थः, शेषं सुगमं यावत् 'सण्णीणं पञ्चेन्द्रियाणा'मित्यादि, तत्र संज्ञिनोऽपान्तरालगतावपि तदायुष्कसंवेदनादभिधीयन्त एव, न तैरिहाधिकार इत्यतः पञ्चेन्द्रियग्रहणं, तेऽपि चोपपातक्षेत्रप्राप्ता अपि मनःपर्याप्त्या अपर्याप्तका अपि भण्यन्ते, न च तैरपीहाधिकार इत्यतः पर्याप्तकग्रहणं इति, स्वरूपकथनं वा संज्ञिनां पञ्चेन्द्रियाणां पर्याप्तकानामिति, अथवा संज्ञिनो हेतुवादोपदेशेन विकलेन्द्रिया अपि भण्यन्ते, तद्व्यवच्छेदार्थं पञ्चेन्द्रियग्रहणं, तेऽप्यपर्याप्तका अपि भवन्ति अतः पर्याप्तग्रहणमिति, इह क्षेत्राधिकारस्यैव प्राधान्यात्तदेव मनोलब्धिसमन्वितजीवाधारक्षेत्रमभिगृह्यते, विपुलमतिः अर्द्धं तृतीयस्य येषु तान्यर्द्धतृतीयानि तैरभ्यधिकतरं, प्रभूततरमित्यर्थः, तदेव प्राकृतशैल्या अभ्यधिकतरकं, एवं शेषेष्वपि द्रष्टव्यं, तत्रैकदिशमप्यधिकतरं भवत्यतः सर्वतोऽधिकतरमिति प्रतिपादनार्थमाह—विपुलतरं-विस्तीर्णतरम्, अथवा आयामविष्कम्भावाश्रित्यामभ्यधिकतरं, बाहल्यमाश्रित्य विपुलतरं तथा विसुद्धतरं निर्मलतरमित्यर्थः, यथा चन्द्रकान्तादिप्रकाशकद्रव्यविमल२तरविशेषाद्विमलप्रकाशितद्रष्टुः सकाशाद्विमलतरप्रकाशितद्रष्टा विशुद्धतरं पश्यति, एवं विष्काम्भितोदयमनःपर्यायज्ञानावरणस्य कारणभेदतो मन्द२तरविशेषभावात् ऋजुमतेः सकाशात् विपुलमतिर्विशुद्धतरमिति, उपशान्तावरणविशेषादपि ज्ञानस्य विशेष इत्येतावताऽंशेन दृष्टान्तः, तथा तदावरणक्षयोपशमविशेषाच्च वितिमिरतरं—निर्मलतरं, अथवा प्राग्बद्धतदावरणकर्मक्षयोपशमस्य प्रधान-

त्वाद्विशुद्धतरं, बध्यमानावरणकर्मक्षयोपशमविशेषाच्च वितिमिरतरं, बध्यमानाभावाच्च वितिमिरतरमित्यन्ये, अथवैकार्थिका एवैते शब्दाः नानादेशजानां विनेयानां कस्यचित् कश्चित् प्रसिद्धो भवतीत्युपन्यस्ताः, क्षेत्रं तात्स्थ्यात् तद्व्यपदेश इति जानाति पश्यति, शेषं निगदसिद्धं यावत्—

**मणपज्जव० गाहा** ( ❀ ५८-१०८ ) **मनःपर्यायज्ञानं** प्राग्निरूपितशब्दार्थं, पुनःशब्दो विशेषणार्थः, इदं हि रूपिनिबन्धनक्षायोपशमिकप्रत्यक्षादिसाम्येऽपि सत्यवधिज्ञानात् स्वाम्यादिभेदेन विशिष्टमिति स्वरूपतः प्रतिपादयन्नाह—जायन्त इति जनाः तेषां मनांसि २ जनमनोभिः परिचिन्तितः जनमनःपरिचिन्तितः जनमनःपरिचिन्तितश्चासावर्थश्चेति समासः, तं, प्रकटयति-प्रकाशयति जनमनःपरिचिन्तितार्थप्रकटनं, **मानुषक्षेत्रम्**—अर्द्धतृतीयद्वीपसमुद्रपरिमाणं तन्निबन्धनं, तदबहिर्व्यवस्थितप्राणिमनःपरिचिन्तितार्थविषयं प्रवर्त्तत इत्यर्थः, **गुणाः**—क्षान्त्यादयः त एव **प्रत्ययाः**-कारणानि यस्य तद् गुणप्रत्ययं, चारित्रमस्यास्तीति चारित्रवान् तस्य चारित्रवत एवेदं भवति, एतदुक्तं भवति-अप्रमत्तसंयतस्य आमर्षौपध्यादिऋद्धिप्राप्तस्य चेति गाथार्थः ॥'**से तं मणपज्जवणाणं**,' तदेतन्मनःपर्यायज्ञानमिति ॥

'**से किं तं केवलज्ञान**'मित्यादि ॥(१९-१११)॥ अथ किं तत् केवलज्ञानं?, केवलज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा-भवस्थकेवलज्ञानं च सिद्धकेवलज्ञानं च, भवन्त्यस्मिन् कर्मवशवर्त्तिनः प्राणिन इति भवः, भवो गतिर्जन्मेति पर्यायाः, भवे तिष्ठतीति भवस्थः तस्य केवलज्ञानं२, 'षिधौ संराद्धौ' 'राध साध संसिद्धौ' 'षिधू शास्त्रे मांगल्ये च' सिध्यति स्म सिद्धः-यो येन गुणेन निष्पन्नः- परिनि-

ष्ठितो, न पुनः साधनीयः, सिद्धौदनवत् स सिद्धः, स च कर्मसिद्धादिभेदादनेकविधः, उक्तं च-'कम्मे सिप्पे य विज्जा य, मंते जोगे य आगमे । अत्थ जत्ता आभिप्पाए, तवे कम्मक्खए इय ॥ १ ॥' इह कर्मक्षयसिद्धेनाधिकारः, स चाशेषकर्मांशक्षयात् कर्मक्षयसिद्धः, सितध्वंसित्वात् सिद्धः, 'सिं वर्णगन्धनयो'रिति सितं- बद्धमष्टप्रकारं कर्म तद् ध्वंसितुं शीलमस्येति सितध्वंसी सिद्धः, तस्य केवलज्ञानं २ ॥

'से किं त'मित्यादि, अथ किं तद् भवस्थकेवलज्ञानं?,२ द्विविधं प्रज्ञप्तं, तद्यथा-सयोगिभवस्थकेवलज्ञानं च अयोगिभवस्थकेवलज्ञानं च, इह युज्यन्त इति योगाः-कायादयः, उक्तं च-'कायवाङ्मनःकर्म योगः' तत्रौदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्यात् जीवव्यापारो वाग्योगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो मनोयोगः, तद्यथासम्भवं योगोऽस्य विद्यत इति सयोगी सयोगी चासौ भवस्थश्च २, तस्य केवलज्ञानं, एवं न योगी २ स च भवस्थश्च तस्य केवलज्ञानं२, शैलेश्यवस्थागतस्येत्यर्थः, अथ किं तत् सयोगिभवस्थकेवलज्ञानं ?, २ द्विविधं प्रज्ञप्तं, तद्यथा-प्रथमसमयसयोगिभवस्थकेवलज्ञानं च अप्रथमसमयसयोगिभवस्थकेवलज्ञानं च, तत्र प्रथमसमयस्तत्प्रथमतयोत्पत्तिसमय एव गृह्यते, न प्रथमोऽप्रथमः-द्वितीयादयः सर्व एव शैलेश्यवस्थाप्राप्तेरप्रथमसमया इति, अथवेत्यन्यथा प्रतिपाद्यते, 'चरमसमये'त्यादि, तत्र चरमः-सयोगिकालान्त्यसमयः, न चरमोऽचरमः पश्चानुपूर्व्या चरमादारभ्य सर्व एवाकेवलप्राप्तेरचरमा इति । 'सेत 'मित्यादि निगमनम्, 'से किं त'मित्यादि, अत्रापि शैलेश्यवस्थाभाविकेवलज्ञानमधिकृत्यैवमेव भावनीयमलं विस्तरेण। 'सेत' मित्यादि, निगमनम्, तदेतद्भवस्थकेवलज्ञानम् ॥

'से किं त'मित्यादि ॥ (२०-११३) ॥ अथ किं तत् सिद्धकेवलज्ञानं ?, सिद्धकेवलज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा-अनन्तरसिद्धकेवलज्ञानं च परम्परसिद्धकेवलज्ञानं च, तत्र शैलेश्यवस्थापर्यन्तवर्त्तिसमयसमासादितासिद्धत्वस्य तस्मिन्नेव समये यत् केवलज्ञानं तदनन्तरसिद्धकेवलज्ञानं, ततो द्वितीयादिसमयेष्वनन्तामप्यनागताद्धां परम्परसिद्धकेवलज्ञानमिति ॥

'से किं त'मित्यादि ॥(२१-१२०)॥ प्रश्नसूत्रस्य निर्वचनम्-अनन्तरसिद्धकेवलज्ञानं पंचदशविधं प्रज्ञप्तं, सिद्धानामेवानन्तरभवगतोपाधिभेदेन पंचदशभेदभिन्नत्वात्, पंचदशभेदभिन्नतामेव दर्शयन्नाह-तद्यथा-तीर्थसिद्धा इत्यादि, तत्र येनेह जीवा जन्मजरामरणसलिलं मिथ्यादर्शनाविरतिगंभीरं विचित्रदुःखगणकरिमकरं रागद्वेषपवनप्रक्षोभितमनन्तसंसारसागरं तरन्ति तत्तीर्थमिति, तच्च यथाऽवस्थितसकलजीवाजीवादिपदार्थप्ररूपकं अत्यन्तानवद्यान्याविज्ञातचरणकरणक्रियाधारं अचिन्त्यशक्तिसमन्विताविसंवाद्युडुपकल्पं चतुस्त्रिंशदतिशयसमन्वितपरमगुरुप्रणीतं प्रवचनम्, एतच्च संघः प्रथमगणधरो वा, तथा चोक्तम्- "तित्थं भंते तित्थं?, तित्थकरे तित्थं ?, गोयमा! अरिहा नियमा ताव तित्थंकरे, तित्थं पुण चाउव्वण्णो समणसंघो पढमगणहरो वा" इत्यादि, ततश्च तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः, अतीर्थसिद्धास्तीर्थान्तरसिद्धा इत्यर्थः, श्रूयते च 'जिणन्तरे साहुवोच्छेओ'त्ति, तत्रापि जातिस्मरणादिनाऽवाप्तापवर्गमार्गाः सिध्यन्ति एव, मरुदेविप्रभृतयो वाऽतीर्थसिद्धास्तदा तीर्थस्यानुत्पन्नत्वात्, तीर्थकरसिद्धास्तीर्थकरा एव, अतीर्थकरसिद्धा अन्ये सामान्यकेवलिनः, स्वयम्बुद्धाः सन्तो ये सिद्धास्ते स्वयंबुद्धसिद्धाः, प्रत्येकबुद्धाः सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धा इति। अथ स्वयंबुद्धप्रत्येकबुद्धयोः कः प्रतिविशेष इति, उच्यते, बोध्युपधिश्रुतलिंगकृतो विशेषः, तथाहि-स्वयंबुद्धा बाह्यप्रत्ययमन्तरेणैव बुध्यन्ते, प्रत्येकबुद्धास्तु न तद्विरहेण, श्रूयते च बाह्यवृषभादिप्रत्ययसापेक्षा करकंड्वादीनां प्रत्येकबुद्धानां बोधि-

रिति, उपधिस्तु स्वयंबुद्धानां द्वादशविधः पात्रादिः, प्रत्येकबुद्धानां तु नवविधः प्रावरणवर्जः, स्वयंबुद्धानां पूर्वाधीतश्रुते अनियमः, प्रत्येकबुद्धानां तु नियमतो भवत्येव, लिंगप्रतिपत्तिः स्वयम्बुद्धानां आचार्यसन्निधावपि भवति, प्रत्येकबुद्धानां तु देवता प्रयच्छतीत्यलं विस्तरेण। 'बुद्धबोधितसिद्धाः' बुद्धाः-आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते इह गृह्यन्ते, एते च सर्वेऽपि केचित् स्त्रीलिंगसिद्धाः केचित् पुल्लिंगसिद्धाः केचिन्नपुंसकलिंगसिद्धा इति, आह- तीर्थकरा अपि स्त्रीलिंगसिद्धा भवन्ति ?, भवन्तीत्याह, यत उक्तं सिद्धप्राभृते- 'सव्वत्थोवा तित्थगरीसिद्धा, तित्थगरितित्थे णोतित्थसिद्धा संखेज्जगुणा, तित्थगरतित्थे णोतित्थगरिसिद्धाओ संखेज्जगुणाओ, तित्थगरितित्थे णोतित्थगरसिद्धा संखेज्जगुणा' इति, न तु नपुंसकलिंगः, प्रत्येकबुद्धास्तु पुंल्लिगा एव, स्वलिंगसिद्धा द्रव्यलिंगं प्रति रजोहरणगोच्छकधारिणः, अन्यलिंगसिद्धाः परिव्राजकादिलिंगे सिद्धाः, गृहिलिंगसिद्धा मरुदेवीप्रभृतयः, एकसिद्धा इति एकस्मिन् समये एक एव सिद्धः, 'अणेगसिद्धा' इति एकस्मिन् यावद् अष्टशतं सिद्धं, यत उक्तम्-बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा। चुलसीती छन्नउई दुरहिय अट्ठुत्तरसयं च ॥१॥ अत्राह चोदकः-ननु सर्व एवैते भेदास्तीर्थसिद्धातीर्थसिद्धभेदद्वयान्तर्भाविनः, तथाहि-तीर्थसिद्धा एव तीर्थकरसिद्धाः, अतीर्थकरसिद्धा अपि तीर्थ[कर]सिद्धा वा स्युः अतीर्थसिद्धा वेत्येवं शेषेष्वपि भावनीयमिति, अतः किमेभिरिति, अत्रोच्यते, अन्तर्भावे सत्यपि पूर्वभेदद्वयादेवोत्तरोत्तरभेदाप्रतिपत्तेः, अज्ञातज्ञापनार्थं च भेदाभिधानमिति । 'सेत'मित्यादि, निगमनम् ॥

'से किं तं परम्पर' इत्यादि ॥ २२-१३३ ॥ न प्रथमसमयसिद्धाः अप्रथमसमयसिद्धाः- परम्परसिद्धविशेषणप्रथमसमयवर्तिनः, सिद्धत्वद्वितीयसमयवर्तिनः इत्यर्थः, त्र्यादिषु तु द्विसमयसिद्धादयः प्रोच्यन्ते, यद्वा सामान्येनाप्रथमसमयसिद्धा अभि-

धानविशेषतो द्विसमयादिसिद्धाभिधानमिति, शेषं प्रकटार्थं, यावत् तं समासतो इत्यादि, तदिति सामान्येन केवलज्ञानमभिगृ-
ह्यते, द्रव्यतः केवलज्ञानी सर्वद्रव्याणि—धर्मास्तिकायादीनि साक्षाज्जानाति पश्यति, क्षेत्रतः केवलज्ञानी सर्वं क्षेत्रं लोकालो-
कभेदभिन्नं साक्षाज्जानाति पश्यति, ( ग्र० १००० ) इह च धर्मास्तिकायादिसर्वद्रव्यग्रहणे सत्यप्याकाशास्तिकायस्य क्षेत्रत्वेन रू-
ढत्वाद् भेदेनोपन्यासः, कालतः केवलज्ञानी सर्वं कालमतीतानागतवर्त्तमानभेदभिन्नं साक्षाज्जानाति पश्यति, भावतः केवलज्ञानी
सर्वान् जीवाजीवगतान् भावान् गतिकषायाद्यगुरुलघुलक्षणादीन् साक्षाज्जानाति पश्यति ।

इह च केवलज्ञानदर्शनोपयोगचिन्तायां क्रमोपयोगादौ सूरीणामनेकविधा विप्रतिपत्तिः अतः संक्षेपतो विनेयजनानुग्रहाय तत्प्रद-
र्शनं क्रियत इति, तत्र-**केई भणंति जुगवं जाणइ पासइ य केवली णियमा। अन्ने एगंतरियं इच्छंति सुओवदेसेणं॥१॥**
**अन्ने ण चेव वीसुं दंसणमिच्छंति जिणवरिंदस्स । जं चिय केवलनाणं तंचिय से दंसणं बिंति ॥२॥** गाथाद्वयम्, अस्य
व्याख्या-केचन सिद्धसेनाचार्यादयः भणंति, किं?, युगपद्-एकस्मिन्नेव काले जानाति पश्यति च, कः?, केवली, न त्वन्यः, नियमात्-
नियमेन ॥ अन्ये जिनभद्रगणिक्षमाश्रमणप्रभृतयः एकान्तरितं जानाति पश्यति चेत्येवमिच्छान्ति, श्रुतोपदेशेन यथाश्रुतागमा-
नुसारेणेत्यर्थः, अन्ये तु वृद्धाचार्याः न नैव विष्वक् पृथक् तद्दर्शनमिच्छान्ति जिनवरेन्द्रस्य, केवलिन इत्यर्थः, किं तर्हि?, य-
देव केवलज्ञानं तदेव 'से' तस्य केवलिनो दर्शनं ब्रुवते, क्षीणावरणस्य देशज्ञानाभाववत् केवलदर्शनाभावादिति भावना, अयं गा-
थाद्वयार्थः । साम्प्रतं युगपदुपयोगवादिमतप्रदर्शनायाह—**जं केवलाइं सादी अपज्जवासियाइं दोवि भणियाइं । ता बिंति**
**केइ जुगवं जाणइ पासइ य सव्वन्नू ॥ ३ ॥** यस्मात् केवलज्ञानदर्शने साद्यपर्यवसिते द्वे अपि भाणिते ततः ब्रुवते केचन सि-

द्धसेनाचार्यादयः, किं?, युगपद्-एकस्मिन् काले जानाति पश्यति च, कः?, सर्वज्ञ इति गाथार्थः ॥ **इहराऽऽदीणिधणत्तं मिच्छावरणक्खयोति व जिणस्स । इयरेतरावरणता अहवा निक्कारणावरणं ॥ ४ ॥** इतरथा अन्यथा आदिनिधनत्वं सादिपर्यवसानत्वं केवलज्ञानदर्शनयोरुत्पत्त्यनन्तरमेव केवलज्ञानोपयोगकाले केवलदर्शनाभावात्, एवं केवलदर्शनोपयोगकालेऽपि केवलज्ञानाभावात्, तथा मिथ्याऽऽवरणक्षय इति वा जिनस्य, न ह्यपनीतावरणौ द्वौ प्रदीपौ क्रमेण प्रकाश्यं प्रकाशयत इत्यभिप्रायः, तथा इतरेतरावरणता स्वावरणे क्षीणेऽप्यन्यतमभावे अन्यतमाभावादिति भावना, अथवा निक्कारणावरणमित्यकारणमेव अन्यतरोपयोगकालेऽन्यतरस्यावरणं, तथा च सति सर्वदैव भावाभावप्रसङ्गः, तथा चोक्तम्—"नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां, कादाचित्कत्वसम्भवः ॥ १ ॥" इति गाथार्थः ॥ **तहय असव्वन्नुत्तं असव्वदरिसणप्पसंगो य । एगंतरोवओगे जिणस्स दोसा बहुविहीया ॥ ५ ॥** तथा च सति असर्वज्ञत्वासर्वदर्शित्वप्रसंगश्च, पाक्षिकं वा असर्वज्ञत्वं, यदा सर्वज्ञो न तदा सर्वदर्शी, दर्शनोपयोगाभावाद्, एवं यदा सर्वदर्शी न तदा सर्वज्ञः, ज्ञानोपयोगाभावात्, एवमेकान्तरोपयोगेऽभ्युपगम्यमाने सति जिनस्य-केवलिनो दोषा बहुविधा इति गाथार्थः ॥ एवं परेणोक्ते सत्यागमवाद्याह—**भण्णति भिन्नमुहुत्तोवयोगकालेवि तो तिणाणिस्स । मिच्छा छावट्ठी सागराइं तस्स य खओवसमो ॥ ६ ॥** यदुक्तमितरथाऽऽदिनिधनत्वमिति तदसदिति दर्शयति, उपयोगानुपयोगकालापेक्षयैव साद्यपर्यवसितत्वात् केवलज्ञानदर्शनयोरित्यभिप्रायो, न चानार्षमिदं, कथं?, भण्यते-अन्यथा हि भिन्नमुहूर्त्तोपयोगकालेऽपि मत्यादीनां ततस्त्रिज्ञानिनः मिथ्या षट्षष्टिः सागरोपमाणि क्षयोपशमः, प्रतिपादितश्च सूत्रे, न च युगपदेव मत्याद्युपयोगः, एवं क्षायिकोपयोगोऽपि भविष्यति जीवस्वाभाव्यादिति गा-

थाऽभिप्रायः। न च क्षयकार्येण अवश्यमनवरतमेव भवितव्यमिति दर्शयन्नाह—अह णवि एवं ता सुण जहेव खीणंतराइओ अरहा। संतेवि अंतरायक्खयम्मि पंचप्पगारम्मि ॥ ७ ॥ सततं न देति लहति व भुंजति उवभुंजई व सव्वन्नू। कज्जम्मि देति लभति व भुंजंति तहेव इहइंपि ॥ ८ ॥ किंच—दिंतस्स लभंतस्स य भुंजंतस्स व जिणस्स एस गुणो। खीणंतराइयत्ते जं से विग्घं न संभवइ ॥ ९ ॥ उवउत्तस्सेमेव य णाणम्मि व दंसणम्मि व जिणस्स। खीणावरणगुणोऽयं जं कासिणं मुणइ पासइ वा ॥ १० ॥ चो०-पासंतोऽवि न जाणइ जाणं व ण पासती जइ जिणिंदो। एवं न कदाइवि सो सव्वन्नू सव्वदरिसी य ॥ ११ ॥ पश्यन्नपि न जानाति जानन्वा न पश्यति यदि जिनेद्रः एवं न कदाचिदप्यसौ सर्वज्ञः सर्वदर्शी वा, युगपदन्यतरोपयोगकालेऽन्यतरोपयोगाभावादिति गाथार्थः ॥ सिद्धान्तवाद्याह—जुगवमजाणंतोऽवि हु चउहिंवि णाणेहिं जहेव चउणाणी। भण्णइ तहेव अरहा सव्वन्नू सव्वदरिसी य ॥१२॥ इयं तु निगदसिद्धैव, नवरं क्षायिकभावमाश्रित्येति गाथार्थः ॥ पुनरप्याह—तुल्ले उभयावरणक्खयम्मि पुव्वतरमुब्भवो कस्स? । दुविहुवयोगाभावे जिणस्स जुगवंति चोदेति ॥ १३ ॥ तुल्ये उभयावरणक्षये केवलज्ञानदर्शनावरणक्षये पूर्वतरं प्रथमतरमुद्भवः—उत्पादः कस्य?, यदि ज्ञानस्य स किंनिबन्धन इति वाच्यं, तदावरणक्षयनिबन्धन इति चेत् दर्शनेऽपि तुल्य इति तस्याप्युद्भवप्रसंगः, एवं दर्शनेऽपि वाच्यं, अतः स्वावरणक्षयेऽपि दर्शनाभाववत् ज्ञानस्याप्यभावप्रसंगः विपर्ययो वा, एवं-द्विविधोपयोगाभावे जिनस्य युगपदिति चोदयति, अयं गाथार्थः ॥ अत्र सिद्धान्तवाद्याह—भण्णति ण एस नियमो जुगवुप्पन्नेण जुगवमेवेह। होयव्वं उवओगेण एत्थ सुण ताव दिट्ठंतं ॥ १४ ॥ जह जुगवुप्पत्तीयवि सुत्ते सम्मत्त-

मतिसुतादीणं । णत्थि जुगवोवयोगो सव्वेसु तहेव केवलिणो ॥ १५ ॥ भणियंपि य पन्नत्तीपन्नवणादीसु जह जिणो समयं । जं जाणती न पासइ तमणुरयणप्पभादीणं ॥ १६ ॥ इदं गाथात्रयमपि प्रकटार्थम् । अधुना ये केवलज्ञानदर्शनाभेदवादिनस्तन्मतमुपन्यस्यन्नाह—जह किर खीणावरणे देसन्नाणाण संभवो न जिणे । उभयावरणादीते तह केवलदंसणस्सावि ॥ १७ ॥ निगदसिद्धा । सिद्धान्तवाद्याह—देसन्नाणोवरमे जह केवलणाणसंभवो भणिओ । देसद्दंसणविगमे तह केवलदंसणं होउ ॥ १८ ॥ अह देसणाणदंसणविगमे तुह केवलं मयं णाणं । ण मतं केवलदंसणमेच्छामेत्तं णणु तवेयं ॥१९॥ भण्णइ जहोहिणाणी जाणइ व पासइ व भासितं सुत्ते । न य णाम ओहिदंसणणाणेगत्तं तह इमंपि ॥ २० ॥ जह पासइ तह पासतु पासति सो जेण दंसणं तं से । जाणाति य जेण अरहा तं से णाणंति वत्तव्वं ॥ २१ ॥ स्वपक्षसमर्थनायैव सिद्धान्तवाद्याह—णाणम्मि दंसणम्मि य एत्तो एगतरयम्मि उवउत्तो । सव्वस्स केवलिस्सा जुगवं दो णत्थि उवओगा ॥ २२ ॥ उवओगो एगयरो पणुवीसतिमे सते सिणायस्स । भणिओ वियडत्थो च्चिय छट्ठुद्देसे विसेसेउं ॥ २३ ॥ गाथाद्वयमपि निगदसिद्धं, नवरं भगवत्यां पंचविंशतितमे शतेऽधिकारोपलक्षिते 'सिणायस्स' त्ति स्नातकस्य केवलिनः । सिद्धान्तवाद्यनुद्धतत्वमागमभक्तिं च परां ख्यापयन्नाह—कस्स व णाणुमतमिणं जिणस्स जदि होज्ज दोवि उवओगा ? । णूणं ण होंति जुगवं जेण णिसिद्धा सुते बहुसो ॥ २४ ॥ निगदसिद्धैवेत्यलं प्रसंगेन, प्रकृतं प्रस्तुमः ।

'अह'० गाहा ॥(५९--१३४)॥ इह मनःपर्यायज्ञानानन्तरं सूत्रक्रमोद्देशतः शुद्धिलाभतश्च प्राक्केवलज्ञानमुक्तं, तदुपन्यस्तय-

इत्यतस्तदर्थोऽयमथशब्दः, उक्तं च-"अथशब्दः प्रक्रियाप्रश्नानन्तर्य्यमंगलोपन्यासप्रतिवचनसमुच्चयेषु' सर्वाणि च तानि द्रव्याणि सर्वद्रव्याणि जीवाजीवलक्षणानि तेषां परिणामाः-प्रयोगविश्रसोभयाख्या उत्पादादयः सर्वद्रव्यपरिणामास्तेषां भावः-सत्ता स्वलक्षणमित्यनर्थान्तरं तस्य विशेषेण ज्ञापनं विज्ञप्तिः विज्ञानं वा विज्ञप्तिः, तत्र भेदोपचारात्तस्या विज्ञप्तेः-परिच्छित्तेः कारणं सर्वद्रव्यपरिणामभावविज्ञप्तिकारणं, अथवा विज्ञप्तिरेव कारणं विज्ञप्तिकारणं, अत एव सर्वक्षेत्रकालविषयं तत्, क्षेत्रादीनामपि द्रव्यत्वात्, तच्च ज्ञेयानन्तत्वादनन्तं, शश्वद्भावाच्छाश्वतं, सदोपयोगादिति भावार्थः, प्रतिपतनशीलं प्रतिपाति न प्रतिपाति अप्रतिपाति, सदाऽवस्थितमित्यर्थः, आह—यच्छाश्वतं तदप्रतिपात्येवातः किं विशेषणेनेति?, उच्यते, मा भूद् यावद्भवति तावच्छाश्वतमनवरतमेव भवतीति प्रतिपत्तिः, न पुनरवध्यादिवदन्यथेत्यतो विशेषणमित्यनवरतं भवति सर्वकालं चेति, अथवैकपदव्यभिचारेऽपि विशेषणविशेष्यभावो भवतीति ज्ञापनार्थं, तथाहि—शाश्वतमप्रतिपात्येव, अप्रतिपाति तु शाश्वतमशाश्वतं वा, अप्रतिपात्यवधेरप्यशाश्वतत्वादिति, एकविधम्-एकप्रकारं आवरणाभावात् क्षयस्यैकरूपत्वात्, केवलं-मत्यादिनिरपेक्षं, केवलं च तज्ज्ञानं चेति गाथार्थः ॥ इह तीर्थकृत् समुपजातकेवलः सत्त्वानुग्रहार्थं देशनां करोति, तीर्थकरनामकर्मोदयात्, ततश्च ध्वनेर्द्रव्यश्रुतरूपत्वात्तस्य च भावश्रुतपूर्वकत्वात् श्रुतज्ञानसम्भवादनिष्टापत्तिरिति मा भून्मतिमोहोऽव्युत्पन्नबुद्धीनामित्यतस्तद्विनिवृत्त्यर्थमाह—

'केवल०' गाहा ॥ (* ६०—२३सू० १३९) ॥ इह तीर्थकरः केवलज्ञानेनार्थान्-धर्मास्तिकायादीन् मूर्त्तामूर्त्तान् अभिलाप्यानभिलाप्यान् ज्ञात्वा विनिश्चित्य केवलज्ञानेनैव ज्ञात्वा, नतु श्रुतज्ञानेन, तस्य क्षायोपशमिकत्वात्, केवलिनश्च तदभावात्, सर्वशुद्धौ देशशुध्ध्यभावादित्यर्थः 'तत्र' तेषामर्थानां मध्ये प्रज्ञापनं प्रज्ञापना तस्या योग्याः प्रज्ञापनायोग्याः तान् भाषते-तानेव वक्ति,

नेतरानिति, प्रज्ञापनीयानिति न सर्वानेव भाषतेऽनन्तत्वाद् आयुषः परिमितत्त्वात्, किं तर्हि?, योग्यानेव, गृहीतृशक्त्यपेक्षया, यो हि यावतां योग्य इति, तत्र केवलज्ञानोपलब्धार्थाभिधायकः शब्दराशिः प्रोच्यमानस्तस्य भगवतो वाग्योग एव भवति, न श्रुतं, नामकर्मोदयनिबन्धनत्वात्, श्रुतस्य च क्षायोपशमिकत्वात्, स च श्रुतं भवति 'शेषं' शेषमित्यप्रधानं, एतदुक्तं भवति-श्रोतॄणां श्रुतग्रन्थानुसारि भावश्रुतनिबन्धनत्वाच्छेषम्-अप्रधानं द्रव्यश्रुतमित्यर्थः, अन्ये त्वेवं पठन्ति-'वइजोग सुयं हवइ तेसिं' स वाग्योगः श्रुतं भवति तेषां श्रोतॄणां, भावश्रुतकारणत्वादित्यभिप्रायः, अथवा वाग्योगः श्रुतं द्रव्यश्रुतमेवेति गाथार्थः। 'से तं' इत्यादि निगमनम्। तदेतत् केवलज्ञानं, तदेतत्प्रत्यक्षम्। एवं प्रत्यक्षे प्रतिपादिते सति परोक्षस्वरूपमनवगच्छन्नाह चोदकः—

'से किं त' मित्यादि ॥(२४-१४०)॥ अथ किं तत् परोक्षं ?, परोक्षं द्विविधं प्रज्ञप्तं, तद्यथा—आभिनिबोधिकज्ञानपरोक्षं च श्रुतज्ञानपरोक्षं च, चौ पूर्ववत्, अनयोश्चेत्थं क्रमोपन्यासे प्रयोजनमुक्तमेव ॥ साम्प्रतं स्वाम्यभेदप्रतिपादनायाह—'जत्थ आभिणिबोहियणाण' मित्यादि, यत्र पुरुषे इन्द्रियनोइन्द्रियक्षयोपशमे वा आभिनिबोधिकज्ञानं तत्रैव पुरुषादौ श्रुतज्ञानं, तथा यत्र श्रुतज्ञानं तत्राभिनिबोधिकज्ञानम्। आह—यत्राभिनिबोधिकं ज्ञानं तत्र श्रुतज्ञानमित्युक्ते यत्र श्रुतज्ञानं तत्राभिनिबोधिकज्ञानमिति गम्यत एवेत्यतः किमनेनोक्तेनेति?, अत्रोच्यते, नियमतो न गम्यत इत्यतो नियमार्थं, तथा चाह-'दोवि एयाइं' इत्यादि, द्वे अप्येते-आभिनिबोधिकश्रुते अन्योऽन्यानुगते-परस्परं प्रतिबद्धे, स्यादेतद्-एवं सत्यभेद एवास्त्वनयोरित्याशङ्क्याह-'तहवि पुणो' इत्यादि, तथापि पुनराचार्याः नानात्वं-भेदं प्रज्ञापयन्ति प्ररूपयन्ति, कथं ?, लक्षणभेदाद्, दृष्टश्चान्योऽन्यानुगतयोरप्येकाकाशस्थयोर्धर्माधर्मास्तिकाययोर्लक्षणभेदाद्भेद इति, तत्र यो हि गतिपरिणामपरिणतयोर्जीवपुद्गलयोर्गत्युपष्टम्भहेतुर्जलमिव झषस्य स

खल्वसंख्येयप्रदेशात्मकोऽमूर्त्तो धर्मास्तिकाय इति, तथा यः स्थितिपरिणामपरिणतयोर्जीवपुद्गलयोरेव स्थित्युपष्टम्भहेतुर्विवक्षया क्षितिरिव झषस्य स खल्वसंख्येयप्रदेशात्मकोऽमूर्त्त एवाधर्मास्तिकाय इति, एवमाभिनिबोधिकश्रुतयोरपि लक्षणभेदाद्भेदः, तथा चाह–'अभिणिवुज्झइ' इत्यादि, अभिनिवुध्यत इत्याभिनिबोधिकं–आत्मनः परिणामविशेषः, एवं शृणोतीति श्रुतं–आत्मन एव परिणामविशेष इति, एतदुक्तं भवति–यदिन्द्रियमनोनिमित्तमात्मनो विज्ञानं श्रुतग्रन्थानुसारेणोपजायते तत् श्रुतं, शेषमिन्द्रियमनोनिमित्तमाभिनिबोधिकमिति । इत्थं लक्षणभेदाद्भेदमभिधायाधुना प्रकारान्तरेण भेदमभिधित्सुराह-'**मतिपुव्वं सुतं, ण मती सुयपुव्विया**' 'पृ पालनपूरणयो'रित्येतस्य पूर्यते प्राप्यते प्राल्यते वाऽनेन कार्यमिति पूर्वं-कारणं, मतिः पूर्वमस्येति मतिपूर्वं, श्रुतं-श्रुतज्ञानं, तथा चेदं मत्या पूर्यते प्राप्यते पाल्यते वा, अन्यथा प्रणश्यतीत्यर्थः, न मतिः श्रुतपूर्वेत्ययं महान् भेद इति ॥ अत्राह-मतिश्रुतयोर्युगपदेव सम्यक्त्वावाप्तौ भाव उक्तः, अज्ञानयोरपि विगमः, तत् कथं मतिपूर्वं श्रुतमिति ?, किंच–मतिपूर्वकत्वेऽभ्युपगम्यमाने सति मतिज्ञानभावेऽपि तत्काले श्रुतमज्ञानं प्राप्नोति, अनार्षं चेदमिति, अत्रोच्यते, ननु लब्धिं प्रति मतिश्रुते समकाले भवतः, न तूपयोगोऽनयोः समकाले इति मतिपूर्वं श्रुतं, इह पुनः को भावार्थः ?-श्रुतोपयोगो मतिप्रभवः, यतो नासंचिन्त्य मत्या श्रुतग्रन्थानुसारि विज्ञानमुत्पद्यते। आह-एवं मतिरपि श्रुतपूर्वा भवत्येव, तथाहि-शब्दं श्रुत्वा या मतिरुत्पद्यते सा श्रुतपूर्वेति प्रतीतं, अतो न विशेषो, यथा मतिपूर्वं श्रुतं तथा मतिरपि श्रुतपूर्वेति, अत्रोच्यते, ननु सा द्रव्यश्रुतोद्भवा वर्त्तते, इह तु न मतिः श्रुतपूर्वेति, का भावना?, भावश्रुतात् सकाशात् मतिर्नास्तीति, यद्वा कार्यतया निषिध्यते, न पुनः क्रमेण, क्रमेण तु श्रुतोपयोगात् च्युतस्य मत्यवस्थानमिष्यत एवेत्यलं प्रसङ्गेन, न चैतत् स्वमनीषिकयोच्यते, यतोऽभ्यधायि **भाष्यकृता**–"णाणाणऽण्णाणाणि य समकालाइं यतो

मतिश्रुतयो भेदः

मइसुयाइं। तो न सुयं मतिपुव्वं मतिणाणे वा सुयऽण्णाणं ॥ १ ॥ इह लद्धिमइसुयाइं समकालाइं न तूवयोगो सिं। मतिपुव्वं सुयमिह पुण सुतोपयोगो मतिप्पभवो ॥ २ ॥ सोऊण जा मती ते सुयपुव्वत्ति तेण ण विसेसो। सा दव्वसुयप्पभवा भावसुयाओ मती नत्थि ॥ ३ ॥ कज्जतया ण तु कमसो कमेण को वा मतिं निवारेइ ?। जं तत्थावत्थाणं चुतस्स सुत्तोवयोगाओ ॥४॥" इतश्च मतिश्रुतयोर्भेदः, भेदभेदात्, तथाहि-अवग्रहादिभेदादष्टाविंशतिविधं मतिज्ञानं, अङ्गप्रविष्टाद्यनेकभेदभिन्नं च श्रुतज्ञानं, इन्द्रियोपयोगलाभतो उक्तो (० लब्धिविभागतो) वा, उक्तञ्च--"सोइंदिओवलद्धी होइ सुतं सेसयं तु मतिणाणं। मोत्तूणं दव्वसुयं अक्खरलंभो य सेसेसु ॥१॥" इतश्च भेदः, अनक्षरमपि मतिज्ञानं, अक्षरानुगतं च श्रुतज्ञानमिति, अथवाऽऽत्मप्रत्यायकं मतिज्ञानं स्वपरप्रत्यायकं श्रुतज्ञानम्, आवरणभेदाच्च भेद इत्यलं अतिप्रसङ्गेन, इह च यथा मतिश्रुतयोः कार्यकारणभेदान्मिथो भेदस्तथा सम्यग्मिथ्यादर्शनपरिग्रहविशेषात् स्वरूपतोऽपि भेद इति दर्शयन्नाह--

'अविसेसिता' इत्यादि ॥"( २५-१४२ ) ॥ अविशेषिता मतिः सामान्येनैव मतिज्ञानं मत्यज्ञानं च, सामान्येनोभयत्रापि मतिशब्दप्रवृत्तेः, विशेषिता मतिः स्वामिविशेषेण सम्यग्दृष्टेर्मतिर्मतिज्ञानं, निश्चयनयदर्शनेन स्वकार्यप्रसाधकत्वात्, मिथ्यादृष्टेर्मतिः मत्यज्ञानं, तत्त्वतः स्वफलरहितत्वादित्यर्थः, एवं श्रुतसूत्रमपि व्याख्येयम्। आह--क्षयोपशमादिकारणाभेदे घटादिपरिच्छेदकार्याभेदे च कथं मिथ्यादृष्टेरज्ञाने इति, तथा च मिथ्यादृष्टेरपि क्षयोपशमादेव मतिश्रुतप्रवृत्तिः, तथोर्ध्वादिलक्षणाकारमेव घटादिसंवेदनमिति, अत्रोच्यते, मिथ्यादृष्टेरज्ञाने मतिश्रुते, सदसतोरविशेषादुन्मत्तकवद्, उक्तं च भाष्यकारेण—सदसदविसेसणाओ भवहेउजहिच्छिओवलंभाओ। णाणफलाभावातो मिच्छादिट्ठिस्स अन्नाणं ॥ १ ॥ विनेयजनानुग्रहार्थमियं लेशतो व्याख्यायत

इति, मिथ्यादृष्टिः कथंचित् सन्तमपि पुरुषे देवादिधर्मं न प्रतिपद्यते, पुरुष एवेत्यभ्युपगमात् , तथा असन्तमपि घटादिधर्मं प्रतिपद्यते, अस्त्येवेत्यभ्युपगमात् , अतः सदसतोरविशेष इति, अतश्च मिथ्यादृष्टेर्मतिश्रुते अज्ञाने, भवहेतुत्वाच्च मिथ्यादर्शनवत्, इतश्चाज्ञानं यदृच्छोपलब्धेरुन्मत्तवत् , इतश्चाज्ञानं फलाभावादन्धप्रदीपवत्, ज्ञानस्य हि फलं विरतिः, सा च मिथ्यादृष्टेर्न विद्यते इत्यलं प्रसंगेन, प्रकृतं प्रस्तुमः, इह मतिपूर्वं श्रुतमितिकृत्वा मतिज्ञानमेवाधिकृत्य प्रश्नसूत्रमाह—

'से किं त'मित्यादि ॥(२६-१४४)॥ अत्र निर्वचनं-द्विविधं प्रज्ञप्तं, तद्यथा-श्रुतनिश्रितं चाश्रुतनिश्रितं च, चौ पूर्ववत्, श्रुतमिह सामायिकादि लोकबिन्दुसारान्तं द्रव्यश्रुतं गृह्यते, तदनुसारेण श्रुतपरिकर्मितमतेस्तदपेक्षमेव च उत्पादकाले यत्तु तन्निरपेक्षमेवोत्पद्यते तत् श्रुतनिश्रितं अवग्रहादि, यत्तु तन्निरपेक्षं तथाविधक्षयोपशमप्रभवमेव वर्त्तते तदश्रुतनिश्रितं-औत्पत्तिक्यादि ॥ आह-इदमप्यवग्रहादिरूपमेव, सत्यं, किन्तु श्रुतानुसारमन्तरेणोत्पत्तेर्भेदेनोक्तं । तत्राल्पतरवक्तव्यत्वादश्रुतनिश्रितमतिज्ञानप्रतिपादनायाह-'से किं त-'मित्यादि, अत्र

उप्पत्तिया०गाहा॥(*६१-१४४)॥उत्पत्तिरेव प्रयोजनं यस्याः सा औत्पत्तिकी, आह-क्षयोपशमः प्रयोजनमस्याः, सत्यं, किन्तु स खल्वन्तरंगत्वात् सर्वबुद्धिसाधारण इति न विवक्ष्यते, न चान्यच्छास्त्रस्वकर्माभ्यासादिकमपेक्षत इति, विनयो-गुरुशुश्रूषा स कारणमस्यास्तत्प्रधाना वा वैनयिकी, अनाचार्यकं कर्म साचार्यकं शिल्पं नित्यव्यापारः कर्म कादाचित्कं शिल्पं कर्मजेति कर्मणो वा जाता कर्मजा, परि समन्तात् नमनं परिणामः सुदीर्घकालपूर्वापरार्थावलोकनादिजन्य आत्मधर्म इत्यर्थः स कारणमस्यास्तत्प्रधाना

पारिणामिकी। बुध्यते अनयेति बुद्धिर्मतिरित्यर्थः, सा चतुर्विधोक्ता तीर्थकरगणधरैः, किमिति?, यस्मात् पंचमी नोपलभ्यते केवलिनाऽपि,असत्त्वादिति गाथार्थः॥ औत्पत्तिक्या लक्षणं प्रतिपादयन्नाह-पुव्व०गाहा॥(*६२-१४४)॥पूर्वमिति बुद्ध्युत्पादात् प्राक् स्वयमदृष्टः अन्यतश्चाश्रुतः अवेदितो मनसाऽप्यनालोचितः तस्मिन्नेव क्षणे विशुद्धो यथावस्थितः गृहीतोऽवधारितः अर्थोऽभिप्रेतपदार्थो यया सा तथा, इहैकान्तिकमिहपरलोकाविरुद्धं फलान्तराबाधितं चाव्याहतमुच्यते, फलं-प्रयोजनं, अव्याहतं च तत्फलं च २ योगोऽस्यास्तीति योगिनी अव्याहतफलेन योगिनी २, अन्ये पठन्ति-अव्याहतफलयोगा अव्याहतफलेन योगोऽस्याः सा अव्याहतफलयोगा बुद्धिः औत्पत्तिकी नामेति गाथार्थः ॥ साम्प्रतं विनेयजनानुग्रहायास्या एव स्वरूपप्रतिपादनार्थमुदाहरणानि प्रतिपादयन्नाह-

भरहसिल पणिय० ॥ *६३ ॥ भरह० ॥ *६४ ॥ महुसित्थ ॥ *६५ ॥ (१४४) गाहाओ, आसामर्थः कथानकेभ्य एवावसेयः, तानि चावसरप्राप्तान्यपि गुरुनियोगान्न ब्रूमः, किन्त्वावश्यके वक्ष्यामः, अधुना वैनयिक्या लक्षणं प्रतिपादयन्नाह-

भरणित्थ० गाहा ॥(*६६-१५९)॥ इहातिगुरु कार्यं दुर्निर्वहत्वाद्भर इव भरः तन्निस्तरणे समर्था भरनिस्तरणसमर्था, त्रयो वर्गास्त्रिवर्गमिति लोकरूढेर्धर्मार्थकामाः तदर्जनपरोपायप्रतिपादननिबन्धनं सूत्रं, तदन्वाख्यानं त्वर्थः पेयालं प्रमाणं सारो वा त्रिवर्गसूत्रार्थयोर्गृहीतं प्रमाणं सारो वा यया सा तथाविधा, अथवा त्रिवर्गः-त्रैलोक्यं, आह-त्रिवर्गसूत्रार्थगृहीतसारत्वे सत्यश्रुतनिश्रितत्वं विरुध्यत इति, न हि श्रुताभ्यासमन्तरेण त्रिवर्गसूत्रार्थगृहीतसारत्वं सम्भवति, अत्रोच्यते, इह प्रायोवृत्तिमंगीकृत्याश्रुतनिश्रितभावेऽपि न कश्चिद्दोष इति, उभयलोकफलवती ऐहिकामुष्मिकफलवती विनयसमुत्था विनयोद्भवा भवति बुद्धिरिति गाथार्थः ॥ अस्या एव विनेयजनानुग्रहार्थं उदाहरणैः स्वरूपमुपदर्शयन्नाह—

णिमित्ति०गाहा ॥*६७॥ सीता०गाहा॥(*६८-१५९)॥गाथाद्वयार्थः कथानकेभ्य एवावसेयः, तानि चोत्तरत्र वक्ष्यामः। साम्प्रतं कर्मजाया बुद्धेर्लक्षणं प्रतिपादयन्नाह—

उवयोग०गाहा॥(*६९-१५९)॥ उपयोजनमुपयोगो-विवक्षिते कर्मणि मनसोऽभिनिवेशः सारः-तस्यैव कर्मणः परमार्थः, उपयोगेन दृष्टः सारो ययेति समासः, अभिनिवेशोपलब्धकर्मपरमार्थेत्यर्थः, कर्मणि प्रसंगः २, प्रसंगः-अभ्यासः, परिघोलनं-विचारः, कर्मप्रसंगपरिघोलनाभ्यां विशाला, अभ्यासविचारविस्तीर्णेति भावार्थः, साधु कृतमिति सुष्ठु कृतमिति विद्वद्भ्यः प्रशंसा-साधुकारः तेन फलवतीति समासः, साधुकारेण वा शेषमपि फलं यस्याः सा तथा, कर्मसमुत्था कर्मोद्भवा भवति बुद्धिरिति गाथार्थः ॥ अस्या अपि विनेयवर्गानुकम्पयोदाहरणैः स्वरूपमुपदर्शयन्नाह—

हेरण्णिए गाहा ॥(*७०-१६४)॥ अस्या अप्यर्थं वक्ष्यामः॥ साम्प्रतं पारिणामिक्या लक्षणं प्रतिपादयन्नाह—

अणुमाण० गाहा ॥(*७१-१६५)॥ 'अनुमानहेतुदृष्टान्तैः' साध्यमर्थं साधयतीति अनुमानहेतुदृष्टान्तसाधिका, इह लिङ्गज्ञानमनुमानं, स्वार्थमित्यर्थः, तत्प्रतिपादकं वचो हेतुः, परार्थमित्यर्थः, अथवा ज्ञापकमनुमानं, कारको हेतुः, दृष्टमर्थमन्तं नयतीति दृष्टान्तः, आह--अनुमानग्रहणादेव दृष्टान्तस्य गतत्वादलमुपन्यासेन, न, अनुमानस्य तत्त्वत एकलक्षणत्वात्, उक्तं च-"अन्यथाऽनुपपन्नत्वं, यत्र तत्र त्रयेण कि"मित्यादि। साध्योपमाभूतश्च दृष्टान्तः, उक्तञ्च-"यः साध्यस्योपमाभूतस्स दृष्टान्त" इति, कालकृतो देहावस्थाविशेषो वय इत्युच्यते, तद्विपाकेन परिणामः-पुष्टता यस्याः सा तथाविधा, हितम्-अभ्युदयस्तत्कारणं वा निःश्रेयसं-

मोक्षस्तन्निबन्धनं वा हितनिश्रेयसाभ्यां फलवती बुद्धिः परिणामिकीति गाथार्थः ॥ अस्या अपि शिष्यगणहितायोदाहरणैः स्वरूपं दर्शयन्नाह—

अलए० गाहा ॥(*७२-१६५)॥ खमए० गाहा ॥( *७३-१६५ )॥ चलणा० गाहा ॥ ( *७४-१६५ ) ॥ आसामर्थः कथानकेभ्य एवावसेयः, तानि चान्यत्र वक्ष्यामः 'से तं' इत्यादि, तदेतदश्रुतनिश्रितम्

'से किं त'मित्यादि, (२७-१६८) चतुर्विधं प्रज्ञप्तं, तद्यथा-अवग्रह ईहा अपायो धारणा, अवग्रहणमवग्रहः-सामान्यमात्रानिर्दिश्यार्थग्रहणमित्यर्थः, तथा ईहनमीहा, सदर्थपर्यालोचनचेष्टेत्यर्थः, एतदुक्तं भवति-अवग्रहादुत्तीर्णः अपायात् पूर्वः सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषत्यागाभिमुखश्च प्रायो मधुरत्वादयः शङ्खादिशब्दधर्मा अत्र घटन्ते, न खरकर्कशनिष्ठुरतादयः शाङ्गादिशब्दधर्मा इति मतिविशेष ईहेति, तथा तदर्थाध्यवसायोऽपायः, निर्णयो निश्चयोऽवगम इत्यनर्थान्तरं, एतदुक्तं भवति-शांख एवायं शाङ्र्ग एव वेत्याद्यवधारणात्मकः प्रत्ययोऽपाय इति, तथा तदर्थविशेपधरणं धारणा, अविच्युतिस्मृतिवासनारूपा ॥

'से किं त'मित्यादि ॥( २८–१६८ ) ॥) अथ कोऽयमवग्रहो?, २ द्विविधः प्रज्ञप्तः, तद्यथा—अर्थावग्रहश्च व्यञ्जनावग्रहश्च, अर्य्यत इत्यर्थः, अर्थस्यावग्रहोऽर्थावग्रहः, सकलविशेषनिरपेक्षानिर्देश्यार्थग्रहणमेकसामायिकमिति भावार्थः, व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेन्द्रियं शब्दादिपरिणतद्रव्यसङ्घातो वा, ततश्च व्यञ्जनेन--उपकरणेंद्रियेण व्यञ्जनानां-शब्दादिपरिणतद्रव्याणामवग्रहो व्यञ्जनावग्रहः, अथार्थावग्रहस्य तु लक्ष्यत्वात् सकलेन्द्रियार्थव्यापकत्वाच्चेतरस्य ।

'से किं त'मित्यादि ( २९--१६२ ) अथ कोऽयं व्यञ्जनावग्रहः इत्यत्र पुनरुत्पत्तिक्रम एवाश्रितो यथासम्भवमिति सुश्लिष्टमेतदिति, प्रकृतमुच्यते-व्यञ्जनावग्रहश्चतुर्विधः प्रज्ञप्तः, तद्यथा-श्रोत्रेन्द्रियव्यञ्जनावग्रह इत्यादि सूत्रसिद्धं। आह-पञ्चेन्द्रिय-मनःसद्भावे सति किमित्ययं चतुर्विध इति ?, अत्रोच्यते, नयनमनसोरप्राप्तकारित्वाद्,अप्राप्तकारित्वं च विषयकृतानुग्रहोपघातशून्य-त्वात्, प्राप्तकारित्वे पुनरनलजलशूलाद्यालोकने दहनक्लेदनपाटनादयः स्युः, अत्र च विषयदेशं गत्वा न पश्यति, प्राप्तं चार्थं नालम्बत इत्येतावन्नियम्यते, मूर्तिमता पुनः प्राप्तेन भवत एवानुग्रहोपघातौ भास्करकिरणादिनेति, अन्यस्त्वाह-व्यवहितार्थानुपलब्धेरनुमानात् प्राप्तकारित्वं लोचनस्येति, एतदयुक्तं, नैकान्तिकत्वाद्, रुचोऽभ्रपटलस्फटिकान्तरितोपलब्धेः, स्यादेतत्-नायना रश्मयो निर्गत्य तमर्थं गृह्णन्तीति दर्शने रश्मीनां तैजसत्वात्, तेजोद्रव्यैरप्रतिस्खलनाददोष इति, एतदप्ययुक्तं, महाज्वालादौ प्रतिस्खलनोपलब्धे-रित्यत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयाद्गमनिकामात्रमेतदिति।

'से किं त'मित्यादि ॥* ३०--१७३॥ अथ कोऽयमर्थावग्रहः?, अर्थावग्रहः षड्विधः प्रज्ञप्तः, तद्यथा—श्रोत्रेन्द्रियार्थावग्रह इत्यादि सूत्रसिद्धं यावत्।

'तस्स णं इमे' इत्यादि ॥ * ३१—१७४ ॥ तस्यावग्रहस्यामूनि, णं पूर्ववत्, अवग्रहसामान्यापेक्षयैकार्थिकानि नानाघोषाणि-नानाव्यञ्जनानि पञ्च नामधेयानि भवन्ति, घोषा उदात्तादयः कादीनि व्यञ्जनानि, नामैव नामधेयं, अवग्रहविशेषापेक्षया तु कथंचिद् भिन्नार्थानि, त्रिविधश्चावग्रहः—सामान्यावग्रहो विशेषावग्रहः विशेषसामान्यार्थावग्रहश्चेति, तत्र भिन्नार्थता निदर्श्यते—

'तंजहा–ओगिण्हणते' त्यादि, अवगृह्यतेऽनेनेति अवग्रहणं, करणे ल्युट्, व्यञ्जनावग्रहप्रथमसमयप्रविष्टशब्दादिद्रव्यादानपरिणाम इत्यर्थस्तद्भावः अवग्रहणता, धार्यतेऽनेनेति धारणं उप सामीप्येन धारणं उपधारणं व्यञ्जनावग्रहाद्वाया आ(द्या)दिसमयेष्ववसानान्तं प्रतिसमयमेव शब्दादिद्रव्यादानधारणपरिणाम इति भावना, तद्भाव उपधारणता, श्रूयतेऽनेनेति श्रवणं एकसामायिकसामान्यार्थावग्रहावबोधपरिणाम इत्युक्तं भवति तद्भावः श्रवणता, अवलम्बत इत्यवलम्बनं, 'कृत्यल्युटो बहुल' मिति वचनात् कर्मणि ल्युट्, तद्भावः अवलम्बनता–विशेषसामान्यार्थावग्रह इवि भावार्थः, तथा हि उत्तरोत्तरधर्मजिज्ञासायां सत्यां शब्दादिज्ञानमेवावलम्ब्येहादयः प्रवर्त्तन्ते—किमयं शांखः किं वा शार्ङ्ग इत्यतस्तदनन्तरमेवेहादिप्रवृत्तेर्विशेषसामान्यार्थावग्रहोऽवलम्बनमिति, एवमुत्तरोत्तरधर्मजिज्ञासायां सत्यां विशेषसामान्यार्थावग्रहेषु मर्यादया धावतो मेधोच्यते, यावदधिगच्छति, यथा-शांखः स किं मन्द्रः किं वा तार इत्यादि, यत्र व्यञ्जनावग्रहो नास्ति तत्राद्यभेदद्वयाभाव इति । 'से तं उग्गहे' सोऽयमवग्रहः ।

'से किं त' मित्यादि, सूत्रम् ॥ ३२-१७५)॥ निगदसिद्धं यावत् आभोगनता ईहा, अर्थावग्रहसमयसमनन्तरमेव सद्भूतार्थविशेषाभिमुखमालोचनमाभोगनमुच्यते तद्भाव आभोगनता, मृग्यतेऽनेन परिणामकरणेनेति मार्गणं, सद्भूतार्थविशेषाभिमुखमेव तदूर्ध्वमन्वयव्यतिरेकधर्मान्वेषणमिति हृदयं, तद्भावो मार्गणता, एवमन्विष्यतेऽनेनेति गवेषणं, तत ऊर्ध्वं सद्भूतार्थविशेषाभिमुखमेव व्यतिरेकधर्मपरित्यागतोऽन्वयधर्माध्यासेनालोचनमिति गर्भः, तद्भावो गवेषणता, ततो मुहुर्मुहुः क्षयोपशमविशेषतः स्वधर्मानुगतसद्भूतार्थविशेषचिन्तनं चिन्ता, विमर्षणं विमर्षः-क्षयोपशमविशेषादेवोर्ध्वं स्पष्टतरावबोधतः सद्भूतार्थविशेषाभिमुखमेव व्यतिरेकधर्मपरित्यागतोऽन्वयधर्मालोचनं विमर्षः, नित्यानित्यादिद्रव्यभावालोचनमित्यन्ये । 'से तं ईहा' ।

'से किं त' मित्यादि ॥(३३-१७६)॥ सूत्रसिद्धं यावदावर्त्तनता, वर्त्यते अनेनेति वर्त्तनं-क्षयोपशमकरणमेव ईहाभावनिवृत्त्यभिमुखस्यापायभावप्रतिपत्त्यभिमुखस्य चार्थविशेषावबोधविशेषस्या-मर्यादया वर्त्तनमावर्त्तनं तद्भावः आवर्त्तनता, ततः प्रतिपत्या(प्रतीपमा-) वर्त्तनं प्रत्यावर्त्तनं, अर्थविशेष एव विवक्षितापायप्रत्यासन्नतरबोधविशेषाणां मुहुर्मुहुर्वर्त्तनमित्यर्थः, तद्भावः प्रत्यावर्त्तनता, अप अयः अपायः विशेषतः सङ्कलनेन निश्चयो निर्णयोऽवगम इत्यनर्थान्तरं, सर्वथेहाभावान्निवृत्तस्यावधारणावधारितमर्थमवगच्छतोऽपाय इति भावार्थः, ततस्तमेवावधारितमर्थं क्षयोपशमविशेषात् स्थिरतया पुनः पुनः स्पष्टतरमेव बुध्यमानस्य बुद्धिः, विशिष्टं ज्ञानं विज्ञानं क्षयोपशमविशेषादवधारितार्थविषयमेव तीव्रतरधारणाकरणमित्यर्थः, 'से तं अवायो' सोऽयमपायः ।

'से किं त' मित्यादि ॥( ३४-१७६ )॥ निगदसिद्धं यावद्धारणेत्यादि, अपायानन्तरमवगतार्थमविच्युत्या जघन्योत्कृष्टमन्तर्मुहूर्त्तमात्रं कालं धारयतो धारणेति भण्यते, ततस्तमेवार्थं उपयोगाच्युतं जघन्येनान्तर्मुहूर्त्तादुत्कृष्टतोऽसङ्ख्येयकालात् परतः स्मरतो धरणं धारणोच्यते, स्थापनं स्थापना, ततोऽपायावधारितमर्थं पूर्वापरालोचितं हृदि स्थापयतः स्थापना, मूर्त्तघटस्थापनावत्, वासनेत्यर्थः, अन्ये तु धारणास्थापनयोर्व्यत्ययेन स्वरूपमाचक्षते, प्रतिष्ठापनं प्रतिष्ठा अपायावधारितमेवार्थं हृदि प्रभेदेन प्रतिष्ठापयतः प्रतिष्ठा भण्यते, जले उपलप्रक्षेपप्रतिष्ठावत्, कोष्ठक इति अविनष्टसूत्रार्थबीजधारणात् कोष्ठकवद् धारणा कोष्ठक इति । इहात्मनो ज्ञानस्वभावत्वाज्ज्ञानावरणीयादिकर्ममलपटलाच्छादितस्वभावत्वात् गुरुवदनसमुत्थशब्दाद्यनेकविधकारणापाद्यमानक्षयोपशमसामर्थ्यादवबोधः, ज्ञेयस्य चानन्तधर्मात्मकत्वात् कालक्षयोपशमविशेषतोऽवग्रहेहापायावबोधविशेषो भावनीयः, कथंचि-

धारणापर्यायाः अवग्रहादिकालः

॥ ६६ ॥

देकाधिकरणत्वाद्, अन्यथा परिच्छेदप्रवृत्तिलक्षणसकललोकप्रसिद्धसंव्यवहारोच्छेदप्रसङ्ग इत्यलं प्रसङ्गेन, गमनिकामात्रमेतत् ॥ अवग्रहादिकालप्रमाणं प्रतिपादयन्नाह—

'ओग्गहे०' इत्यादि॥(*७४।३५-१७७)॥ अर्थावग्रहः एकसामायिकः, आन्तर्मौहूर्त्तिकी ईहा, आन्तर्मौहूर्त्तिकोऽपायः, धारणा संख्येयं वाऽसङ्ख्येयं वा कालं स्मृतिवासनारूपा, सङ्ख्येयवर्षायुषां संख्येयमसंख्येयवर्षायुषामसंख्येयम्। 'एवं अट्ठावीसविधस्से'-त्यादि, एवमुक्तेन प्रकारेण अष्टाविंशतिविधस्य, कथमष्टाविंशविधं ?, चतुर्विधो व्यञ्जनावग्रहः षड्विधोऽर्थावग्रहः षड्विधा ईहा षड्विधोऽपायः षड्विधा धारणा, एवमष्टाविंशतिविधस्याभिनिबोधिकज्ञानस्य सम्बन्धी यो व्यञ्जनावग्रहः तस्य प्ररूपणं-प्रतिपादनं करिष्यामि, कथं ?, प्रतिबोधकदृष्टान्तेन मल्लकदृष्टान्तेन च, 'से किं तं'मित्यादि ॥(३६-१७७)॥ प्रतिबोधयतीति प्रतिबोधकः स एव दृष्टान्तस्तेन, तद्यथा नाम कश्चिदनिर्दिष्टस्वरूपः पुरुषः कंचिदन्यतममनिर्दिष्टस्वरूपमेव पुरुषं सुप्तं सन्तं पतिबोधएज्जात्ति प्रतिबोधयेत्, कथं ?, अमुकामुकेति, तत्र चोदकेत्यादि, इह ज्ञानावरणकर्मोदयतः कथितमपि सूत्रार्थमनवगच्छन् प्रश्नचोदनाच्चोदकः, अविशिष्टक्षयोपशमभावतो वा अगृहीतशास्त्रगर्भार्थः पूर्वापरविरोधचोदनात् चोदकः, यथाऽवस्थितं सूत्रार्थं प्रज्ञापयतीति प्रज्ञापकः, श्रौतार्थापेक्षया विरुद्धं पुनरुक्तसूत्रं ना अर्थतोऽविरुद्धं अपुनरुक्तं प्रज्ञापयतीति प्रज्ञापकः, तत्र चोदकः प्रज्ञापकं एवमुक्तवानिति, भूतकालनिर्देशोऽनादिमानागम इति ख्यापनार्थः, किमेकसमयप्रविष्टेत्यादि सुगमं यावत् एवं वदन्तं चोदकं प्रज्ञापक एवमुक्तवान्-नो एकसमयप्रविष्टेत्यादि प्रकटार्थं यावत् न सङ्ख्येयसमयप्रविष्टाः पुद्गला ग्रहणमागच्छन्ति, नवरमयं प्रतिषेधः स्फुटशब्दविज्ञानग्राह्यतामधिकृत्य वेदितव्यः, शब्दविज्ञानजनकत्वेनेत्यर्थः, अन्यथा सम्बन्धमात्रमधिकृत्य प्रथमसमयादारभ्य ग्रहणमा-

गच्छन्त्येव, 'असंखेज्ज' इत्यादि, प्रतिसमयप्रवेशेनादित आरभ्य असंख्येयसमयैः प्रविष्टैरसंख्येयसमयप्रविष्टाः, न पुनर्विंशत्याऽहोभिः पथिकगृहप्रवेशवदपान्तरालागमनसमयापेक्षयाऽसंख्येयसमयप्रविष्टा इति, पुद्गलाः-शब्दद्रव्यविशेषा ग्रहणमागच्छन्ति, अर्थावग्रहज्ञानहेतवो भवन्तीति भावः, इह च चरमसमयप्रविष्टा एव ग्रहणमागच्छन्ति, तदन्ये त्विन्द्रियक्षयोपशमकारिण इत्योघतो ग्रहणमुक्तमिति, असंख्येयमानं चात्र जघन्यमावलिकासंख्येयभागसमयतुल्यं, उत्कृष्टं तु संख्येयावलिकासमयतुल्यं, तच्च प्राणापानपृथक्त्वकालसमयमिति, उक्तंच-"वंजणवग्गहकालो आवलियाऽसंखभागमेत्तो उ । थोवो उक्कोसो पुण आणापाणूपुहुत्तंति ॥ १ ॥" 'से तं' इत्यादि निगमनम् ॥ सेयं प्रतिबोधकदृष्टान्तेन व्यञ्जनावग्रहप्ररूपणेति वाक्यशेषः ॥

'से किं त'मित्यादि, अथ कोऽयं मल्लकदृष्टान्तो?, २ नाम तद्यथा नाम कश्चित् पुरुष आपाकशिरसः, आपाकः प्रतीतः तच्छिरसश्च मल्लकं-शरावं गृहीत्वा, इदं रूक्षं भवति इत्यतोऽस्य ग्रहणमिति, तत्र मल्लके एकं उदकबिन्दुं प्रक्षिपेत् स नष्टः, तत्रैव तद्भावपरिणतिमापन्न इत्यर्थः, शेषं सुगमं यावत् जण्णं तं मल्लकं रावेहित्ति आर्द्रतां नेष्यति, शेषं सुगमं यावत् एवमेवेत्यादि, अतिबहुत्वात् प्रतिसमयमनन्तैः पुद्गलैः-शब्दपुद्गलैः यदा तद् व्यंजनं पूरितं भवति तदा हुमिति करोति, तमर्थं गृह्णातीत्युक्तं भवति, अत्र व्यंजनशब्देन त्रयमभिगृह्यते-द्रव्यमिन्द्रियं सम्बन्धो वा, यदा द्रव्यं व्यंजनमधिक्रियते तदा पूरितमिति प्रभूतीकृतं, स्वप्रमाणमानीतं, स्वविषयव्यक्तौ समर्थीकृतमित्यर्थः, यदा व्यंजनमिन्द्रियं तदा पूरितमित्याभृतं, भृतं व्याप्तमित्यर्थः, यदा तु द्वयोरपि सम्बन्धोऽधिक्रियते तदा पूरितमित्यंगांगीभावमानीतमनुपक्तमित्यर्थः, एवं यदा पूरितं भवति तदानीं तमर्थं गृह्णाति, किंविशिष्टं ?-नामजात्यादिकल्पनारहितं, तथा चाह-णो चेव णं जाणइ के वेस सद्दादित्ति, न पुनरेवं जानाति क एष शब्दादिरर्थ इति, एकसामयिकत्वादर्था-

वग्रहस्य, अत्रार्थावग्रहात् पूर्वः सर्वो व्यंजनावग्रह इति, ततो ईहं पविसतीत्यादि सुगमं यावत् संखेज्जं वा असंखेज्जं वा
कालेति । अत्राह-सुप्तमंगीकृत्य युज्यते अयं न्यायः, जाग्रतस्तु शब्दश्रवणसमनन्तरमेव अवग्रहेहाव्यतिरेकेणैवापायज्ञानमुत्पद्यते, तथो-
पलम्भात् , न चैतदनार्षं, यत आह सूत्रकारः–'से जहा णामए' इत्यादि, अथवा यदुक्तं न पुनरेवं जानाति क एष शब्दादि, किं
तर्हि ?, नामजात्यादिकल्पनारहितं गृह्णातीत्येतदयुक्तं, यत एवमागमः 'से' इत्यादि, अथवा सुप्तप्रतिबोधकमल्लकदृष्टान्ताभ्यां
व्यंजनार्थावग्रहयोः सामान्येन स्वरूपमभिधाय अधुना मल्लकदृष्टान्तेनैव प्रतिपादयन्नाह-'से जहा' इत्यादि, तद्यथा नाम कश्चित्
पुरुषः अव्यक्तं शब्दं शृणुयात्, अव्यक्तमित्यनिर्देश्यस्वरूपं नामादिकल्पनारहितमित्यनेनार्थावग्रहमाह, तस्य च श्रोत्रेन्द्रियसम्ब-
न्धिनो व्यंजनावग्रहपूर्वकत्वात् व्यंजनावग्रहं च, आह-न ह्यत्रैवं क्रम उपलभ्यते, किंत्वक्षेपेण शब्दापायज्ञानमेव वेद्यते, सूत्रेऽव्यक्त-
मिति शब्दविशेषणं कृतमतोऽव्यक्तं सन्दिग्धं पुरुषादिशब्दभेदेन शब्दं शृणुयादिति न्याय्यं, तथा चोत्तरसूत्रमप्येतदेवाह- 'तेणं
सद्देत्ति उग्गहिते' तेन-श्रोत्रा शब्द इत्यवगृहीतं 'णो चेव णं जाणति के वेस सद्दादि' न पुनरेवं जानाति-क एष पुरुषादि-
समुत्थानामन्यतमः शब्द इति, आदिशब्दाद्रसादिष्वप्ययमेव न्याय इति ज्ञापयति, 'ततो ईहं पविसती' त्याद्यपि संबद्धमिति,
नैतदेवम्, उत्पलपत्रशतव्यतिभेददृष्टान्तेन कालभेदस्य दुर्लक्षत्वाद् अक्षेपेण शब्दापायज्ञानानुपपत्तेः, यच्च तेन शब्द इत्यवगृहीत-
मित्युक्तम् अत्र शब्द इति भणति वक्ता-सूत्रकार, इतिकरणनिर्देशात्, शब्दमात्रं वा शेषविशेषविमुखं, न तु शब्दबुध्या, तस्यैवा-
पायप्रसंगाद्, अवग्रहादिश्रुतव्यतिरेकेण च मतिज्ञानानुत्पत्तेः, तथा चाह-'णो चेव ण' मित्यादि, न पुनरेवं जानाति क एष
शब्दादिरर्थः, सामान्यमात्रप्रतिभासनाद्, आह च भाष्यकारः-"अव्वत्तमणिद्देसं सरूवणामादिकप्पणारहितं । जदि एवं जं तेणं

॥ ६९ ॥

गहियं सद्देत्ति तं कह णु?॥१॥ सद्देत्ति भणति वत्ता तम्मत्तं वा ण सद्दमुत्ती(बुद्धी)ए । जदि होज्ज सद्दबुद्धी तोऽवाओ चेव सो होज्जा ॥ २ ॥ जति सद्दबुद्धिमेत्तयमवग्गहे तव्विसेसणमवाओ । णणु सद्दो णासद्दो ण य रूवादी विसेसोऽयं ॥३॥ थोवम्मि य णावायो तब्भेयाविक्खणं अवाओत्ति । तब्भेयाविक्खाए णणु थोवमिणंपि णावाओ ॥ ४ ॥" इत्यादि, अन्ये त्वाचार्या इदं सूत्रं विशेषसामान्यार्थावग्रहविषयं व्याचक्षते, अव्यक्तं-अनिर्द्धारितविशेषस्वरूपं अशब्दव्यवच्छेदेन शब्दं शृणुयात् , तेन शब्द इति शब्दमात्रमवगृहीतं, न पुनरेवं जानाति क एष शब्दः,?, शांखशार्ङ्गादीनामन्यतमः, आदिशब्दाद्रसादिपरिग्रहः, तत्रापीयमेव वार्त्तेति, युक्तियुक्ता चेयं व्याख्येति, तत ईहां प्रविशति-सदर्थपर्यालोचनां करोति, इह च दुरवबोधत्वाद्वस्तुन अपटुत्वाच्च मतिज्ञानावरणक्षयोपशमस्यासंजातापाय एवेहोपयोगाच्युतः पुनरप्यन्यमन्तर्मुहूर्त्तमीहते, एवमीहोपयोगाविच्छेदत एव प्रभूतानप्यन्तर्मुहूर्त्तानीहत इति सम्भवः, ततो जानातीत्यादि, वस्तुतः गतार्थं यावत् स्पर्शनेन्द्रियवक्तव्यता, उक्तं च भाष्यकारेण-"सेसेसुवि रूवादिसु विसएसुवि होइ रूवलक्खाइं । पायं पच्चासन्नत्तणेणमीहादिवत्थूणि ॥ १ ॥ थाणुपुरिसादिकुट्टुप्पलादिसंभिन्नकरिल्लमंसादी । सप्पोप्पलणालादियसमाणरूवादिविसयाइं ॥ २ ॥ एवं चिय सुमिणादिसु मणसो सद्दादिएसु विसएसु । होंतिंदियवावाराभावेऽवि अवग्गहादीया ॥३॥" इत्यादि, 'से जहा णामए' इत्यादि, इह प्रतिबोधप्रथमसमयेऽव्यक्तम्--अनिर्द्धारितस्वरूपं स्वप्नं प्रतिसंवेदयेत् , तस्य तदाऽर्थावग्रहः, तत ऊर्ध्वमीहादय इति, अन्ये तु मनसोऽप्यर्थावग्रहात् पूर्वं व्यंजनावग्रहं मनोद्रव्यव्यंजनग्रहणलक्षणं व्याचक्षते, तत् पुनरयुक्तं, अनार्षत्वाद् , व्यंजनावग्रहस्य श्रोत्रादिभेदेन चतुर्विधत्वात्, शेषं प्रकटार्थं यावत् सेत्तं मल्लगदिट्ठंतेणं । इह च सुखप्रतिपत्त्यर्थं स्वप्नमधिकृत्य नोइन्द्रियार्थावग्रहादयः प्रतिपादिताः, अन्यथाऽन्यत्रापीन्द्रियव्यापाराभावे सति मनसा

पर्यालोचयतो अवगन्तव्या इति ॥ अत्राह-किमुक्तलक्षणमवग्रहादिक्रमं विहाय क्वचिदपि मतिज्ञानं नोत्पद्यते येनैवं क्रम इति, अत्रोच्यते, नोत्पद्यते, तथाहि- नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यते इत्यलं प्रसंगेन ॥ सर्वमेवेदं द्रव्यादिभिर्निरूपयन्नाह—

**'तं समासतो०'** इत्यादि॥(३७-१८४)॥ द्रव्यत आभिनिबोधिकज्ञानी आदेशेन, आदेशः-प्रकारः, स च सामान्यतो विशेषतश्च, तत्र द्रव्यजातिसामान्यादेशेन, द्रव्याणि-धर्मास्तिकायादीनि जानाति, विशेषतोऽपि यथा धर्मास्तिकायो धर्मास्तिकायस्य देश इत्यादि, न पश्यति सर्वात्मना धर्मास्तिकायादीन् , शब्दादींस्तु योग्यदेशावस्थितान् पश्यत्यपि, श्रुतादेशतो वा जानाति, एवं क्षेत्रादिष्वपि भावनीयं, नवरं तान्न पश्यत्येव, तथा चोक्तं भाष्यकारेण-"आदेसोत्ति पगारो ओहादेसेण सव्वदव्वाइं । धम्मत्थिकाइयाइं जाणइ न उ सव्वभावेण ॥ १ ॥ खेत्तं लोगालोगं कालं सव्वद्धमहव तिविधोऽवि । पंचोदइयादीए भावे जं नेयमेवतियं ॥ २ ॥ आदेसोत्ति व सुत्तं सुतोवलद्धेसु तस्स मतिणाणं । पसरइ तब्भावणभाविणोवि सुत्ताणुसारेणं ॥ ३ ॥" साम्प्रतं संग्रहगाथा उच्यते, तत्र—

**उग्गह० गाहा** ॥ (*७५-१८४) ॥ **अवग्रहः** प्राग्निरूपितशब्दार्थः, तथा **ईहाऽपायश्च**, चशब्दः पृथगवग्रहादिस्वरूपस्वातन्त्र्यप्रदर्शनार्थः, अवग्रहादीनामीहादयः पर्याया न भवन्तीत्युक्तं भवति, समुच्चयार्थो वा, यदा समुच्चयार्थस्तदा व्यवहितो द्रष्टव्यः, धारणा च, एवकारः क्रमपरिदर्शनार्थः, एवमनेनैव क्रमेण भवन्ति चत्वार्याभिनिबोधिकज्ञानस्य भिद्यन्त इति भेदा-विकल्पाः

अवग्रहादयो भेदाः

अंशा इत्यनर्थान्तरं त एव वस्तूनि भेदवस्तूनि, कथं ?, यतो नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यत इति; अथवा काक्का नीयते, एवं भवंति चत्वार्याभिनिबोधिकज्ञानस्य भेदवस्तूनि ?, **समासेन** संक्षेपेण, विशिष्टावग्रहादिस्वरूपापेक्षया, न तु विस्तरत इति, विस्तरतोऽष्टाविंशतिभेदभिन्नत्वात्तस्येति गाथार्थः ॥ इदानीमनन्तरोपन्यस्तानामवग्रहादीनां स्वरूपं प्रतिपिपादयिषयाऽऽह—

अत्थाणं० गाहा ॥ (*७६-१८४) ॥ तत्रार्यन्त इत्यर्थाः, अर्यन्ते गम्यन्ते परिच्छिद्यन्त इतियावत्, ते च रूपादयः, तेषामर्थानां प्रथमदर्शनानन्तरं च ग्रहणं अवग्रहं, ब्रुवत इति योगः, आह-वस्तुनः सामान्यविशेषात्मकतया विशिष्टत्वात् किमिति प्रथमं दर्शनं ततो ज्ञानमिति, उच्यते, तस्य प्रबलावरणत्वात, दर्शनस्य चाल्पावरणत्वादिति, 'तथे' त्यानन्तर्ये, विचारणं पर्यालोचनं, अर्थानामिति वर्तते, ईहनमीहा तां, ब्रुवत इति सम्बन्धः, विविधोऽवसायो व्यवसायः-निर्णयस्तं व्यवसायं च, अर्थानामिति वर्तते, अपायं ब्रुवत इति संसर्गो, धृतिर्धरणं, अर्थानामिति वर्तते, परिच्छिन्नस्य वस्तुनः अविच्युतिस्मृतिवासनारूपं, तद्धरणं पुनर्धारणां, ब्रुवत इत्यनेन शास्त्रपारतन्त्र्यमाह, इत्थं तीर्थकरगणधरा ब्रुवते, अन्ये त्वेवं पठन्ति '**अत्थाणं उग्गहणम्मि उग्गहो**' इत्यादि, अत्राप्यर्थानामवग्रहणे सत्यवग्रहो नाम मतिविशेष इत्येवं ब्रुवते, एवमीहादिष्वपि योज्यं, भावार्थस्तु पूर्ववदिति गाथार्थः॥ इदानीमभिहितस्वरूपाणामवग्रहादीनां कालप्रमाणमभिधित्सुराह—

उग्गहो० गाहा ॥(*७७-१८४)॥ इहाभिहितलक्षणोऽर्थावग्रहो यो जघन्यो-नैश्चयिकः स खल्वेकं समयं, भवतीति सम्बन्धः,

तत्र कालः परमनिकृष्टः समयोऽभिधीयते, स च प्रवचनप्रतिपादितोत्पलपत्रशतव्यतिभेदोदाहरणाज्जीर्णपट्टशाटिकापाटनदृष्टान्ताच्चावसेय इति, तथा सांव्यवहारिकार्थावग्रहव्यञ्जनावग्रहौ तु पृथक् पृथगन्तर्मुहूर्त्तकालं भवत इति ज्ञातव्यौ, ईहा चापायश्चेहापायौ, प्राकृतशैल्या बहुवचनं, उक्तं च-"बहुवयणेण दुवयणं छट्ठिविभत्तीइ भण्णइ चउत्थी । जह हत्था तह पाया नमोऽत्थु देवाहिदेवाणं ॥ १ ॥" तावीहापायौ मुहूर्त्तार्द्धं ज्ञातव्यौ भवतः, तत्र मुहूर्त्तशब्देन घटिकाद्वयपरिमाणः कालोऽभिधीयते, तस्यार्द्धं मुहूर्त्तार्द्धं, तु-शब्दो विशेषणार्थः, किं विशिनष्टि ?, व्यवहारापेक्षयैतन्मुहूर्त्तार्द्धमुक्तं, तत्त्वतस्त्वन्तर्मुहूर्त्तमवसेयमिति, अन्ये त्वेवं पठन्ति--"मुहुत्तमंतं तु" मुहूर्त्तान्तस्तु, द्वे पदे, अयमर्थः—अन्तर्मध्यकरणे, तुशब्द एवकारार्थः, स चावधारणे, एतदुक्तं भवति-ईहापायौ मुहूर्त्तान्तः, भिन्नं मुहूर्त्तं ज्ञातव्यौ भवतः, अन्तर्मुहूर्त्तमेवेत्यर्थः, कलनं कालः तं कालं, न विद्यते संख्यायन्ते इयन्तः पक्षमासर्त्वयनसंवत्सरादय इत्येवंभूता संख्या यस्यासावसंख्येयः, पल्योपमादिलक्षण इत्यर्थः, तं कालमसंख्यं, तथा संख्यायत इति संख्यः--इयन्तः पक्षमासर्त्वयनादय इत्येवं, संख्येय प्रमित इत्यर्थः, तं संख्यं, चशब्दादन्तर्मुहूर्त्तं च, धारणाऽभिहितलक्षणा भवति ज्ञातव्या, अयमत्र भावार्थः-अपायोत्तरकालमविच्युतिरूपाऽन्तर्मुहूर्त्तं भवत्येव, स्मृतिरूपाऽपि, वासनारूपा तु तदावरणक्षयोपशमाख्या स्मृतिधारणायाः बीजभूता संख्येयवर्षायुषां सत्त्वानां संख्येयकालं असंखयेयवर्षायुषां पल्योपमादिजीविनां चासंख्येयमिति गाथार्थः ॥

इत्थमवग्रहादीनां स्वरूपमभिधायेदानीं श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयतां प्रतिपिपादयिषुराह—

पुट्ठं सुणेइ०गाहा ॥ (*७८--१८४ ) ॥ तत्र स्पृष्टमित्यालिङ्गितं, तनौ रेणुवत्, शृणोति-गृह्णाति, किं?, शब्दं-शब्दद्रव्यसंघातं, कुतः ?, तस्य सूक्ष्मत्वाद्भावुकत्वात् प्रचुरद्रव्याकुलत्वाच्छोत्रेन्द्रियस्यान्येन्द्रियग्रहणात् प्रायः पटुतरत्वात् १, रूप्यत इति रूपं तद्रूपं

पुनः पश्यति--गृह्णाति, अस्पृष्टम्-अनालिंगितमसंबद्धमित्यर्थः, पुनःशब्दो विशेषणार्थः, तुशब्दस्त्वेवकारार्थः, ततश्चायमर्थः-अस्पृष्टमेव पश्यति, पुनःशब्दादस्पृष्टमपि योग्यदेशावस्थितं, नायोग्यदेशावस्थितमधोलोकादि, कुतः?, अप्राप्तकारित्वात् परिमितदेशस्थविषयग्राहित्वाच्चक्षुप इति २, घ्रायत इति गन्धस्तं ३, रस्यत इति रसस्तं च, स्पृश्यत इति स्पर्शस्तं, चशब्दौ पूरणसमुच्चयार्थौ, 'बद्धस्पृष्टमिति' बद्धम्-आश्लिष्टं तोयवदात्मप्रदेशैरात्मीकृतमित्यर्थः, स्पृष्टं पूर्ववत् , प्राकृतशैल्या चेत्थमुपन्यासो 'बद्धपुट्ठं' ति, अर्थतस्तु स्पृष्टं च बद्धं च स्पृष्टबद्धमिति विज्ञेयं, आलिंगितानन्तरमात्मप्रदेशैरागृहीतमित्यर्थः, गन्धादिः, स्तोकद्रव्यत्वादभावुकत्वाद् घ्राणादीनां चापटुत्वाद्विनिश्चिनोतीत्येव व्यागृणीयादिति गाथार्थः ॥ इह स्पृष्टं शृणोति शब्दमित्युक्तं, तत्र किं शब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि गृह्णात्युतान्यानि तद्भावितानि आहोस्वित् मिश्राणीति चोदकाभिप्रायमाशंक्य न तावत् केवलानि, तेषां वासकत्वात्तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, किन्तु मिश्राणि तद्वासितानि वा गृह्णातीति, अमुमर्थमभिधित्सुराह—

भासा०गाहा ॥(*७९-१८४)॥ भाष्यत इति भाषा, वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः, तस्याः समश्रेणयो भाषासमश्रेणयः, समग्रहणं विश्रेणीव्यवच्छेदार्थं, इह श्रेणयः क्षेत्रप्रदेशश्रेणयोऽभिधीयन्ते, ताश्च सर्वस्यैव भाषमाणस्य षट्सु दिक्षु विद्यन्ते, यासूत्सृष्टा सति भाषाऽऽद्यसमय एव लोकान्तमनुधावतीति, ता इतो- भाषासमश्रेणीतः, इतो गतः प्राप्तः स्थित इत्यनर्थान्तरं, एतदुक्तं भवति- भाषासमश्रेणिव्यवस्थित इति, शब्द्यतेऽनेनेति शब्दः-भाषात्वेन परिणतः पुद्गलराशिः तं शब्दं, यं पुरुषाश्वादिसम्बन्धिनं शृणोति-गृह्णाति उपलभत इति पर्यायाः, यत्तदोर्नित्यसम्बन्धात्तं मिश्रं शृणोति, एतदुक्तं भवति- उत्सृष्टद्रव्यभावितापान्तरालस्थशब्दद्रव्यामिश्रमिति, विश्रेणिं पुनरित इति वर्तते, ततश्चायमर्थो भवति- विश्रेणिव्यवस्थितः पुनः श्रोता शब्दं

शृणोति नियमेन पराघाते सति, यानि शब्दद्रव्याण्युत्सृष्टद्रव्याभिघाते वासितानि तान्येव, न पुनरुत्सृष्टानीति भावार्थः, कुतः?,
तेषां अनुश्रेणिगमनात् प्रतिघाताभावाच्च, अथवा विश्रेणिस्थित एव विश्रेणिरभिधीयते, पदेऽपि पदावयवप्रयोगदर्शनाद्भीमसेनः
सेनः सत्यभामा भामेति यथेति गाथार्थः ॥ साम्प्रतं विनेयगणसुखप्रतिपत्तये मतिज्ञानपर्यायशब्दानभिधित्सुराह—

ईहा०गाहा ॥(*८०-१८४)॥ ईहनमीहा, सदर्थपर्यालोचनचेष्टेत्यर्थः, अपोहनमपोहो, निश्चय इत्यर्थः, विमर्षणं विमर्षः, ईहा-
पायमध्यवर्त्ती प्रत्ययः, तथाऽन्वयधर्मान्वेषणा मार्गणा, चः समुच्चयार्थः, व्यतिरेकधर्मालोचना गवेषणा, तथा संज्ञानं संज्ञा-
व्यंजनावग्रहोत्तरकालभावी मतिविशेष इत्यर्थः, स्मरणं स्मृतिः, पूर्वानुभूतार्थालम्बनप्रत्ययः, मननं मतिः-कथंचिदर्थपरिच्छित्ता-
वपि सूक्ष्मधर्मालोचनरूपा बुद्धिरित्यर्थः, तथा प्रज्ञानं प्रज्ञा विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथाऽवस्थितधर्मालोचनरूपा
संविदिति भावना, सर्वमिदमाभिनिबोधिकं मतिज्ञानमित्यर्थः, एवं किंचिद्भेदाद्भेदः प्रदर्शितः, तत्त्वतस्तु मतिवाचकाः सर्व एते
पर्यायशब्दा इति गाथार्थः॥ 'सेत'मित्यादि, तदेतदाभिनिबोधिकज्ञानमिति ॥ साम्प्रतं प्रागुपन्यस्तसकलचरणकरणक्रियाधारश्रुत-
ज्ञानस्वरूपजिज्ञासयाह—

'से किं त'मित्यादि ॥(३८-१८०)॥ अथ किं तत् श्रुतज्ञानं ?, श्रुतज्ञानमुपाधिभेदाच्चतुर्दशविधं प्रज्ञप्तं, तद्यथा- अक्षरश्रुतं १
अनक्षरश्रुतं २ संज्ञिश्रुतं ३ असंज्ञिश्रुतं ४ सम्यक्श्रुतं ५ मिथ्याश्रुतं ६ सादि ७ अनादि ८ सपर्यवसितं ९ अपर्यवसितं १० गमिकं
११ अगमिकं १२ अंगप्रविष्टं १३ अनंगप्रविष्टं १४, एतेषां च भेदानां स्वरूपं यथावसरं वक्ष्यामः । अक्षरश्रुतानक्षरश्रुतभेदद्वयान्त-

॥ ७५ ॥

र्भावेऽपि शेषभेदानामुपन्यासोऽज्ञातज्ञापनार्थः, न च भेदद्वयादेवाव्युत्पन्नमतीनां शेषभेदावगम इति प्रतीतमेतद् , अलं विस्तरेण ॥ साम्प्रतमुपन्यस्तश्रुतभेदानां स्वरूपमनवगच्छन्नाद्यं भेदमधिकृत्य प्रश्नसूत्रमाह—

'से किं त' मित्यादि ॥(३९-१८७)॥ अथ किं तदक्षरश्रुतं, 'क्षर संचलने' न क्षरतीत्यक्षरं, तच्च ज्ञानं चेतनेत्यर्थः, जीवस्वाभाव्यादनुपयोगेऽपि तत्त्वतो न प्रच्यवत इत्यर्थः, इत्थंभूतभावाक्षरकार्यकारणत्वादकाराद्यप्यक्षरमुच्यते, तत्राक्षरात्मकं श्रुतमक्षरश्रुतं-द्रव्याक्षराण्यधिकृत्य, अथवाऽक्षरं च तत् श्रुतं चाक्षरश्रुतं, भावाक्षरमधिकृत्य, इदमक्षरश्रुतं त्रिविधं प्रज्ञप्तं, अक्षरस्यैव त्रिभेदत्वात्, त्रिभेदतामेव दर्शयन्नाह- संज्ञाक्षरं १ व्यंजनाक्षरं २ लब्ध्यक्षरं ३, 'से किं त'मित्यादि अथ किं तत् संज्ञाक्षरं ?, संज्ञानं संज्ञा, संज्ञायते वा अनयेति संज्ञा, तन्निबन्धनमक्षरं संज्ञाक्षरं, इदं च अक्षरस्य अकारादेः संस्थानस्याकृतिः संस्थानाकारो, यतस्तन्निबन्धनैवैतेष्वकारादिसंज्ञा प्रवर्त्तते इति, एतच्च ब्राह्म्यादिलिपीविधानादनेकविधं, 'सेत्तं सन्नक्खरं' तदेतत् संज्ञाक्षरं ॥

'से किं त' मित्यादि, अथ किं तद् व्यञ्जनाक्षरं ?, व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं तच्च तदक्षरं च व्यञ्जनाक्षरं, तच्चेह सर्वमेव भाष्यमाणमकारादि हकारान्तं, अर्थाभिव्यञ्जकत्वाच्छब्दस्य, तथा चाह सूत्रकारः-अक्षरस्याकारादेः व्यञ्जनाभिलापः शब्दोच्चारणं, 'से त' मित्यादि, तदेतद्व्यञ्जनाक्षरम् ॥

'से किं त' मित्यादि, अथ किं तल्लब्ध्यक्षरं ?, लब्धिः-क्षयोपशमः उपयोग इत्यर्थः, 'अक्खरलद्धीयस्स' इत्यादि, इहाक्षरे लब्धिर्यस्य सोऽक्षरलब्धिकस्तस्य, इन्द्रियमनउभयविज्ञानसमुत्थघटाद्यक्षरलब्धिसमन्वितस्येत्यर्थः, अनेन विकलेन्द्रियादिव्यवच्छेद-

माह, लब्ध्यक्षरं समुत्पद्यते, कुतश्चिच्छब्दादेर्निमित्तात् सञ्जाततदावरणकर्मक्षयोपशमस्य लब्ध्यक्षरं समुत्पद्यते–अक्षरोपलम्भः सञ्जायते, एतदुक्तं भवति–शब्दादिग्रहणसमनन्तरमिन्द्रियमनोनिमित्तं श्रुतग्रन्थानुसारि शाङ्ख इत्याद्यक्षरानुषक्तं विज्ञानमुत्पद्यते, तच्चानेकप्रकारं, तद्यथा-श्रोत्रेन्द्रियलब्ध्यक्षरमित्यादि, इह श्रोत्रेन्द्रियेण शब्दश्रवणे सति शाङ्खोऽयमित्याद्यक्षरद्वयलाभः श्रोत्रेन्द्रियनिमित्तत्वाच्छोत्रेन्द्रियलब्ध्यक्षरामिति, एवं शेषेष्वपि भावनीयं, 'से त' मित्यादि, तदेतल्लब्ध्यक्षरं, 'से त' मित्यादि, तदेतदक्षरात्मकं अक्षरं च तदिति वा श्रुतं चाक्षरश्रुतं, तत्र संज्ञाव्यञ्जनाक्षरे द्रव्यश्रुतं, लब्ध्यक्षरं पुनर्भावश्रुतं, लब्धेर्विज्ञानरूपत्वात् ॥ 'से किं त' मित्यादि, अथ किं तदनक्षरश्रुतम् ?, २ अनक्षरः शब्दः कारणं कार्यमनक्षरश्रुतं अनेकविधम्–अनेकप्रकारं प्रज्ञप्तम्, तद्यथा—

ऊससियं०गाहा ॥ ( * ८१-१८७ ) ॥ उच्छ्वसनमुच्छ्वसितं, भावे निष्ठाप्रत्ययः, तथा निःश्वसनं निःश्वसितं, निष्ठीवनं निष्ठ्यूतं, कासनं कासितं, चशब्दः समुच्चयार्थः, क्षवणं क्षुतं, चशब्दः समुच्चयार्थ एव, अस्य व्यवहितः सम्बन्धः, कथं?, सेंटितं चानक्षरं श्रुतमिति वक्ष्यामः,निःसङ्घनं निःसङ्घितं, अनुस्वारवदनुस्वारं, अक्षरमपि यदनुस्वारवदुच्चार्यते, 'अनक्षर'मित्येतदुच्छ्वसिताद्यनक्षरश्रुतमिति, सेण्टनं सेंटितं तत् सेंटितं चानक्षरश्रुतमिति, इदं चोच्छ्वसितादि द्रव्यश्रुतमात्रं ध्वनिमात्रत्वात्, अथवा श्रुतविज्ञानोपयुक्तस्य जन्तोः सर्व एव व्यापारः श्रुतं, तस्य तद्भावेन परिणतत्वात्, आह-यद्येवं किमित्युपयुक्तस्य चेष्टाऽपि श्रुतं नोच्यते, येनोच्छ्वसिताद्येवोच्यते इति, अत्रोच्यते, रूढ्या, अथवा श्रूयत इति श्रुतं, अन्वर्थसंज्ञामधिकृत्योच्छ्वसिताद्येव श्रुतमुच्यते न चेष्टा, तदभावादिति, अनुस्वारादयस्त्वर्थगमकत्वादेव श्रुतमिति, 'से त' मित्यादि, तदेतदनक्षरश्रुतम् ।

'से किं त'मित्यादि, ॥ (४०-१८९) ॥ अथ किं तत् संज्ञिश्रुतं?, संज्ञानं संज्ञा, संज्ञाऽस्यास्तीति संज्ञी तस्य श्रुतं २ त्रिविधं प्रज्ञप्तं, संज्ञिन एव त्रिभेदत्वात्, त्रिभेदतामेव दर्शयन्नाह-तद्यथा-कालिक्युपदेशेन हेतूपदेशेन दृष्टिवादोपदेशेन. 'से किं त'मित्यादि, अथ कोऽयं कालिक्युपदेशेन, इहादिपदलोपाद्दीर्घकालिकी कालिक्युच्यते, संज्ञेति प्रकरणाद्गम्यते, उपदेशनमुपदेशः, कथनमित्यर्थः, दीर्घकालिक्याः सम्बन्धी दीर्घकालिक्या वा मतेनोपदेशो दीर्घकालिक्युपदेशस्तेन यस्य प्राणिनः अस्ति-विद्यते ईहा-शब्दाद्यवग्रहणोत्तरकालमन्वयव्यतिरेकधर्मालोचनचेष्टेत्यर्थः, तथा अपोहो-व्यतिरेकधर्मपरित्यागेनान्वयधर्माध्यासेनावधारणात्मकः प्रत्यय इति भावना, यथा शब्द इति, तथा मार्गणा विशेषधर्मान्वेषणारूपा संविदित्यर्थः, यथा शब्दः सन् किं शाङ्खः किं वा शार्ङ्ग इति, तथा गवेषणा व्यतिरेकधर्मस्वरूपालोचना, यथा खराद्य एवंभूता इति, तथा चिन्ता अन्वयधर्मपरिज्ञानाभिमुखा चेष्टा, यथा मधुरत्वादयस्त्वेवंभूता इति, तथा विमर्षः त्याज्यधर्मपरित्यागेनोपादेयधर्मग्रहणाभिमुख्यं, यथा न शार्ङ्गः, प्रायोऽयं मधुरत्वादियोगाच्छाङ्ख इति, 'से णं सन्नीति लब्भति'त्ति स प्राणी णमिति वाक्यालङ्कारे संज्ञीति लभ्यते, मनःपर्याप्त्या पर्याप्तोऽवग्रहादिमतिज्ञानसम्पत्समन्वित इत्यर्थः, अथवा यस्यास्ति ईहा--किमेतदिति चेष्टा इदमित्यवगमोऽपोहः अवगतार्थाभिलाषे तत्प्रार्थना मार्गणा तदप्राप्तौ च निपुणोपायतोऽन्वेषणं गवेषणा प्रयुक्तप्रतिहतोपायस्योपायान्तरचिन्तनं चिन्ता तद्विषय एवोपायालोचनात्मकः प्रत्ययो विमर्षः स संज्ञीतिलभ्यते, अयं च गर्भव्युत्क्रान्तिकः पुरुषादिरौपपातिकश्च देवादिरेव मनःपर्याप्तिप्रयुक्तो विज्ञेयः, यथोक्तविशेषणकलापसमन्वितत्वात्, न पुनरन्यस्तद्विशेषणविकल इति, आह च-'जस्से' त्यादि, यस्य नास्ति ईहाऽपोहो मार्गणा गवेषणा चिन्ता विमर्षः सोऽसंज्ञीति लभ्यते, अयं च सम्मूर्च्छिमपंचेन्द्रियविकलेन्द्रियादिर्ज्ञेयः, अल्पमनोलब्धित्वादभावाच्च, 'सेत'मित्यादि, सोऽयं कालिक्युपदेशेन ।

'से किं त'मित्यादि, अथ कोऽयं हेतूपदेशेन?, हेतुः कारणं स एव उपदेशः हेतोरुपदेशः हेतूपदेशस्तेन, कारणोपदेशेनेत्यर्थः, यस्य प्राणिनोऽस्ति-विद्यतेऽभिसन्धारणम्--अव्यक्तेन विज्ञानेनालोचनं तत्पूर्विका- तत्कारणिका करणशक्तिः- क्रियाशक्तिः, करणं-क्रिया शक्तिः- सामर्थ्यं, अव्यक्तविज्ञानालोचननिबन्धनचेष्टासामर्थ्यमिति भावना, स प्राणी णमिति वाक्यालंकारे संज्ञीति लभ्यते, अयं च द्वीन्द्रियादिः सम्मूर्च्छिमपंचेन्द्रियावसानो विज्ञेयः, तथाहि- कृम्यादयोऽपीष्टेष्वाहारादिषु प्रवर्त्तन्ते अनिष्टेभ्यश्च निवर्त्तन्ते स्वदेहपरिपालनार्थं, प्रायो वर्त्तमान एव, न चासंचिन्त्येष्टानिष्टविषयः प्रवृत्तिनिवृत्तिसम्भव इति संज्ञी, उक्तलक्षणविकलस्त्वसंज्ञी, तथा चाह-'यस्ये'त्यादि,यस्य नास्ति अभिसन्धारणपूर्विका करणशक्तिः सोऽसंज्ञीति लभ्यते, अयं चैकेन्द्रियपृथिव्यादिरवसेयो, मनोलब्धिरहितत्वाद, आह-यदि स्वल्पसंज्ञायोगाद्विकलेन्द्रियादयः संज्ञिन इष्यन्ते पृथिव्यादयः किं नेष्यन्ते ? यतस्तेषामपि दशविधाः संज्ञा विद्यन्त एव,तथा चोक्तं परमगुरुभिः-"कति णं भंते! एगिंदियाणं सन्नाओ पन्नत्ताओ?,गोयमा! दस,तंजहा-आहारसंना भयसन्ना मेहुण० परिग्गहसन्ना कोह०माण०माया०लोभ०ओहसन्ना लोगसन्ना य"त्ति उपयोगमात्रमोघसंज्ञा लोकसंज्ञा स्वच्छन्दविकल्पिता विश्वगमा लौकिकैराचरिता, तद्यथा-अनपत्यस्य न सन्ति लोका इत्यादि, अन्ये तु व्याचक्षते- ओघसंज्ञा दर्शनोपयोगो लोकसंज्ञा ज्ञानोपयोग इति, अत्रोच्यते, इहौघसंज्ञा स्तोकत्वाद् आहारादिसंज्ञाश्चानिष्टत्वान्नाधिक्रियंते, यथा न कार्षापणमात्रेण धनवानभिधीयते, मूर्त्तिमात्रेण वा रूपवानिति, किन्तु यथा प्रभूतरत्नादिसमन्वितो धनवान् प्रशस्तमूर्त्तियुक्तश्च रूपवानभिधीयते,एवं महती शोभना च संज्ञा यस्यास्त्यसौ संज्ञीति,विशिष्टतरा च विकलेन्द्रियसंज्ञेत्यलं विस्तरेण,'सेत'मित्यादि,सोऽयं हेतूपदेशेन।
'से किं त'मित्यादि, अथ कोऽयं दृष्टिवादोपदेशेन?, दृष्टिः-दर्शनं वदनं वादः दृष्टीनां वादः दृष्टिवादः तदुपदेशेन तन्मतापेक्षया

संज्ञिश्रुतस्य क्षयोपशमेन संज्ञीति लभ्यते, अयमत्र भावार्थः-संज्ञानं संज्ञा तद्योगात् संज्ञी तस्य श्रुतं संज्ञिश्रुतं, इदं सम्यक् श्रुतमेव, अन्यथा संज्ञानाभावात्, न हि मिथ्यादृष्टेः संज्ञानमस्ति, हिताहितप्रवृत्तिनिवृत्त्यभावाद्, रागादिप्रवृत्तेः, उक्तं च-"तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगणः। तमसः कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रतः स्थातुम् ? ॥१॥" सम्यग्दृष्टिस्तु तन्निग्रहपरत्वाद्वीतरागसम एव, उक्तंच- "कलुसफलेण ण जुज्जइ किं चित्तं तत्थ जं विगतराओ । संतेवि जो कसाए णिगिण्हती सोऽवि तत्तुल्लो ॥१॥" चीत्यादि, अलं प्रसंगेन, तदित्थंभूतस्य संज्ञिश्रुतस्य क्षयोपशमेन सता संज्ञीति लभ्यते, अयं च सम्यग्दृष्टिरेव क्षायोपशमिकज्ञानयुक्तो रागादिनिग्रहपरः, तदन्यस्त्वसंज्ञी, यत आह ग्रन्थकारः--असंज्ञिश्रुतस्य क्षयोपशमेनासंज्ञीति लभ्यते, 'सेत'मित्यादि, सोऽयं दृष्टिवादोपदेशेन, एवं संज्ञिनास्त्रिभेदभिन्नत्वात् श्रुतमपि तदुपाधिभेदात् त्रिविधमेवेति। अत्राह-कालिक्युपदेशेनेत्यादि क्रमःकिमर्थः?, उच्यते, इह प्रायः सूत्रे यत्र क्वचित् संज्ञिग्रहणं तत्र दीर्घकालिक्युपदेशेन समनस्कसंज्ञिपरिग्रह इति प्रथमं तदुपन्यासः, अप्रधानत्वाच्चेतरयोः अन्ते च प्रधानाभिधानमिति न्याय्यं, 'सेत'मित्यादि, तदेतत् संज्ञिश्रुतं, असंज्ञिश्रुतं तु प्रतिपक्षाभिधानादेव प्रतिपादितं, तदेतदसंज्ञिश्रुतम् ॥

'से किं त' मित्यादि ॥(४१- १९१)॥ अथ किं तत् सम्यक्श्रुतं?, यदिदं प्रणीतमिति सम्बन्धः, तत्राशोकाद्यष्टमहाप्रातिहार्यरूपां पूजामर्हन्तीत्यर्हन्तः, तथा चोक्तं-"अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासनं च। भामण्डलं दुन्दुभिरातपत्रं, सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ १ ॥" तैरर्हद्भिः, तत्र शुद्धद्रव्यास्तिकनयमतानुसारिभिःअनादिशुद्धा एव मुक्तात्मानोऽभ्युपगम्यन्ते, यथोक्तम्-"ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयं॥१॥" इत्यादि, बहवश्च कैश्चिदिष्यन्ते, तेऽपि

च स्थापनादिद्वारेण पूजाऽर्हत्वादर्हन्तो भवन्त्येव, अतो- भगवद्भिः, भगः खलु समग्रैश्वर्यादिलक्षणः, यथोक्तं-"ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः । धर्मस्याथ प्रयत्नस्य, षण्णां भग इतींगना ॥१॥" भगो विद्यते येषां ते भगवन्तः तैर्भगवद्भिः, न चानादिशुद्धानां समग्रं रूपमुपपद्यते,अशरीरित्वात्,शरीरस्य च रागादिकार्यत्वात् तेषां च तदभावादिति, स्वेच्छानिर्माणतः समग्रशरीरसम्भवातुल्यतामेवाशंक्याह-उत्पन्नज्ञानदर्शनधरैः, न च तेऽनादिशुद्धाः उत्पन्नज्ञानदर्शनधराः'ज्ञानमप्रतिघं यस्ये'त्यादिवचनविरोधात्,एवं शुद्धद्रव्यास्तिकनयमतानुसारिपरिकल्पितमुक्तव्यवच्छेदार्थोऽयं ग्रन्थः, अधुना पर्यायास्तिकनयमतानुसारिपरिकल्पितमुक्तव्यवच्छेदार्थमाह-'त्रैलोक्यनिरीक्षितमहितपूजितैः' निरीक्षिताश्च महिताश्च पूजिताश्चेति समासः, त्रैलोक्येन निरीक्षितमहितपूजिता इति विग्रहः,विशेषणसाफल्यं पुनरित्थमवसेयं-त्रैलोक्यग्रहणाद् भवनव्यन्तरनरविद्याधरज्योतिष्कवैमानिकपरिग्रहः,निरीक्षिता भक्तिनम्रैर्मनोरथदृष्टिभिर्दृष्टाः, महिता यथाऽवस्थितान्यासाधारणगुणोत्कीर्त्तनलक्षणेन भावस्तवेन, पूजिताः सुगन्धिपुष्पप्रकरप्रक्षेपादिना द्रव्यस्तवेनेति, तत्र सुगतादयोऽपि पर्यायास्तिकनयमतानुसारिभिस्त्रैलोक्यनिरीक्षितमहितपूजिता इष्यन्त एव, आह च स्तुतिकारः—"देवागमनभोयानचामरादिविभूतयः । मायाविष्वपि दृश्यन्ते, नातस्त्वमसि नो महान् ॥१॥" इत्यादि, अत आह-'अतीतप्रत्युत्पन्नानागतज्ञैः' न चैकान्तक्षणिकवादिनां यथोक्तविशेषणसम्भवः, अतीतानागताभावात्, तथा चागमः, "ण णिहाणगया भग्गा पुंजो णत्थि अणागते । णिव्वुया णेव चिट्ठंति आरग्गे सरिसोवमा ॥१॥" असतां च ग्रहणायोगादित्याद्यत्र बहु वक्तव्यं, न च तदुच्यते, गमनिकामात्रत्वादस्य प्रारम्भस्य, व्यवहारनयमतानुसारिभिस्तु कैश्चिदतीतानागतार्थग्राहिण इष्यन्त एव ऋषयः, यथाऽऽहुरेके- "ऋषयः संयतात्मानः, फलमूलानिलाशनाः । तपसैव प्रपश्यन्ति, त्रैलोक्यं सचराचरम् ॥ १ ॥ अतीतानागतान् भावान्,

वर्त्तमानांश्च भारत! । ज्ञानालोकेन पश्यन्ति, त्यक्तसंगा जितेन्द्रिया ॥२॥" इत्यादि, अत आह-'सर्वज्ञैः सर्वदर्शिभिः' ते तु सर्वज्ञा न भवन्तीत्यभिप्रायः, एवं प्रधानोभयनयमतानुसारिपरिकल्पितमुक्तव्यवच्छेदेनेदं नीयते, अन्यथा वाऽविरोधेन नेतव्यमिति, प्रणीतम्-अर्थकथनद्वारेण प्ररूपितं, किं तद्?-द्वादशांगं, श्रुतपरमपुरुषोत्तमस्यांगानीवांगानि द्वादश अंगानि- आचारादीनि यस्मिँस्तद् द्वादशांगं, गुणगणोऽस्यास्तीति गणी-आचार्यस्तस्य पिटकं- सर्वस्वं गणिपिटकम् , अथवा गणिशब्दः परिच्छेदवचनः, तथा चोक्तम्-"आयारम्मि अहीए जं णातो होइ समणधम्मो उ। तम्हा आयारधरो भन्नति पढमं गणिट्ठाणं ॥१॥" परिच्छेदस्थानमित्यर्थः, ततश्च परिच्छेदसमूहो गणिपिटकं, तद्यथा-आचार इत्यादि, पाठसिद्धं यावद् दृष्टिवादः। अनंगप्रविष्टमावश्यकादि, ततोऽर्हत्प्रणीतत्वात् वस्तुत उक्तत्वादनुक्तमपि गृह्यते, इदं सर्वमेव द्रव्यास्तिकनयमतेन तदभिधेयपंचास्तिकायभाववन्नित्यं सत् स्वाम्यसम्बन्धचिन्तायां सूत्रार्थोभयरूपं सम्यक्श्रुतमेव भवति, स्वामिसम्बन्धचिन्तायां तु भाज्यं, स्वामिपरिणामविशेषात् , कदाचित् सम्यक्श्रुतं कदाचिद्विपर्ययः, तत्र सम्यग्दृष्टेः प्रशमादिसम्यक्परिणामोपेतत्वात् स्वरूपेण प्रतिभासनात् सम्यक्श्रुतं, पित्तोदयानभिभूतस्य शर्करादिरिवेति, मिथ्यादृष्टेः पुनरप्रशमादिमिथ्यापरिणामोपेतत्वाद्वस्तुनः स्वरूपेणाप्रतिभासनान्मिथ्याश्रुतं, पित्तोदयाभिभूतस्याशर्करादिवदिति, देशतो दृष्टान्तः, अशर्करादित्वं च तं प्रति तत्कार्याकरणात्, तथाऽप्यभ्युपगमे चातिप्रसंगादित्यलं प्रसंगेन ॥ श्रुतप्रमाणत एव सम्यक्परिणामनियमनायाह—

'इच्चेइ'मित्यादि, इत्येतद् द्वादशांगं गणिपिटकं चतुर्दशपूर्विणः सम्यक्श्रुतमेव, तथा अभिन्नदशपूर्विणोऽपि सम्यक्श्रुतमेव, 'तेण परं भिन्नेसु(दससु)भयणा' त्ति पश्चानुपूर्व्या ततः परं भिन्नेषु दशसु भजना--कदाचित् सम्यक्श्रुतं कदाचिन्मिथ्याश्रुतं,

परिणामविशेषाद्, एतदुक्तं भवति-आसन्नभव्योऽपि मिथ्यादृष्टिः सम्पूर्णदशपूर्वरत्ननिधानं न प्राप्नोति, मिथ्यात्वपरिणामकलंकितत्वाद्दारिद्र्यनिबन्धनपापकलंकांकितपुरुषवच्चितामाणिमिति, 'सेत'मित्यादि तदेतत् सम्यक्श्रुतम् ॥

'से किं त'मित्यादि ॥(४२-१९४)॥ अथ किं तन्मिथ्याश्रुतं?, २ यदिदमज्ञानिकैः, तत्राल्पज्ञानभावादधनवदशीलवद्वा सम्यग्दृष्टयोऽप्यज्ञानिकाः प्रोच्यन्ते अत आह-मिथ्यादृष्टिभिः, किं?-स्वच्छन्दबुद्धिमतिविकल्पितं, इहावग्रहेहे बुद्धिः, अपायधारणे मतिः, स्वच्छन्देन-स्वाभिप्रायेण स्वतः, सर्वज्ञप्रणीतार्थानुसारमन्तरेण बुद्धिमतिभ्यां विकल्पितं स्वच्छन्दबुद्धिमतिविकल्पितं, स्वबुद्धिकल्पनाशिल्पनिर्मितमित्यर्थः, तद्यथा 'भारत'मित्यादि सूत्रसिद्धं, यावच्चत्वारश्च वेदास्सांगोपांगाः, एतानि स्वरूपतोऽन्यथावस्त्वभिधानान्मिथ्याश्रुतमेव, स्वामिसम्बन्धचिन्तायां तु भाज्यानि, तथा चाह-मिथ्यादृष्टेर्मिथ्यात्वपरिगृहीतानि विपरीताभिनिवेशहेतुत्वान्मिथ्याश्रुतं, एतान्येव सम्यग्दृष्टेः सम्यक्त्वपरिगृहीतानि असारतादर्शनेन स्थिरतरसम्यक्त्वपरिणामहेतुत्वात् सम्यक्श्रुतं, अथवा मिच्छद्दिट्ठिस्सावि सम्यक्श्रुतमित्यादि, अथवा मिथ्यादृष्टेरप्येतानि सम्यक्श्रुतं, कस्मात्?, सम्यक्त्वहेतुत्वात्, तथा चाह-'जम्हा ते मिच्छादिट्ठीया' इत्यादि, यस्मात्ते मिथ्यादृष्टयः 'तेहिं चेव समयेहिं चोदिता समाण' त्ति तैरेव समयैः-सिद्धान्तैः पूर्वापरविरोधद्वारेण यद्यतीन्द्रियार्थदर्शनं स्यात् कथंचिदर्थप्रतिपत्तिरित्यादिना चोदिताः सन्तः केचन विवेकिनः सत्यक्याद्य इव, किं?, 'सपक्खदिट्ठीओ वमेंति' स्वपक्षदृष्टीस्त्यजन्तीत्यर्थः 'सेत्त'मित्यादि, तदेतत् मिथ्याश्रुतं। 'से किं त'मित्यादि, सादि सपर्यवसितं अनाद्यपर्यवसितं चाधिकारवशाद्युगपदुच्यते, अथ किं तत् सादि?, सह आदिना वर्तत इति सादि इत्येतद् द्वादशांगं गणिपिटकं व्यवच्छित्तिप्रतिपादनपरो नयः व्यवच्छित्तिनयः, पर्यायास्तिक इत्यर्थः, तस्यार्थो व्यवच्छित्तिनयार्थः, तद्भावो व्यवच्छित्ति-

नयार्थता तया व्यवच्छित्तिनयार्थभावेन, पर्यायापेक्षयेत्यर्थः, किं ?, सादि सपर्यसितं, पर्यवसानं पर्यसितं, भावे निष्ठाप्रत्ययः, सह पर्यवसानेन सपर्यवसितं, नारकादिभावापेक्षया एव जीव इति, तथा अव्यवच्छित्तिप्रतिपादनपरो नयः अव्यवच्छित्तिनयः,द्रव्यास्तिकनय इत्यर्थ, तस्यार्थोऽव्यवच्छित्तिनयार्थस्तद्भावः अव्यवच्छित्तिनयार्थता तया अव्यवच्छित्तिनयार्थभावेन, द्रव्यापेक्षयेत्यर्थः, किं?, अनादि अपर्यसितं, त्रिकालावस्थायित्वात् जीववत् ॥ अधिकृतमेवार्थं द्रव्यादिचतुष्टयमधिकृत्य प्रतिपादयन्नाह-'**तं समासतो**' इत्यादि, तच्छ्रुज्ञानं **समासतः** संक्षेपेण चतुर्विधं प्रज्ञप्तं, तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतः, तत्र द्रव्यतः णमिति वाक्यालंकारे सम्यक्श्रुतं एकं पुरुषं प्रतीत्य सादिसपर्यसितं, कथं ?, सम्यक्त्वावाप्तौ तत्प्रथमपाठतो वा सादि, पुनर्मिथ्यात्वप्राप्तौ सति वा सम्यक्त्वे प्रमादिग्लानिसुरलोकगमनकेवलोत्पत्तिभावात् सपर्यवसितं, बहून् पुरुषान् प्रतीत्य अनाद्यपर्यवसितं, सन्तानेन प्रवत्तत्वात् पुरुषत्ववत्, तथा क्षेत्रतः पंच भरतानि पंच एरवतानि प्रतीत्य सादि सपर्यसितं, कथं ?, तेषु सुषमदुष्षमादिकाले तीर्थकरधर्मसंघानां तत्प्रथमतयोत्पत्तेः सादि, एकान्तदुष्षमादिकाले च तदभावे सपर्यवसितं, तथा महाविदेहादि प्रतीत्य प्रवाहरूपेण तीर्थकरादीनामव्यवच्छित्तेरनाद्यपर्यवसितं, कालतः णमिति वाक्यालंकारे अवसर्पिणीं उत्सर्पिणीं च प्रतीत्य सादि सपर्यसितं, कथं ?, यतोऽवसर्पिण्यां तिसृष्वेव सुषमदुष्षमादुष्षमसुषमादुष्षमास्विति, उत्सर्पिण्यां द्वयोः दुष्षमासुषमासुषमदुष्षमयोरिति, न परतः, इत्यतः सादि सपर्यवसितं, अत्र कालचक्रं विंशतिसागरोपमकोटीकोटिपरिमाणं विनेयजनानुग्रहार्थं प्ररूप्यते—

चत्तारि सागरोवमकोडाकोडीउ संततीए उ। एगंत सुसमा खलु जिणेहिं सव्वेहिं णिद्दिट्ठा ॥१॥ तीए पुरिसाणमाउं तिण्णि उ पलियाइं तह पमाणं च। तिन्नेव गाउयाइं आदीए भणंति समयण्णू ॥ २ ॥ उवभोगपरीभोगा जम्मंतरसुकयबीयजातातो।

कप्पतरुसमूहाओ होंति किलेसं विणा तेसिं ॥ ३ ॥ ते पुण दसप्पगारा कप्पतरु समणसमयकेतूहिं । धीरेहि विणिद्दिट्ठा मणोरहापूरगा एए ॥ ४ ॥ मत्तंगया १ य भिंगा २ तुडियंगा ३ दीव ४ जोति ५ चित्तंगा ६ । चित्तरसा ७ मणियंगा ८ गेहागारा ९ अणियणा १० य ॥ ५ ॥ मत्तंगएसु मज्जं सुहपेज्जं भायणाणि भिंगेसु । तुडियंगेसु य संगयतुडियाणि बहुप्पगाराणि ॥ ६ ॥ दीवसिहा जोतिसणामया य णिच्चं करिंति उज्जोयं । चित्तंगेसु य मल्लं चित्तरसा भोयणट्ठाए ॥ ७ ॥ मणियंगेसु य भूसणवराणि भवणाणि भवणरुक्खेसुं । आयन्नेसु य इच्छियवत्थाणि बहुप्पगाराणि ॥ ८ ॥ एएसु य अन्नेसु य नरनारिगणाण ताणमुवभोगो । भवियपुणब्भवरहिया इय सव्वन्नू जिणा बिंति ॥ ९ ॥ तो तिन्नि सागरोवमकोडाकोडी उ वीयरागेहिं । सुसमत्ति समक्खाया पवाहरूवेण धीरेहिं ॥ १० ॥ तीए पुरिसाणमायुं दोण्णि य पलियाइं तह पमाणं च । दो चेव गाउयाइं आईए भणंति समयन्नू ॥ ११ ॥ उवभोगपरीभोगा तेसिंपि य कप्पपादवेहिंतो । होंति किलेसेण विणा नवरं ऊणाऽणुभावेहिं ॥ १२ ॥ तो सुसमदूसमाए पवाहरूवेण कोडिकोडीओ । अयराण दोण्णि सिट्ठा जिणेहिं जियरागदोसेहिं ॥ १३ ॥ तीए पुरिसाणमाउं एगं पलियं तहा पमाणं च । एगं च गाउयं तीइ आदीए भणंति समयण्णू ॥ १४ ॥ उवभोगपरीभोगा तेसिंपि य कप्पपादवेहिंतो । होंति किलेसेण विणा पायं ऊणाऽणुभावेहिं ॥ १५ ॥ सूसमदुसमावसेसे पढमजिणो धम्मणायगो भयवं । उप्पन्नो कयपुन्नो सिप्पकलादंसगो उसहो ॥ १६ ॥ तो दुसमसुस्समूणा बायालीसाए वरिससहसेहिं । सागरकोडाकोडी एगेव जिणेहि पण्णत्ता ॥ १७ ॥ तीए पुरिसाणमायुं पुव्वपमाणेण तह पमाणं च । धणुसंखानिद्दिट्ठं विसेससुत्ताओ णायव्वं ॥ १८ ॥ उवभोगा परीभोगा पवरोसहिमाइएहिं विण्णेया । जिणचक्किवासुदेवा सव्वे य इमीए वोलीणा ॥ १९ ॥ इगवीससहस्साइं वासाणं दूसमा इमीए य । जेत्तिय माणुवभोगादीया व

दीसंति हायंता ॥ २० ॥ एत्तो उ किलिट्ठतरा जीतपमाणादिएहिं निद्दिट्ठा । अतिदूसमत्ति घोरा वाससहस्साइं इगवीसं ॥ २१ ॥ ओसप्पिणीए एसो कालविभागो जिणेहिं निद्दिट्ठो । एसोच्चिय पडिलोमं विन्नेयुस्सप्पिणीएवि ॥ २२ ॥ एतं तु कालचक्कं सिस्सजणाणुग्गहट्ठया भणियं । संखेवेण महत्थो विसेससुत्ताओ णायव्वो ॥ २३ ॥ 'णोउस्सप्पिणी' मित्यादि, नोउत्सर्पिणीमवसर्पिणीं च प्रतीत्य अनाद्यपर्यवसितं, महाविदेहेष्वेव कालस्यावस्थितत्वादिति भावः, भावतः णामिति पूर्ववत् 'य' इत्यनिर्दिष्टनिर्देशे ये केचन यदा पूर्वाह्लादौ जिनैः प्रज्ञप्ता २ भावाः पदार्थाः 'आघविज्जंति' त्ति प्राकृतशैल्या आख्यायन्ते, सामान्यविशेषाभ्यां कथ्यन्त इत्यर्थः, प्रज्ञाप्यन्ते नामादिभेदाभिधानेन, प्ररूप्यन्ते नामादिस्वरूपकथनेन, यथा 'पर्यायानभिधेय' मित्यादि, दर्श्यन्ते उपमानमात्रतः यथा गौस्तथा गवय इत्यादि, निदर्श्यन्ते हेतुदृष्टान्तोपन्यासेन, उपदर्श्यन्ते उपनयनिगमनाभ्यामिति, सकलनयाभिप्रायतो वा तान् भावान् तदा तत्कालापेक्षया प्रतीत्य सादि सपर्यवसितं, एतदुक्तं भवति-प्रज्ञापकोपयोगस्वरप्रयत्नासनविशेषतः प्रतिक्षणमन्यथा चान्यथा चावस्थितेः सादि सपर्यवसितं, तथा चोक्तम्- "उवयोगसरपयत्ताआसणभेदादिया य पतिसमयं । भिन्ना पन्नवगस्सा सादिसपज्जन्तगं तम्हा ॥ १ ॥" अथवा प्रज्ञापनीयभावापेक्षया गतिस्थितिद्व्यणुकाद्येकप्रदेशाद्यवगाहैकादिसमयस्थित्येकवर्णादिप्रतिपादनात् सादिसपर्यवसितं, क्षायोपशमिकभावापेक्षया पुनरनाद्यपर्यवसितं, प्रवाहरूपेण तस्यानाद्यपर्यवसितत्वात्, अथवाऽत्र चतुर्भंगिका सादि पर्यवसितं १ सादि अपर्यवसितं २ अनादिसपर्यवसितं ३ अनादिअपर्यवसितं ४, तत्र प्रथमभंगकप्रदर्शनायाह- 'भवसिद्धियस्स' इत्यादि, भवसिद्धिको-भव्यस्तस्य श्रुतं सम्यक्श्रुतं सादि सपर्यसितं, उपयोगाद्यपेक्षया भावितमेव, द्वितीयभंगस्तु शून्यः, प्ररूपणामात्रतो वा अभव्यस्य, वर्त्तमानकालापेक्षया अनागताद्धामाधिकृत्य मिथ्याश्रुत-

मिति, तृतीयभंगस्तु सम्यक्त्वाप्तौ भव्यस्य मिथ्याश्रुतं,चतुर्थं भंगं पुनरुपदर्शयन्नाह--'अभव'इत्यादि,अभवसिद्धिकः-अभव्यस्तस्य श्रुतं मिथ्याश्रुतं अनाद्यपर्यवसितं,तस्य सदैव संसारवर्चित्वात्। इह च श्रुतस्योपक्रान्तत्वात् तृतीयचतुर्थभंगकद्वये अनादिश्रुतभाव उक्तोऽन्यथा मतेरप्ययमेव द्रष्टव्यः,मतिश्रुतयोरन्योऽन्यानुगतत्वात्, अत्राह-सोऽनादिज्ञानभावः किं जघन्य उत विमध्यम, आहोश्विदुत्कृष्ट इति, अत्रोच्यते,जघन्यो विमध्यमो वा,न तूत्कृष्टः,कथं?,यतस्तस्येदं प्रमाणं'सव्वागासपदेसग्ग'मित्यादि,सर्वं च तदाकाशं च सर्वाकाशं, लोकालोकाकाशमित्यर्थः, तस्य प्रदेशाः, प्रकृष्टा देशाः प्रदेशा निर्विभागा भागा इत्यर्थः, तेषामग्रं-परिमाणं सर्वाकाशप्रदेशाग्रं, सर्वाकाशप्रदेशैः, किं?, अनन्तगुणितं अनन्तशो गुणितं अनन्तगुणितं, एकैकस्मिन्नाकाशप्रदेशे अनन्तागुरुलघुपर्यायभावात्, पर्यायाक्षरं-पर्यायपरिमाणाक्षरं निष्पद्यते, सर्वद्रव्यपर्यायपरिमाणमिति भावार्थः, स्तोकत्वाच्चेह धर्मास्तिकायादयो नोक्ताः, अर्थतस्तु गृहीता एव, इह च ज्ञानमक्षरं गृह्यते, तथा तज्ज्ञेयं, तथा अकारादि च, सर्वथाऽप्यविरोध इति, अस्य च सर्वजीवानामपि चाक्षरस्यानन्तभागो नित्योद्घाटितः, सदाऽप्रावृत इत्यर्थः, स पुनरनन्तभागोऽप्यनेकविधः, तत्र सर्वजघन्यश्चैतन्यमात्रं, तत्पुनर्न कदाचिदुत्कृष्टावरणस्याप्याव्रियते, जीवस्वाभाव्याद्, आह-च ग्रन्थकारः 'जइ पुण' इत्यादि, यदि पुनः सोऽपि आव्रियेत, ततः किं?, तेन जीवः अजीवतां प्राप्नुयात् , तेनावृतेन जीवः--चैतन्यलक्षणः स्वलक्षणपरित्यागादजीवतां प्राप्नुयात् , नचैतद् दृष्टमिष्टं वा, सर्वस्य सर्वथा स्वभावातिरस्काराद् , अत्रैव दृष्टान्तमाह- 'सुट्ठुवी' त्यादि, मेघसमुदये चन्द्रसूर्यप्रभाजालतिरस्कारिणि सति भवति प्रभा चन्द्रसूर्ययोः, सर्वस्य सर्वथा स्वभावातिरस्कारादिति। अत्राह- 'सव्वागासपएसग्गं सव्वागासपदेसेहिं अणंतगुणियं पज्जवग्गक्खरं निप्फज्जती" त्यत्राविशेषितमेवाक्षरमुक्तम्,अविशेषाभिधानाचेदं केवलमिति गम्यते,इह तु श्रुताधिकारादकारादि प्रकृतं यतस्तत्

कथं केवलपर्यायपरिमाणतुल्यं भवेद्?, उच्यते, नन्वत्राप्यपर्यवसितश्रुताधिकारादकाराद्येव गम्यते, अथ मतिः- 'सव्वजीवाणंपिय णं अक्खरस्स अणंतभागो णिच्चुग्घाडिओ'त्ति सर्वजीवग्रहणान्न तच्छ्रुतं, यतः समस्तद्वादशांगविदां तत् समस्तमिति, यद्येवं केवलस्यापि न सर्वजीवानामेवानन्तभागोऽवतिष्ठते, सर्वज्ञसद्भावात्, अतो न तत् केवलाक्षरमपि, कस्यासावनन्तभागोऽस्तु?, तथा अविशेषेण सर्वजीवग्रहणे सत्यपि प्रकरणादपिशब्दाद्वा केवलिनो विहायान्येषां अनन्तभागो गम्यते, अत एव किं न श्रुतात्मकमक्षरमंगीकृत्य समस्तद्वादशांगविदो विहायान्येषां अनन्तभागो गम्यते, तस्मात् स्वपरपर्यायभेदादुभयमप्याविरुद्धमिति, तथाऽप्यत्रापर्यवसितश्रुताधिकारादकाराद्येव न्यायानुपाति, तत् पुनरनन्तपर्यायम्, इह अ अ अ इत्यकार उदात्तोऽनुदात्तः स्वरितः, स सानुनासिको निरनुनासिकश्च, एवं दीर्घः प्लुतः, एवं तावदष्टादशप्रभेदं अवर्णं ब्रवते, एवं यावतः केवल एवाकारो लभते सानुनासिकादीन् तथाऽन्यवर्णसहितो वा तेऽप्यस्य स्वपर्यायाः, ते चानन्ताः, कथम्?, अभिलाप्यबाह्यनिमित्तभेदात्, तस्य च परमाणुद्व्यणुकादिभेदेनानन्तत्वात्, ध्वनेश्च तथा तथाभिधायकत्वपरिणामे सति तत्तदर्थप्रतिपादकत्वादिति, सांकेतिकशब्दार्थसम्बन्धवादिमतमप्यावश्यके नयाधिकारे विचारयिष्यामः, ततश्चैते स्वपर्यायाः, शेषास्तु सर्व एव घटादिपर्यायाः परपर्याया इति, ते पुनः स्वपर्यायेभ्योऽनन्तगुणाः, आह-स्वपर्यायाणां तावत्पर्यायता युक्ता, घटादिपर्यायास्तु विभिन्नवस्त्वाश्रितत्वात् कथं तस्येति व्यपदिश्यन्ते?, उच्यते, स्वपर्यायविशेषणोपयोगात्, इह ये यस्य स्वपर्यायविशेषणतयोपयुज्यन्ते ते तस्य पर्यायतया व्यपदिश्यन्ते, यथा घटस्य रूपादयः, उपयुज्यन्ते चाकारस्वपर्यायाणां विशेषणतया घटादिपर्यायाः, तानन्तरेण स्वपर्यायव्यपदेशाभावात्, तथा वस्तुस्थित्याऽपि च घटादिपर्याया अभावरूपेणाकारस्य व्यवस्थितत्वाद् घटादिपर्यायाणां अकारपर्यायतायामविरोध इति, इयमत्र भावना--घटादिपर्यायाणामनन्तत्वा-

तेभ्यश्चाकारस्य स्वभावभेदेन व्यावृत्तत्वात्, स्वभावभेदेन व्यावृत्त्यनभ्युपगमे च घटादिपर्यायाणामेकत्वप्रसंगाद्,अतः स्वभावभेदनिबन्धनत्वादकारपर्यायता तेषामिति,तस्मात् स्वपरपर्यायापेक्षया खल्वकारस्य सर्वद्रव्यपर्यायराशितुल्यधर्मताऽविरोध इति, न चेदमुत्सूत्रं, यत आगमेऽप्युक्तम्-"जे एगं जाणति से सव्वं जाणति, जे सव्वं जाणति से एगं जाणति"त्ति, अस्यायमर्थः-य एकं वस्तूपलभते सर्वपर्यायैः स सर्वमुपलभते, कश्चैकं सर्वपर्यायैरुपलभते य एव सर्वं सर्वथोपलभत इत्यतः-सर्वमजानानो नाकारं सर्वथोपलभत इति, ततश्चास्मात् सूत्रात् सर्वमेव वस्तु सर्वद्रव्यपर्यायराशितुल्यधर्मकं, इह त्वक्षराधिकारादक्षरमुक्तमिति, इतश्चैतदकाराद्येव प्रतिपत्तव्यं, अस्मिन्नेवाधिकारेऽक्षरस्यानन्तभागो नित्योद्घाटित इत्युपन्यस्तत्वात्, केवलस्य चाविभागसम्पूर्णत्वेन निकृष्टानन्तभागासम्भवाद् अवधेरप्यसंख्येयप्रकृतिभेदभिन्नत्वान्मनःपर्यायज्ञानस्याप्योघत ऋजुविपुलभेदाभिन्नत्वात् पारिशेष्यादकारादिश्रुताक्षर[स्य] निबन्धनज्ञानस्यैवासावित्यलं प्रसंगेन, 'सेत्तं' इत्यादि निगमनद्वयमपि निगदसिद्धम् ॥

'से किं त' मित्यादि ॥ ( ४४-२०२ ) ॥ अथ किं तद्गमिकम् ?, इहादिमध्यावसानेषु किञ्चिद्विशेषतः पुनस्तत्सूत्रोच्चारणलक्षणो गमः, यथाऽऽदिविशेषे तावत् 'इह छज्जीवणिके' त्यादि, गमा अस्य विद्यन्ते इति 'अत इनिठना' विति (५-२-१२५) गमिकं, इदं च प्रायोवृत्त्या दृष्टिवादे, तस्यैव गमबहुलत्वात्, अगमिकं तु प्रायो गाथाद्यसमानग्रन्थत्वात् कालिकश्रुतमाचारादि, 'से त' मित्यादि निगमनद्वयं कण्ठ्यं । 'तं समासतो दुविहं पन्नत्तं' तद्गमिकागमिकं अथवा तदोघश्रुतमर्हदुपदेशानुसारि समासतः संक्षेपेण द्विविधं प्रज्ञप्तं, तद्यथा-अङ्गप्रविष्टं अङ्गबाह्यं च, अत्राह-पूर्वमेव चतुर्दशभेदोद्देशाधिकारे अङ्गप्रविष्टं च अंगबाह्यं चेत्युपन्यस्तं, किमर्थं पुनस्तत् समासत इत्याद्युपन्यासेन तदेवोद्दिश्यत इति ?, अत्रोच्यते, सर्वभेदानामेवाङ्गानङ्गप्रविष्टभेदद्वयान्त-

भविनार्हत्प्रणीतत्वे च प्राधान्यख्यापनार्थमिति, तत्र 'पाददुगं २ जङ्घो २ रू२ गातदुयगं च २ दो य बाहूओ २। गीवा १ सिरं च १ पुरिसो बारसअंगो सुयविसिट्ठो ॥१॥' श्रुतपुरुषस्याङ्गेषु प्रविष्टं, अंगभावव्यवस्थितमित्यर्थः, अथवा 'गणधरकयमंगगयं जं कत थेरेहिं बाहिरं तं तु। नियतं अंगपविट्ठं अणिययसुय बाहिरं भणियं ॥१॥' तत्राल्पतरवक्तव्यत्वादंगबाह्यमधिकृत्य प्रश्नसूत्रमाह—'से किं त' मित्यादि, अथ किं तदंगबाह्यं ?, श्रुतपुरुषात् व्यतिरिक्तं अंगबाह्यं द्विविधं परोक्षं, तद्यथा-आवश्यकं च आवश्यकव्यतिरिक्तं च, 'से किं त' मित्यादि, अथ किं तदावश्यकम् ?, अवश्यक्रियानुष्ठानादावश्यकं, गुणानां वा अभिविधिना वश्यमात्मानं करोतीत्यावश्यकम्, पड्विधं प्रज्ञप्तम्, तद्यथा-सामायिकमित्यादि, "सावज्जजोगविरती १ उक्कित्तण २ गुणवओ य पडिवत्ती ३। खलियस्स णिंदणा ४ वणतिगिच्छ ५ गुणधारणा ६ चेव ॥ १ ॥" अधिकारगाथा, एतदनुसारेण आवश्यकपिण्डार्थो वक्तव्यः, 'से त' मित्यादि, तदेतदावश्यकम् ॥ 'से किं त' मित्यादि, अथ किं तदावश्यकव्यतिरिक्तं?, २ द्विविधं प्रज्ञप्तं, तद्यथा- कालिकं चोत्कालिकं च, तत्राल्पतरवक्तव्यत्वादुत्कालिकमधिकृत्य प्रश्नसूत्रमाह--'से किं त' मित्यादि, अथ किं तदुत्कालिकम् ?, उत्कालिकमनेकविधं प्रज्ञप्तं, तद्यथा-दशवैकालिकं प्रतीतं, कल्पाकल्पप्रतिपादकं कल्पाकल्पं, तथा कल्पनं कल्पः—स्थविरकल्पादिः तत्प्रतिपादकं श्रुतं २, तत् पुनः द्विभेदं--चुल्लकप्पसुयं महाकप्पसुयं, एकमल्पग्रन्थमल्पार्थं च, द्वितीयं महाग्रन्थं महार्थं च, शेषभेदाः प्रायो निगदसिद्धास्तथापि लेशतोऽप्रसिद्धतरान् व्याख्यास्यामः, जीवादीनां प्रज्ञापनं प्रज्ञापना बृहत्तरा महाप्रज्ञापना, प्रमादाप्रमादस्वरूपभेदफलविपाकप्रतिपादकमध्ययनं प्रमादाप्रमादं, प्रमादस्वरूपं महाकर्मेन्धनप्रभवाविध्यातदुःखानलज्वालाकलापपरीतमशेषमेव संसारवासगृहं पश्यंस्तन्मध्यवर्त्यपि सति तन्निर्गमनोपाये वीतरागप्रणीतधर्मचिन्तामणौ यतो विचि-

अकर्मोदयसाचिव्यजनितात् परिणामविशेषादपश्यन्निव तद्भयमविगणय्य विशिष्टपरलोकक्रियाविमुख एवास्ते सत्त्वः स खलु प्रमाद इति, तद्भेदाः मद्यादयस्तत्कारणत्वाद्, उक्तञ्च-"मज्जं विसय कसाया णिद्दा विगहा य पंचमी भणिया।" फलविपाको दारुणः, उक्तं च—'श्रेयो विषमुपभोक्तुं क्षमं भवेत् क्रीडितुं हुताशेन। संसारबन्धनगतैर्न तु प्रमादः क्षमः कर्तुम् ॥ १ ॥ अस्यामेव हि जातौ नरमुपहन्याद्विषं हुताशो वा। आसेवितः प्रमादो हन्याज्जन्मान्तरशतानि ॥ २ ॥ यन्न प्रयान्ति पुरुषाः स्वर्गं यच्च प्रयान्ति विनिपातम्। तत्र निमित्तमनार्यः प्रमाद इति निश्चितमिदं मे ॥ ३ ॥ संसारबन्धनगतो जातिजराव्याधिमरणदुःखार्त्तः। यन्नोद्विजते सत्त्वः स ह्यपराधः प्रमादस्य ॥ ४ ॥ आज्ञाप्यते यदवशः तुल्योदरपाणिपादवदनेन। कर्म च करोति बहुविधमेतदपि फलं प्रमादस्य ॥ ५ ॥ इह हि प्रमत्तमनसः सोन्मादवदनिभृतेन्द्रियाश्चपलाः। यत् कृत्यं तदकृत्वा सततमकार्येष्वभिपतन्ति ॥ ६ ॥ तेषामभिपतितानामुद्भ्रान्तानां प्रमत्तहृदयानाम्। वर्द्धन्त एव दोषाः वनतरव इवाम्बुसेकेन ॥ ७ ॥ दृष्ट्वाऽप्यालोकं नैव विश्रम्भितव्यं, तीरं नीताऽपि भ्राम्यते वायुना नौः। लब्ध्वा वैराग्यं भ्रष्टयोगः प्रमादाच्चित्रं व्यावृत्तो ब्रह्मदत्तो नरेशः ॥ ८ ॥ इत्यादि, एवं प्रतिपक्षद्वारेणाप्रमादस्वरूपादयो वाच्या इति, 'नन्दी' त्यादि सुगमं, सूर्यप्रज्ञप्तिः सूर्यचरितप्रज्ञापनं यस्यां ग्रन्थपद्धतौ सा सूर्यप्रज्ञप्तिः, पौरुषीमण्डलं पुरुषः शंकुः शरीरं वा तस्मान्निष्पन्ना पौरुषी द्वयम्, अत्र भावना—यदा सर्वस्य वस्तुनः स्वप्रमाणा छायोपजायते तदा पौरुषीति, एतच्च पौरुषीमानं उत्तरायणान्ते दाक्षिणायनादौ चैकं दिनं भवति, तत ऊर्ध्वमंगुलस्याष्टावेकषष्टिभागा दक्षिणायने वर्द्धन्ते उत्तरायणे च ह्रसंतीति, एवं यत्र पौरुषी मण्डले मण्डलेऽन्याऽन्या प्रतिपाद्यते तदध्ययनं पौरुषीमण्डलं। मण्डलप्रवेशः, यत्र हि चन्द्रसूर्ययोर्दक्षिणोत्तरेषु मण्डलेषु मण्डलान्मण्डलप्रवेशो व्यावर्ण्यते

तदध्ययनं मण्डलप्रवेश इति। विद्याचरणविनिश्चयः विद्येति ज्ञानं तच्च दर्शनसहचारितम्, अन्यथाऽभावात्, चरणं चारित्रं एतेषां फलविनिश्चयप्रतिपादको ग्रन्थः विद्याचरणविनिश्चय इति। गणिविद्या गुणगणोऽस्यास्तीति गणी, स चाचार्यः, तस्य विद्या—ज्ञानं गणिविद्या, तत्राविशेषेऽप्ययं विशेषः-'जोतिसणिमित्तणाणं गणिणो पव्वावणादिकज्जेसु। उवयुज्जइ तिहिकरणादिजाणणत्थऽन्नहा दोसो ॥ १ ॥' ध्यानविभक्तिः—ध्यानानि—आर्त्तध्यानादीनि तेषां विभजनं यस्यां ग्रन्थपद्धतौ सा ध्यानविभक्तिः, मरणानि प्राणत्यागलक्षणानि अनुसमयादीनि वर्तन्ते, यथोक्तम्—'अणुसमयं संतरं चे'त्यादि, एतेषां विभजनं यस्यां सा मरणविभक्तिः। आत्मनो-जीवस्यालोचनाप्रायश्चित्तप्रतिपत्त्यादिप्रकारेण विशुध्धिः कर्मविगमलक्षणा प्रतिपाद्यते यत्र तदध्ययनं आत्मविशुद्धिः। वीतरागश्रुतं सरागव्यपोहेन वीतरागस्वरूपं प्रतिपाद्यते यत्राध्ययने तद्वीतरागश्रुतं, संलेखनाश्रुतं द्रव्यभावसंलेखना प्रतिपाद्यते यत्र तदध्ययनं संलेखनाश्रुतं, तत्र द्रव्यसंलेखनोत्सर्गतः—'चत्तारि विचित्ताइं विगतीणिज्जूहियाइं चत्तारि। संवच्छरे य दोन्नि उ एगंतरियं च आयामं ॥ १ ॥ णातिविगिट्ठो य तवो छम्मासे परिमियं च आयामं। अन्नेऽवि य छम्मासे होति विगिट्ठं तवोकम्मं ॥ २ ॥ वासं कोडीसहिअं आयामं काउमाणुपुव्वीए। गिरिकंदरं तु गंतुं पादवगमणं अह करेति ॥ ३ ॥' भावसंलेखना तु क्रोधादिकषायप्रतिपक्षाभ्यास इति। विहारकल्पः विहरणं विहारः तस्य कल्पो—व्यवस्था स्थविरकल्पादीनामुच्यते यत्र ग्रन्थेऽसौ विहारकल्पः। चरणविधिः चरणं व्रतादि, तथा चोक्तम्—वयसमणधम्म० गाहा, एततप्रतिपादकमध्ययनं चरणविधिः। आतुरप्रत्याख्यानं आतुरः-क्रियाऽतीतो ग्लानस्तस्य प्रत्याख्यानं, एत्थ विधी—गिलाणं किरियातीतं णाउं गीयत्था पच्चक्खावेंति दिणे २ दव्वहासं करेन्ता सन्तः अंते य सव्वदव्वदायणाए भत्ते वेरग्गं जणेत्ता भत्ते णित्तण्हस्स भवचरिमप-

च्चक्खाणं कारेंति, एयं जत्थ अज्झयणे सवित्थरं वण्णिज्जति तदज्झयणं आउरपच्चक्खाणं, महाप्रत्याख्यानं महच्च तत् प्रत्याख्यानं चेति समासः, एसित्थ भावत्थो-थेरकप्पेण जिणकप्पेण वा विहरेत्ता अंते थेरकप्पिया बारसवासे संलेहं करेत्ता जिणकप्पिया पुण विहारेणेव संलीढा तहावि जहाजुत्तं संलेहं करेत्ता निव्वाघातं सचेट्ठा चेव भवचरिमं पच्चक्खंति, एयं सवित्थरं जत्थऽज्झयणे वण्णिज्जइ तमज्झयणं महापच्चक्खाणं। एयाणि अज्झयणाणि जहा अभिधाणत्थाणि तहा वण्णियाणि, 'सेत्त' मित्यादि निगमनं, तदेतदुत्कालिकं, उपलक्षणं चैतदित्युक्तमुत्कालिकं॥ 'से किं त'मित्यादि, अथ किं तत् कालिकं?, कालिकमनेकविधं प्रज्ञप्तं, तद्यथा--उत्तराध्ययनानि उत्तराणि--प्रधानानि रूढ्या चोत्तराध्ययनानि, 'द्देशे' त्यादि प्रायो निगदसिद्धं, निशीथवन्निशीथं इदं प्रतीतमेव, अस्मादेव ग्रन्थार्थाभ्यां महत्तरं महानिशीथं, जम्बूद्वीपप्रज्ञप्तिः, इहावलिकाप्रविष्टेतरविमानप्रविभजनं यत्राध्ययने तद्विमानप्रविभक्तिः, तच्चैकमल्पग्रन्थार्थं तथाऽन्यन्महाग्रन्थार्थं, अतः क्षुल्लिका विमानप्रविभक्तिर्महती विमानप्रविभक्तिरिति। अङ्गचूलिका अंगस्य--आचारादेश्चूलिका अंगचूलिका, यथाऽऽचारस्यानेकविधा इहोक्तानुक्तार्थसंग्रहात्मिका चूलिका वर्गचूलिका, इह वर्गोऽध्ययनादिसमूहः, यथाऽन्तकृद्दशास्वष्ट वर्गा इत्यादि, तेषां चूलिका २, व्याख्या-भगवतीत्यस्याश्चूलिका २, अरुणोपपातः, इहारुणो नाम देवस्तत्समयनिबद्धो ग्रन्थस्तदुपपातहेतुः अरुणोपपातः, जाहे तमज्झयणं उवउत्ते समाणे समणे परियट्टेति ताहे से अरुणे देवे ससमयनिबद्धत्तणाओ चालियासणे संभमुब्भन्तलोयणे पउत्तावही वियाणिय हट्ठपहट्ठे चलचवलकुंडलधरे दिव्वाए जुत्तीए दिव्वाए विभूईए दिव्वाए गतीए जेणामेव से भगवं समणे तेणामेव उवागच्छति, उवागच्छित्ता भत्तिभरोणयवयणे विमुक्कवरकुसुमवासे ओवयति, ओवतित्ता ताहे से समणस्स पुरतो ठिच्चा अंतध्धिए कयंजलिए उवउत्ते संवेगविसुज्झमा-

णज्झवसाणे सुणेमाणे चिट्ठइ, समत्ते य भणइ–सुसज्झाइयं २, वरं वरेहिति, ततो से इहलोगणिप्पिवासे समतिणमणिमुत्तलेट्ठुकंचणे सिद्धिवधूणिब्भरणुरायचित्ते समणे पडिभणइ–ण मे वरेण अट्ठोत्ति, ततो से अरुणदेवे अधिगतरजातसंवेगे पयाहिणं करेत्ता वंदित्ता णमंसित्ता पडिगच्छइ, एवं वरुणोववायादिसुवि भाणियव्वं, उत्थानश्रुतं अध्ययनं तं पुण सिंगणाइयकज्जेसु जस्सेगकुलस्स वा गामस्स वा जाव रायहाणीए वा सच्चेव समणे कयसंकप्पे आसुरुत्ते अप्पसन्ने अप्पसन्नलेसे विसमासणत्थे उवउत्ते समाणे उट्ठाणसुअज्झयणं परियट्टेति एक्कं दो तिन्नि वा वारे, ताहे से कुले वा गामे वा जाव रायहाणी वा ओहयमणसंकप्पे विलवंते दुयं २ पहावंते उट्ठेति, उव्वसतित्ति वुत्तं भवति, तथा समुत्थानश्रुतं अध्ययनं तं पुण समत्तकज्जे तस्सेव कुलस्स वा गामस्स वा जाव रायहाणीए वा सच्चेव समणे कयसंकप्पे तुट्ठे पसण्णे पसण्णलेसे समसुहासणत्थे उवउत्ते समाणे समुट्ठाणसुतज्झयणं परियट्टेति एक्कं दो तिन्नि वा वारे, ताहे से कुले वा जाव रायहाणीए वा पहट्ठचित्ते पसन्नमणे कलयलं कुणमाणे मंदाए गतीए सललियं आगच्छइ २ त्ता समुट्ठेति, आवासेतित्ति वुत्तं भवतीत्यर्थः, एवं कयसंकप्पस्स परियट्टिन्तस्स पुव्वुट्ठितं समुट्ठेति । **णागपरियावणियाओ** नागपरिज्ञा, **नागत्ति**–नागकुमाराः तस्समयणिबद्धमज्झयणं, से जया समणे उवउत्ते परियट्टेति तदाऽकयसंकप्पस्सवि ते णागकुमारा तत्थत्था चेव तं समणं परियाणंति वंदंति नमंसंति बहुमाणं च करेंति, सिंगणादियकज्जेसु य वरदा भवन्तीत्यर्थः, **णिरयावलिया** जासु आवलियपविट्ठेतरे य णिरया तग्गामिणो य णरतिरिया पसंगओ वन्निज्जंति। **कप्पियाउत्ति** सौधर्मादिकल्पगतवक्तव्यतागोचरा ग्रन्थपद्धतयः कल्पिका उच्यन्ते । एवं **कल्पावतंसिकाः** सोधम्मीसाणकप्पेसु जाणि कप्पविमाणाणि ताणि कप्पवडिंसयाणि, तेसु य देवीओ जा जेण तवोविसेसेण उववन्ना इड्ढिं च पत्ता एवं वन्निज्जंति जासु ताओ कप्पवडेंसियाओ वु-

च्चंति। तथा पुप्फियाउत्ति इह यासु ग्रन्थपद्धतिषु गृहवाससुत्कलनपरित्यागेन प्राणिनः संयमभावपुष्पिताः सुखिताः पुनः संयमभावपरित्यागतो दुःखावाप्तिमुकुलिताः पुनस्तत्परित्यागादेव पुष्पिताः प्रतिपाद्यन्ते ताः पुष्पिता उच्यन्ते। अधिकृतार्थविशेषप्रतिपादकास्तु पुष्पचूला इति। तथा अन्धकवृष्णिनराधिपवक्तव्यताविषया अन्धकवृष्णिदशा उच्यन्ते। 'एवमाइयाइं इच्चादि', एवमादीनि सर्वथा कियन्त्याख्यास्यन्ते ?, चतुरशीतिप्रकीर्णकसहस्राणि भगवतोऽर्हतः श्रीऋषभस्यादितीर्थकरस्य, तथा संख्येयानि प्रकीर्णकसहस्राणि मध्यमानां—अजितादीनां पार्श्वपर्यन्तानां जिनवराणां, तीर्थकराणामित्यर्थः, एतानि च यावन्ति तानि प्रथमानुयोगतोऽवसेयानि, तथा चतुर्दश प्रकीर्णकसहस्राणि अर्हतः, कस्य ?, वर्द्धमानस्वामिनः, अयमत्र भावार्थः—भगवतो उसहस्स चउरासीति समणसाहस्सितो होत्था, पयन्नगज्झयणाणि य सव्वाणि कालियउक्कालियाणं चउरासीतिसहस्साणि, कथं ?, यतो ताणि चउरासीतिसमणसहस्साणि अरहंतमग्गोवदिट्ठे जं सुयमणुसरित्ता किंचि णिज्जूहंते ताणि सव्वाणि पतिन्नगाणि, अहवा सुयमणुसारतो अप्पणो वयणकोसलत्तेण जं धम्मदेसणादिसु भासंते तं सव्वं पइन्नगं, जम्हा अणन्तगमपज्जवं सुत्तं दिट्ठं, तं च वयणं णियमा अन्नयरगमाणुपाती तम्हा तं पइन्नगं, एवं चउरासीतिपइन्नगसहस्साणि भवंतीत्यर्थः, एएण विहिणा मज्झिमतित्थगराणं संखेज्जाइं पइन्नगसहस्साणि, समणस्सवि भगवओ महावीरस्स जम्हा चोद्दस समणसाहस्सीओ उक्कोसिया समणसम्पया तम्हा चोद्दसपइन्नगज्झयणसहस्साणि भवंति, एत्थ पुण एगे आयरिया एवं पन्नविंति किल एतं चुलसीइसहस्सादिगं उसभादिजिणवराणं समणपरिमाणं पहाणसुत्तणिज्जूहणसमत्थे समणे पडुच्च भणियं, सामन्नसमणा पुण बहुतरा तत्काले, अन्ने भणंति—उसभादीणं भवत्थाणं संचराणं एतं चुलसीदिसहस्सादिगं पमाणं, पवाहेण पुणो एगातित्थेसु बहुगा दट्ठव्वा, तत्थ जे-

पमाणभूयसुत्तणिज्जूहणसमत्था अन्नकालिगावि ते एत्थ अहिगया, एए ते सुप्पसिद्धप्पइन्नगणिज्जूहगा चेव दट्ठव्वा, यत आह— 'अथवेत्यादि, अथवेति प्रकारान्तरप्रदर्शनं, यस्य ऋषभादेस्तीर्थकृतः यावन्तः शिष्या औत्पत्तिक्या वैनयिक्या कर्मजया पारिणामिक्या च चतुर्विधया बुध्ध्या उपपेताः—समन्विताः तस्य तावन्त्येव प्रकीर्णकसहस्राणि, प्रत्येकबुद्धा अपि तावन्त एव, अत्रैके व्याचक्षते—किल प्रत्येकबुद्धदब्धान्येव तान्यवगन्तव्यानि, प्रकीर्णकप्रमाणेन प्रत्येकबुद्धप्रमाणप्रतिपादनात्, स्यादेतत्-प्रत्येकबुद्धानां शिष्यभावो विरुध्यत इति, एतदप्यसत्, तेषां प्रत्येकबुद्धत्वादाचार्यमेवाधिकृत्य शिष्यभावस्य निषिद्धत्वात्, तीर्थकरप्रणीतशासनप्रतिपन्नत्वेन तु तच्छिष्यभावो न विरुध्यत इति, अन्ये पुनरित्थमभिदधति—सामान्येनेह प्रकीर्णकैस्तुल्यत्वात् प्रत्येकबुद्धानामत्राभिधानं, न तु नियोगतः प्रत्येकबुद्धदब्धानि प्रकीर्णकाणीत्यलं विस्तरेण । 'सेत' मित्यादि, तदेतत् कालिकं, तदेतदावश्यकव्यतिरिक्तं, तदेतदनंगप्रविष्टमिति ॥

'से किं त' मित्यादि ॥(४५-२०९)॥ अथ किं तदंगप्रविष्टम्?, अंगप्रविष्टं द्वादशविधं प्रज्ञप्तं, तद्यथा-आचारः सूत्रकृतमित्यादि ।

'से किं त'मित्यादि ॥(४६-२०९)॥ अथ किं तदाचारवस्तु?, यद्वा अथ कोऽयमाचारः?, आचरणमाचारः आचर्यत इति वा आचारः शिष्टाचरितो ज्ञानाद्यासेवनविधिरिति भावार्थः, तत्प्रतिपादको ग्रन्थोऽप्याचार एवोच्यते, अनेन चाचारेण करणभूतेन श्रमणानामाचारादि आख्यायत इति योगः, अथवा आचारे णमिति वाक्यालंकारे श्रमणानां प्रागुनिरूपितशब्दार्थानां निर्ग्रन्थानां बाह्याभ्यन्तरग्रन्थरहितानां, आह-श्रमणा निर्ग्रन्था एव भवन्ति, विशेषणं किमर्थं?, उच्यते, शाक्यादिव्यवच्छेदार्थं, उक्तं च- "निग्गंथ सक्क तावस गेरुय आजीव पंचहा समणा" तत्राचारो ज्ञानाद्यनेकभेदभिन्नो गोचरो-भिक्षाग्रहणविधिलक्षणः विनयो ज्ञानादि

वैनयिकं फलं कर्मक्षयादि शिक्षा ग्रहणासेवनाभेदभिन्ना, विनेयशिक्षेत्यन्ये; विनेयः- शिष्यः, भाषा सत्या १ असत्यामृषा २ च अभाषा असत्या १ सत्यामृषा २ वा चरणं-व्रतादि करणं-पिण्डविशुध्ध्यादि 'जातामातवित्तीओ'त्ति यात्रा- संयमयात्रा मात्रा- तदर्थमेवाहारमात्रा वर्त्तनं वृत्तिः, विविधैरभिग्रहविशेषैरिति, आचारश्च गोचरश्चेत्यादिद्वन्द्वः क्रियते, ततश्चाचारगोचरविनयवैनयिकशिक्षाभाषाचरणकरणयात्रामात्रावृत्तय आख्यायन्ते, इह च यत्र क्वचिदन्यतरोपादाने अन्यतरगतार्थाभिधानं तत् सर्वं तत्प्राधान्यख्यापनार्थमेवावसेयं, सो य समासत्तो इत्यादि, स आचारः समासतः संक्षेपतः पंचविधः प्रज्ञप्तः, तद्यथा- ज्ञानाचारः-काले विणए बहुमाणे उवहाणे तह अनिण्हवणे । वंजण अत्थ तदुभए अट्ठविहो णाणमायारो ॥ १ ॥ दर्शनाचारः- 'णिस्संकिय णिक्कंखिय णिव्वितिगिच्छा अमूढदिट्ठी य । उववूह थिरीकरणे वच्छल्ल पभावणे अट्ठ ॥ २ ॥ अतिसेस इड्ढि आयरिय वादि धम्मकधि खमग णेमित्ती । विज्जा राया गणसम्मया य तित्थं पभावेंति ॥ ३ ॥ चारित्राचारः-पणिहाणजोगजुत्तो पंचहिं समितिहिं तिहि य गुत्तीहिं । एस चरित्तायारो अट्ठविहो होति नायव्वो ॥ ४ ॥ तपाचारः-बारसविहम्मिवि तवे सब्भितरबाहिरे जिणुवदिट्ठे । अगिलाएँ अणाजीवी णायव्वो सो तवायारो ॥ ५ ॥ वीर्याचारः-अणिगूहियबलविरिओ परक्कमइ जो जहुत्तमाउत्तो । जुंजति य जहाथामं णायव्वो वीरियायारो ॥ ४ ॥ 'आयारे णं परित्ता वायणा' आचारे णामिति वाक्यालंकारे परित्ता-संख्येयाः, आद्यन्तोपलब्धेरनन्ता न भवंतीत्यर्थः, काः?, वाचनाः-सूत्रार्थप्रदानलक्षणाः, अवसर्पिणीकालं वा प्रतीत्य, परित्तत्ति संख्येयान्यनुयोगद्वाराणि उपक्रमादीनि, अध्ययनानामेव संख्येयत्वात् प्रज्ञापकवचनगोचरत्वात् , संखेज्जा वेढा, वेढा छन्दोविशेषा, संखेज्जा सिलोगा श्लोकाः प्रतीता अनुष्टुपछन्दसा, संखेज्जाओ णिज्जुत्तीओ निर्युक्तानां युक्तिर्निर्युक्तयुक्तिरिति वाच्ये युक्तशब्दलो-

पान्निर्युक्तिरिति, एताश्च निक्षेपनिर्युक्त्याधाः संख्येया इति, संखेज्जाओ पडिवत्तीओ द्रव्यादिपदार्थाभ्युपगमाः प्रतिपत्तय, प्रतिवाद्यभिग्रहविशेषा वा 'से ण' मित्यादि, स आचारः णमिति वाक्यालंकारे अंगार्थतया अंगार्थत्वेन, अर्थग्रहणं परलोकचिंतां प्रति सूत्रादर्थस्य गरीयस्त्वख्यापनार्थं, सूत्रार्थोभयरूपो वाऽयमिति ख्यापनार्थं, प्रथममंगं स्थापनामाधिकृत्याद्यमंगमित्यर्थः, द्वौ श्रुतस्कन्धौ अध्ययनसमुदायलक्षणौ, पंचविंशतिरध्ययनानि, तद्यथा- सत्थपरिन्ना १ लोगविजयो २ सीतोसणिज्ज ३ सम्मत्तं ४। आवंति ५ धुअ ६ विमोहो ७ महापरिन्नो ८ वहाणसुयं ९ ॥ १०.॥ पढमो सुयखंधो। पिंडेसण १ सेज्जि २ रिया ३ भासज्जाया य ४ वत्थ ५ पाएसा ६। उग्गहपडिमा ७ सत्त य सत्तिकया ७ भावण १५ विमुत्ती १६ ॥ २ ॥ एवमेतानि निशीथवार्जानि पंचविंशतिरध्ययनानि, तथा पंचाशीत्युद्देशनकालाः, कथं ?, उच्यते, अंगस्य श्रुतस्कन्धस्याध्ययनस्योद्देशकस्य च एतेषां चतुर्णामप्येक एव, एवं सत्थपरिन्नाए सत्त उद्देसणकाला, लोगविजयस्स छ सीओसणिज्जस्स चउरो संमत्तस्स चउरो लोगसारस्स छ धुतस्स पंच एवं विमोहज्झयणस्स अट्ठ, महापरिन्नाए सत्त७ उवहाणसुत्तस्स चउरो, पिंडेसणाए एक्कारस ११ सेज्जाए तिन्नि ३ इरियाए तिन्नि ३ भासज्जाए दोन्नि २ वत्थेसणाए दो २ पाएसणाए दो २ उग्गहपडिमाए दोन्नि २ सत्तिक्कयाए सत्त ७ भावणाए एक्को १ विमुत्तीए एक्को१, एवमेए संपिंडिया पंचासीई भवन्ति, एत्थ संगहगाहा-सत्त य छच्चउ चउरो छ पंच अट्ठेव सत्त चउरो य। एक्कार ति तिय दो दो दो दो सत्तेक्क एक्को य ॥ १ ॥ एवं समुद्देशनकालान्नि भाणियव्वा। अष्टादश पदसहस्राणि पदाग्रेण, इह यत्रार्थोपलब्धिस्तत् पदं, चोदक आह- यदि दो सुतक्खंधा पणुवीसं अज्झयणाणि अट्ठारस पदसहस्साणि पदग्गेणं भवन्ति तो जं भणियं 'णववंभचेरमइओ अट्ठारसपदसहस्सिओ वेउ'त्ति एयं विरुज्झइ, आचार्य आह-णणु एत्थवि भाणियं 'हवइ य सपंचचूलो

वहुवहुअयरो पयग्गेणं'ति, इह सुत्तालावयपदेहिं सहितो वहु वहुयरो य वक्तव्य इत्यर्थः, अथवा दो सुयखंधा पणुवीसं अज्झयणाणि एयं आयारग्गसहितस्स आयाररस पमाणं भाणियं, अट्ठारसपयसहस्साणि पुण पढमसुयक्खंधस्स णवबंभचेरमतियस्स पमाणं, विचित्तत्थबद्धाणि य सुत्ताणि गुरूवदेसतो तेसिं अत्थो जाणियव्वो, संखेज्जा अक्खरा संख्येयान्यक्षराणि, वेढादीनां संख्येयत्वात्, अणन्ता गमाः इह गमा अर्थगमा गृह्यन्ते, अर्थपरिच्छेदा इत्यर्थः, ते चानन्ताः, एकस्मादेव सूत्रात्तत्तद्धर्मविशिष्टानन्तधर्मात्मकवस्तुप्रतिपत्तेः, अन्ये तु व्याचक्षते-अभिधानाभिधेयवशतो गमा इति, ते चानन्ताः, ते पुनरनेन विधिना अवसेयास्तद्यथा- सुयं मे आउसं ! तेणं भगवया आउसंतेणं भगवया सुयं मे आउसंवदा, सुयं मे आउसं तहिं, सुयं मे आउसं, आउसं सुयं मे, आसुयं मया तं सुयं मया, आ तया सुयं मया, आ तहिं सुयं मया आ, एवमादिभिर्भण्यमानं किलानन्तगममिति, अणंता पज्जवा स्वपरभेदभिन्ना, अक्षरार्थपर्याया इत्यर्थः, परित्ता तसा त्र्यस्यन्तीति त्रसा-द्वीन्द्रियादयस्ते च परित्ता, अणंता थावरा वनस्पतिकायसहिताः परिगृह्यन्ते सासयकडणिबद्धणिकाइयत्ति शाश्वता द्रव्यार्थतयाऽविच्छेदेन प्रवृत्तेः कृताः पर्यायाऽर्थतया प्रतिसमयमन्यथात्वावाप्ता निबद्धाः सूत्र एव निकाचिता निर्युक्तिसंग्रहणिहेतूदाहरणादिभिः जिणपन्नत्ता जिनैः प्रज्ञप्ता भावाः पदार्थाः, आघविज्जंतीत्यादि धुवगण्डिका पूर्ववत्। साम्प्रतमाचारांगग्रहणफलप्रतिपादनायाह-'से एव' मित्यादि, स इत्याचारांगग्राहकोऽभिसम्बध्यतेः, एवं आयत्ति अस्मिन् भावतः सम्यगधीते सति एवमात्मा भवति, तदुक्तक्रियापरिणामात्माव्यतिरेकात् स एव भवतीत्यर्थः, एवं क्रियासारमेव ज्ञानमिति ख्यापनार्थं क्रियापरिणाममभिधायाधुना ज्ञानमधिकृत्याह- 'एवं णाय'त्ति इदमधीत्य एवं ज्ञाता भवति यथैवेहोक्तमिति, एवं विन्नायत्ति एवं विविधो विशिष्टो वा ज्ञाता विज्ञाता एवं विज्ञाता भवति, तन्त्रान्तरीय-

ज्ञातृभ्यः प्रधानतर इत्यर्थः, एवं चरणकरणपरूवणया आघविज्जतीत्यादि, निगमनवाक्यं भावितार्थमेव ॥

'से किं तं सूयगडे' ॥( ४७-२१२ )॥ 'सूच् सूचायां' सूचनात् सूत्रं सूत्रेण कृतं सूत्रकृतं, तत्र लोक्यते अनेन वाऽस्मिन् वा लोकः सूच्यत इत्यादि निगदसिद्धं यावत् 'आसीतस्स किरियावादिसतस्स' अशीत्यधिकस्य क्रियावादिशतस्य, व्यूहं कृत्वा स्वसमयः स्थाप्यत इति योगः, एवं शेषपदेष्वपि क्रिया योजनीयेति, तत्र न कर्तारं विना क्रियासम्भव इति तामात्मसमवायिनीं वदन्ति तच्छीलाश्च ये ते क्रियावादिनः, ते पुनरात्माद्यस्तित्वप्रतिपत्तिलक्षणाः अमुनोपायेनाशीत्यधिकशतसङ्ख्या विज्ञेयाः, जीवाजीवाश्रवबन्धसंवरनिर्जरापुण्यपापमोक्षाख्यान् नव पदार्थान् विरचय्य परिपाट्या जीवपदार्थस्याधः स्वपरभेदावुपन्यसनीयौ, तयोरधो नित्यानित्यभेदौ, तयोरप्यधः कालेश्वरात्मनियतिस्वभावभेदाः पञ्च न्यसनीयाः, पुनश्चैवं विकल्पाः कर्त्तव्याः-अस्ति जीवः स्वतो नित्यः कालत इत्येको विकल्पः, विकल्पार्थश्चायं-विद्यते खल्वात्मा स्वेन रूपेण नित्यश्च कालवादिनः, उक्तेनैवाभिलापेन द्वितीयो विकल्प ईश्वरकारणिनः, तृतीयो विकल्पः आत्मवादिनः 'पुरुष एवेदं सर्व' मित्यादि, नियतिवादिनश्चतुर्थविकल्पः, पञ्चमविकल्पः स्वभाववादिनः, एवं स्वत इत्यजहता लब्धाः पञ्च विकल्पाः, एवमनित्यत्वेनापि दशैव, एते विंशतिर्जीवपदार्थेन लब्धाः, अजीवादिष्वप्यष्टस्वेवमेव प्रतिपदं विंशतिर्विकल्पानाम्, अतो विंशतिर्नवगुणा शतमशीत्युत्तरं क्रियावादिनामिति । 'चउरासीते अकिरियावादीणं' चतुरशीतेरक्रियावादिनां, क्रिया पूर्ववत्, न हि कस्यचिदव्यवस्थितस्य पदार्थस्य क्रिया समस्ति, तद्भावे चावस्थितेरभावादित्येवंवादिनोऽक्रियावादिनः, तथा चाहुरेके-"क्षणिकाः सर्वसंस्काराः, अस्थितानां कुतः क्रिया? । भूतिर्येषां क्रिया सैव, कारकं सैव चोच्यते ॥ १ ॥" इत्यादि, एते चात्मादिनास्तित्वप्रतिपत्तिलक्षणा अमुनोपायेन चतुरशीतिर्द्रष्ट-

व्याः, एतेषां हि पुण्यापुण्यविवर्जितपदार्थसप्तकन्यासस्तथैव जीवस्याधः स्वपरविकल्पभेदद्वयोपन्यासः, असत्त्वादात्मनो नित्यानित्यभेदौ न स्तः, कालादीनां तु पञ्चानां षष्ठी यदृच्छा न्यस्यते, पश्चाद्विकल्पाभिलापः-नास्ति जीवः स्वतः कालत इत्यादयः षडेव विकल्पाः, एकत्र द्वादश, एवमजीवादिष्वपि षट्सु प्रतिपदं द्वादश विकल्पाः, एवं द्वादश सप्तगुणाश्चतुरशीतिविकल्पा नास्तिकानामिति । 'सत्तट्ठीए अन्नाणियवादीणं' ति सप्तषष्टिरज्ञानिकवादिनां, क्रिया प्राग्वत्, तत्र कुत्सितं ज्ञानमज्ञानं तदेषामस्तीत्यज्ञानिकाः, नचैवं लघुत्वात् प्रक्रमस्य प्राग् बहुव्रीहिणा भवितव्यं, ततश्चाज्ञाना इति स्यात्, नैष दोषः, ज्ञानान्तरमेवाज्ञानं, मिथ्यादर्शनसहचरित्वात्, ततश्च जातिशब्दत्वात् गौरखरवदरण्यमित्यादिवदज्ञानिकत्वमिति, अथवा अज्ञानेन चरन्ति तत्प्रयोजना वा अज्ञानिकाः, असंचिन्त्यकृतबन्धवैफल्यादिप्रतिपत्तिलक्षणाः, ते च अमुनोपायेन सप्तषष्टिर्ज्ञातव्याः, तत्र जीवादीन् नव पदार्थान् पूर्ववद् व्यवस्थाप्य पर्यन्ते चोत्पत्तिमुपन्यस्याधः सप्त सदादयः उपन्यसनीयाः, सत्त्वमसत्त्वं सदसत्त्वं अवाच्यत्वं सदवाच्यत्वं असदवाच्यत्वं सदसदवाच्यत्वमिति च, एकैकस्य जीवादेः सप्त सप्त विकल्पाः, त एते नव सप्तकाः त्रिषष्टिः, उत्पत्तेस्तु चत्वार एवाद्या विकल्पाः, तद्यथा-सत्त्वमसत्त्वं सदसत्त्वं अवाच्यत्वं चेति, त्रिषष्टिमध्ये प्रक्षिप्ताः सप्तषष्टिर्भवन्ति, को जानाति जीवः सन्नित्येको विकल्पः, ज्ञातेन वा किं ?, एवं असदादयोऽपि वाच्याः, उत्पत्तिरपि किं सतोऽसतो सदसतोऽवाच्यस्येति वा को जानातीत्येतत् ?, न कश्चिदपीत्यभिप्रायः । 'बत्तीसाए वेणइयवादीणं' द्वात्रिंशतो वैनयिकवादिनां, क्रिया पूर्ववत्, तत्र विनयेन चरन्ति विनयो वा प्रयोजनमेषामिति वैनयिकाः, एते चानवधृतलिङ्गाचारशास्त्रा विनयप्रतिपत्तिलक्षणा अमुनोपायेन द्वात्रिंशदवगन्तव्याः-सुरनृपतिज्ञातियतिस्थविराधममातृपितॄणां प्रत्येकं कायेन वाचा मनसा दानेन च देशकालोपपन्नेन विनयः कार्यः इत्येते चत्वारो भेदाः सुर-

दिष्वष्टसु स्थानेषु, एकत्र मेलिता द्वात्रिंशदिति। सर्वसङ्ख्यां प्रतिपादयन्नाह-'तिण्हं तेसट्ठाण' मित्यादि, त्रयाणां त्रिषष्ट्याधिकानां प्रावादुकशतानां, विचित्रैकैकनयमतावलम्बिनां प्रवादिशतानामित्यर्थः, व्यूहं-प्रतिक्षेपं कृत्वा स्वसमयः स्वसिद्धान्तः स्थाप्यते, शेषं किंचिद् व्याख्यातं किंचित् सुगमामिति यावत् 'सेत्तं सूयगडे' त्ति कण्ठ्यम् ॥

'से किं त'मित्यादि ॥(४८-२३८)॥ अथ किं तत् स्थानं ?, तिष्ठन्त्यस्मिन् प्रतिपाद्यतया जीवादय इति स्थानं, तथा चाह-'ठाणे ण' मित्यादि, स्थानेन स्थाने वा जीवाः स्थाप्यन्ते, व्यवस्थितस्वरूपप्रतिपादनायेति हृदयं, शेषं प्रायो निगदसिद्धमेव, नवरं 'टंक'त्ति छिन्नतडं टङ्कं 'कूडं'ति पव्वतोवरिं, जहा वेयड्ढस्सोवरिं नव सिद्धाययणादिया कूडा, 'सेल'त्ति हिमवंतादिया सेला, 'सिहरिणो'त्ति सिहरेण सिहरिणोत्ति, ते य वेयड्ढाइया 'पब्भार'त्ति जं कूडं उवरिं अंबखज्जुयं तं पब्भारं,जं वा पव्वयस्स उवरिभागे हत्थिकुंभागिती कुडहं णिग्गयं तं पब्भारं भन्नइ 'कुंड'त्ति गंगादीणि कुंडानि 'गुह'त्ति तिमिसादिया गुहा 'आगरा' रुप्पसुवन्नरयणादिउप्पत्तिट्ठाणा आगरा 'दह'त्ति पोंडरीयादीया दहा 'णदीउ'त्ति गंगासिंधुमादीओ, शेषं क्षुण्णार्थं यावन्निगमनमिति।

'से किं त'मित्यादि ॥(४९-२२९)॥ अथ कोऽय समवायः?, सम् अव अयः समवायः,सम्यगधिकपरिच्छेद इत्यर्थः, तद्धेतुकश्च ग्रन्थोऽपि समवायः,तथा चाह-समवायेन समवाये वा जीवाः समाश्रीयन्ते, अविपरीतस्वरूपगुणभूषिता बुध्ध्या अंगीक्रियन्त इत्यर्थः, अथवा जीवाः समस्यन्ते- कुप्ररूपणाभ्यः सम्यक्प्ररूपणायां क्षिप्यन्ते, शेषं निगदसिद्धमानिगमनम्। नवरं 'एगादियाण'-मित्यादि, अत्रैकाद्येकोत्तरं स्थानशतं भवति, यथा 'एगे आया' इत्यादि, शेषं सूत्रसिद्धं यावन्निगमनमिति।

'से किं त'मित्यादि॥(५०-२२९)॥अथ केयं व्याख्या?,व्याख्यानं व्याख्या,तथा चाह-व्याख्यायां जीवादयो व्याख्यायन्ते, इह सयं चेव अज्झयणसत्तं, शेषं प्रकटार्थं यावत् 'सेत्तं विवाहे'त्ति निगमनम् ॥

'से किं त'मित्यादि ॥(५१-२३०)॥ अथ कास्ताः ज्ञाताधर्मकथाः?,ज्ञातानि-उदाहरणानि तत्प्रधाना धर्मकथाः ज्ञाताधर्मकथाः,आह च-'णायाधम्मकहासु णं'इत्यादि,ज्ञातानां-उदाहरणभूतानां नगरादीनि व्याख्यायन्ते, 'दस धम्मकहाणं वग्गा' इत्यादि, एत्थ भावणा-एगूणवीसं णायज्झयणाणि,णायत्ति आहरणा, दिट्ठंतिओ उवणिज्जति जेहिं वा ताणि णाताणि-अज्झयणा, एए पढमसुयखंधे, अहिंसादिलक्खणस्स धम्मस्स कहाओ धम्मकहाओ धम्मियाओ वा कहाओ धम्मकथाओ, अक्खाणगत्ति वुत्तं भवति, एयाणि बितियसुयखंधे, पढमबितियसुयखंधभणियाणं णायाधम्मकहाणं नगरादिया भवंति, बितियसुयखंधे दस धम्मकहाणं वग्गा, वग्गोत्ति समूहो, तव्विसेसणविसिट्ठा दस अज्झयणा चेव ते दट्ठव्वा, एगूणवीसं णाया दस धम्मकहाओ, तत्थ णातेसु आदिमा दस णाता णाया चेव, ण तेसु अक्खादियादिसंभवो, सेसा णव णाया, तेसु पुण एक्केक्के णाते पंच २ चत्तालाइं अक्खाइयासयाइं, एत्थवि एक्केकाए अक्खाइयाए पंच २ उवक्खाइयसयाइं, तत्थवि एक्केकाए उवक्खाइयाए पंच पंच अक्खाइयोवक्खाइयसयाइं, एवमेयाइं संपिंडियाइं,किं संजायं?, एगवीसं कोडिसयं लक्खा पन्नासमेव बोद्धव्वा । एवं ठिते समाणे अधिगतसुत्तस्स पत्थावो ॥ १ ॥ तंजहा-दस धम्मकहाणं वग्गा, तत्थ णं एगमेगाए धम्मकहाए पंच पंच अक्खाइयसयाइं, एगमेगाए अक्खाइयाए पंच २ उवक्खाइयसयाइं, एगमेगाए उवक्खाइयाए पंच २ अक्खाइयोवक्खाइयसयाइं, एवमेयाइं संपिंडियाइं, किं संजातं- ' पणुवीसं कोडिसयं एत्थ य समलक्खणाइया जम्हा । णवणायगसंबद्धा अक्खाइयमाइया तेणं ॥ १ ॥ ते सोहिज्जंति

फुडं इमाओ रासीओ वेगलाणं तु । पुणरुत्तवज्जियाणं पमाणमित्थं विणिद्दिट्ठं ॥ २ ॥ सोधिए य समाणे अद्धुट्ठाओ कहाणगकोडीओ चेव हवंति, अत एवाह-एवमेव सपुव्वावरेणं भणियपगारेणं, गुणणसोहणे कतेत्ति वुत्तं भवति, अध्धुट्ठाओ कहाणयकोडीओ भवंतीतिमक्खायं, प्रकटार्थमित्येवं गुरवो व्याचक्षते, अन्ये पुनरन्यथा, तदभिप्रायं पुनर्वयमतिगम्भीरत्वान्नावगच्छामः, परमार्थं त्वत्र विशिष्टश्रुतविदो विदन्तीत्यलं प्रसंगेन, शेषं सुगमं यावत् 'संखेज्जा पदसयसहस्सा पदग्गेणं, ते य किल पंच लक्खा छावत्तरिं च सहस्सा पदग्गेणं, अहवा सुत्तालावयपयग्गेणं संखेज्जा पदसहस्सा भवंति, एवं सव्वत्थ भावेयव्वं, शेषं सूत्रसिद्धं यावन्निगमनमिति ॥

'से किं त'मित्यादि॥(५२-२३१)॥उपासकाः-श्रावकाः तद्गतक्रियाकलापनिबद्धा दशाःदशाध्ययनोपलक्षिताः उपासकदशाः, तथा चाह-'उवासगदसासु' णं इत्यादि सूत्रसिद्धं यावत् 'संखेज्जा पदस(यस)हस्सा पदग्गेणं,ते च किल एक्कारस लक्खा बावन्नं पयग्गेणं' ति, शेषं कण्ठ्यमानिगमनमिति ।

'से किं त' मित्यादि ( ५३-२३२ ) अन्तो विनाशः स च कर्मणस्तत्फलभूतस्य वा संसारस्य कृतो यैस्तेऽन्तकृतस्ते च तीर्थकरादयस्तेषां दशाः प्रथमवर्गे दशाध्ययनानीति तत्संख्यया अन्तकृद्दशा इति, तथा चाह—'अंतकडदसासु ण' मित्यादि, पाठसिद्धं यावत् 'अंतकिरियाओ' त्ति भवापेक्षया अन्त्याश्च ताः क्रियाश्चेति समासः, ताश्च शैलेश्यवस्थाद्या गृह्यन्ते, शेषं प्रकटार्थं यावत् 'अट्ठ वग्गा' एत्थ 'वग्गो' त्ति समूहो, सो य अंतगडाणं अज्झयणाणं वा, सव्वाणि अज्झयणाणि जुगवं उद्दिसंति,

अतो भणियं—अट्ठ उद्देसणकाला, इच्चादि, संखेज्जा पदसहस्सा पयग्गेणं, ते य किल एवतिया-तेवीसं लक्खा चउरो य सहस्सा पदग्गेणं'ति, शेषं सूत्रसिद्धं यावन्निगमनमिति ।

'से किं त'मित्यादि ॥ ( ५४-२३३ ) ॥ उत्तरः-प्रधानः, नास्योत्तरो विद्यत इति अनुत्तरः उपपतनमुपपातः जन्मेत्यर्थः, अनुत्तरः प्रधानः संसारेऽन्यस्य तथाविधस्याभावात् उपपातो येषामिति समासः, तद्वक्तव्यताप्रतिबद्धा दशाः दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशाः, तथा चाह- 'अणुत्तरोववाइयदसासु ण'मित्यादि सूत्रसिद्धं यावत् तिन्नि 'वग्ग'त्ति इहाध्यनसमूहो वर्गः, वर्गे २ दशाध्ययनानि, वर्गश्च युगपदेवोद्दिश्यत इत्यत आह-'तिन्नि उद्देसणकाला 'इत्यादि, 'संखेज्जा पदसहस्सा पदग्गेणं, ते य किल छायालीसं लक्खा अट्ठ य सहस्सत्ति, शेषं प्रकटार्थं यावन्निगमनमिति ।

'से किं त'मित्यादि ॥ ( ५५-२३४ ) ॥ प्रश्नः प्रतीतस्तन्निर्वचनं व्याकरणं, बहुत्वाद्बहुवचनं, प्रश्नव्याकरणेषु 'अट्ठोत्तरं पसिणसयं' इत्यादि, अंगुट्ठबाहुपसिणादियाओ पसिणाओ, जे पुण विज्जामंता विधीए जविज्जमाणा अपुच्छिया चेव सुभासुभं कहंति एता अपासिणातो, तहा अंगुट्ठपसिणभावं च पडुच्च साधेंति जा विज्जाओ ताओ पसिणापसिणाओत्ति, अथवा अणंतरं जा कहिंति ता पसिणा परंपरं पसिणापसिणत्ति, तं पुण विज्जाकहितं तस्स परंपरं भवति, अन्ने य दिव्वा विचित्ता विज्जातिसया,शेषं निगदसिद्धं यावत् 'संखेज्जा पदसयसहस्सा पदग्गेणं, ते य किल बाणउतिलक्खा सोलस य सहस्सत्ति, शेषं गतार्थं यावदन्त इति ।

'से किं त'मित्यादि ॥ ( ५६-२३४ ) ॥ विपचनं विपाकः, शुभाशुभकर्मपरिणाम इत्यर्थः, तत्प्रतिपादकं श्रुतं विपाकश्रुतं, शेषमानिगमनं सूत्रसिद्धमेव, नवरं 'संखेज्जा पदसहस्सा पदग्गेणं, एते य एगा पदकोडी चुलसीइं च लक्खा बत्तीसं च सहस्सत्ति ।

**'से किं त' मित्यादि** ॥ (५७-२३५)॥ दृष्टयो दर्शनानि, वदनं वादः, दृष्टीनां वादः दृष्टिवादः, दृष्टीनां वा पातो यत्रासौ दृष्टिपातः, सर्वनयदृष्टय एवेहाख्यायन्त इत्यर्थः, तथा चाह—दृष्टिवादेन दृष्टिपातेन दृष्टिवादे दृष्टिपाते वा सर्वभावप्ररूपणा आख्यायते, **'से य समासओ पंचविहे पन्नत्ते'** इत्यादि, सर्वमिदं प्रायो व्यवच्छिन्नं तथापि लेशतो यथाऽऽगतसम्प्रदायं किंचिद् व्याख्यायते इति, तत्र सूत्रादिग्रहणयोग्यतासम्पादनसमर्थानि परिकर्माणि, गणितपरिकर्मवत्, तं च परिकम्मसुयं सिद्धसेणियादिपरिकम्ममूलभेदतो सत्तविहं, उत्तरभेदतो तेरासीतिविहं, माउगपदानि, एयं च सव्वं मूलुत्तरभेदं सुत्तत्थतो वोच्छिन्नं यथागतसम्प्रदायं वा वाच्यं, एएसिं परिकम्माणं छ आदिमा य परिकम्मा ससमइया चेव, गोसालयपवत्तिया आजीवगपासंडिसिद्धंतमएणं पुण चुयअचुयसेणियापरिकम्मसहिया सत्त पन्नविज्जंति, इयाणिं परिकम्मे णयचिंता, तत्थ णेगमो दुविहो—संगहितो असंगहितो य, संगहिओ संगहं पविट्ठो, असंगहिओ ववहारं, तम्हा संगहो ववहारो ऋजुसुत्तो सद्दादिया य एक्को एवं चउरो णया, एतेहिं चउहिं णएहिं छ ससमइयाइं परिकम्माइं चिंतिज्जंति, अतो भणियं-छ चउक्कणया भवंति, ते चेव आजीविया तेरासिया भणिया, कम्हा?, उच्यते, जम्हा ते सव्वं जगत् त्र्यात्मकमिच्छन्ति, यथा जीवोऽजीवो जीवाजीवा, लोए अलोए लोयालोए, संते असंते संतासंते, एवमादि, णयचिंताए ते तिविहं णयमिच्छंति, तंजहा—दव्वट्ठितो पज्जवट्ठितो उभयट्ठिओ, अओ भणियं—सत्त तेरासियत्ति, सत्त परिकम्माइं तेरासियपासंडत्था, तिविहाए णयचिंताए चिंतयन्तीत्यर्थः, से तं परिकम्मंति निगमनं । **'से किं तं सुत्ताइं?,२ उज्जुसुयादियाइं बावीसं भवंति'** इह सर्वद्रव्यपर्यायनयाद्यर्थसूचनात् सूत्राणि, अमून्यपि च सूत्रार्थतो व्यवच्छिन्नान्येव, यथाऽऽगतसम्प्रदायतो वा वाच्यानि, एतानि चेव बावीसं सुत्ताइं विभागतो अट्ठासीतिं हवंति, कथं?, उच्यते, इच्चेयाइं बावीसं सुत्ताइं

छिन्नछेदणइयाइं, 'ससमयसुत्तपरिवाडीए' त्ति सुत्तं, एत्थं जो णओ सुत्तं छिन्नं छेदेणं इच्छइ सो छिन्नछेदणओ, जहा–"धम्मो मंगलमुकिट्ठं' ति सिलोगो सुत्तत्थओ पत्तेयं छेदनयाठिओ ण वितियादिसिलोए अवेक्खइ, प्रत्येककल्पितपर्यन्त इत्यर्थः, एयाणि एवं वावीसं ससमया सुत्तपारवाडीए सुत्ताणि ठियाणि, तथा इच्चेइयाइं वावीसं सुत्ताइं अच्छिन्नछेदणइयाइं आजीवियसुत्तपरिवाडीएत्ति सुत्तमेव इति णओ सुत्तं अच्छिन्नं छेदेण इच्छइ सो अछिन्नछेदणयो,जहा धम्मो मंगलमुक्किट्ठंति सिलोगो,एस चेव अत्थओ वितियादिसिलोगमवेक्खमाणोत्ति वितियादिया य पढमंति अन्योऽन्यसापेक्षा इत्यर्थः, एयाणि वावीसं आजीवियगोसालपवत्तियपासंडपरिवाडीए, अक्खररयणविभागट्ठियाणिवि अत्थतो अन्नोन्नमवेक्खमाणाणि हवंति, इच्चेयाइं इत्यादि सुत्तं, तत्थ 'तिकाणियाइं' ति नयत्रिकाभिप्रायतश्चिन्त्यन्त इत्यर्थः, त्रैराशिकाश्चाजीविका एवोच्यन्ते, तथा 'इच्चेताइं' इत्यादि सूत्रं, एत्थ 'चउणइयाइं' ति नयचतुष्काभिप्रायतश्चिन्त्यत इति भावना,'एवमेवे' त्यादि सूत्रम्,एवं चउरो वावीसाओ अट्ठासीतिसुत्ताइं भवंति 'से तं सुत्ताइं' निगमनवाक्यम्। 'से किं तं पुव्वगते ?' इत्यादि, कम्हा पुव्वगतं?,उच्यते, जम्हा तित्थगरो तित्थपवत्तणकाले गणधराणं सव्वसुत्ताधारत्तणतो पुव्वं पुव्वगयसुत्तत्थं भासइ तम्हा पुव्वत्ति भणिया, गणधरा पुण सुत्तरयणं करेन्ता आयारादिकमेण रएंति ठवेंति य, अन्नायरियमतेणं पुण पुव्वगयसुत्तत्थो पुव्वं अरहया भासिओ गणधरेहिवि पुव्वगयं सुयं चेव पुव्वं रइयं, पच्छा आयारादि, चोदक आह–णणु पुव्वावरविरुद्धं, कम्हा?,जम्हा आयाराणिज्जुत्तीए भणियं-सव्वेसिं आयारो० गाहा, सत्यमुक्तं, किंतु सा ठवणा, इमं पुण अक्खररयणं पडुच्च भणियं, पूर्वं पूर्वाणि कृतानीत्यर्थः, ताणि य उप्पायपुव्वादीणि चोद्दसपुव्वाणि पन्नत्ताणि, पढमं उप्पायपुव्वं, तत्थ सव्वदव्वाणं पज्जवाण य उप्पायभावमंगीकाउं पन्नवणा कया, तस्स य पयपरिमाणं

पूर्वगतं वन्निज्जतित्ति एगा पयकोडीओ । वितियं अग्गेणियं, तत्थवि सव्वदव्वाण पज्जवाण य सव्वजीवाजीवविसेसाण य अग्गं-परिमाणं वन्निज्जतित्ति अग्गेणीयं, तस्स पयपरिमाणं छन्नउतिं पयसयसहस्साणि । ततियं वीरियपवायं, तत्थवि अजीवाणं जीवाणं सकम्मेतरं वीरियं पवयइ त्ति वीरियप्पवायं, तस्स बिसत्तरिय पयसमसहस्साणि । चउत्थं अत्थिणत्थिपवायं, जं लोए जहा वा अत्थि जहा वा णात्थि अथवा सियवादाभिप्पाततो जहेवास्ति नास्तीत्येवं प्रवदति इति अत्थिणत्थिपवायं भणियं, तंपि पदपरिमाणतो सट्ठिं पदसयसहस्साणि । पंचमं णाणपवादंति, तम्मि मतिणाणादिपंचकस्स गाहेण परूवणा जम्हा कया तम्हा णाणप्पवायं, तम्मि पदपरिमाणं एगा कोडी एगपदूणा । छट्ठं सच्चप्पवायं, सच्चं—संजमो सच्चवयणं वा, तं सच्चं जत्थ सभेयं सपडिवक्खं च वन्निज्जइ तं सच्चप्पवायं, तस्स पदपरिमाणं एगा पयकोडी छप्पयाहिया । सत्तमं आयप्पवायं, आयत्ति आत्मा, सोऽणेगहा जत्थ णयदरिसणेहिं वन्निज्जइ तं आयप्पवायं, तस्सवि पदपरिमाणं छव्वीसं पदकोडीओ । अट्ठमं कम्मप्पवायं, णाणावरणादियं अट्ठविहं कम्मं पयातिठिअणुभागपदेसादिएहिं भेदेहिं अन्नेहि य उत्तरुत्तरभेदेहिं जत्थ वन्निज्जइ तं कम्मप्पवायं, तस्सवि पयपरिमाणं एगा पयकोडी असीतिं च पयसहस्सा भवंति। णवमं पच्चक्खाणप्पवायं, तस्स य पदपरिमाणं चरासीतिं पयसहस्सा भवंति। दसमं विज्जाणुप्पवायं, तत्थ अणेगे विज्जातिसया वण्णिया, तस्स य पदपरिमाणं एगा पयकोडी दस पयसहस्सा । एक्कारसमं अवंझत्ति, वंझं णाम णिप्फलं ण वंझमवंझं, सफलमित्यर्थः, सव्वे णाणतवसंजमजोगा सफला वन्निज्जंति, अप्पसत्था य पमादादिया सव्वे असुहफला वन्निया, अतो अवंझं, तस्सवि पयपरिमाणं छव्वीसं पदकोडीओ । बारसमं पाणाउं, तत्थ आउ-प्राणविधानं सव्वं सभेयं अन्ने य प्राणा वन्निता, तस्स पयपरिमाणं एगा पयकोडी छप्पन्नं च पदसयसहस्साणि । तेरसमं किरियाविसालं, तत्थ कायकिरियाहिंसादओ

विसालत्ति सभेया संजमकिरियाओ बंधकिरियाविहाणा य, तस्सवि पयपरिमाणं णव कोडीओ । चोद्दसमं लोगबिंदुसारं, तं च इमम्मि लोए सुअलोए वा बिंदुमिव अक्खरस्स सव्वुत्तमं सव्वक्खरसन्निवायपरितत्तणओ लोगबिन्दुसारं भणियं, तस्स य पयपरिमाणं अद्धत्तेरसपयकोडीओ । से तं पुव्वगते ॥

'से किं त'मित्यादि, अनुरूपः अनुकूलो वा योगोऽनुयोगः, सूत्रस्य निजेनाभिधेयेन सार्द्धमनुरूपः संबंध इत्यर्थः, स च द्विविधः प्रज्ञप्तस्तद्यथा-मूलप्रथमानुयोगश्च गण्डिकानुयोगश्च, 'से किं त'मित्यादि, इहैकवक्तव्यताप्रणयनान्मूलं तावत्तीर्थकरास्तेषां प्रथमः-सम्यक्त्वाप्तिलक्षणपूर्वभवादिगोचरोऽनुयोगो मूलप्रथमानुयोगः, तथा चाह-'मूलपढमाणुयोगे ण'मित्यादि, सूत्रसिद्धं यावत् 'से तं मूलपढमाणुयोगे '। 'से किं त'मित्यादि,इहैकवक्तव्यतार्थाधिकारानुगता गण्डिका उच्यन्ते तासामनुयोगः-अर्थकथनविधिः गण्डिकानुयोगः,तथा चाह-'गंडियाणुयोगे ण'मित्यादि,तत्थ कुलगरगंडियासु कुलगराणं विमलवाहणादीणं पुव्वजम्मणामादि कहिज्जइ,एवं सेसासुवि अभिधाणवसतो भावेयव्वं जाव चित्तंतरगंडियाओ,चित्राः-अनेकार्था अन्तरे-ऋषभाजिततीर्थकरान्तरे गण्डिका-एकवक्तव्यताधिकारानुगताः, एतदुक्तं भवति-ऋषभाजिततीर्थकरान्तरे तद्वंशजभूपतीनां शेषगतिगमनव्युदासेन शिवगतिगमनानुत्तरोपपातप्राप्तिप्रतिपादिकाश्चित्रान्तरगण्डिका इति । एयासिं परूवणे पुव्वायरिएहिं इमो विही दिट्ठो—

आदिच्चजसाईणं उसभस्स पउप्पए णरवतीणं । सगरसुताण सुबुद्धी इणमो संखं परिकहेइ ॥१॥ चोद्दस लक्खा सिद्धा णिवतीणिक्को य होति सव्वट्ठे । एक्किक्कट्ठाणे पुण पुरिसजुगा होंतऽसंखेज्जा ॥२॥ पुणरवि चोद्दसलक्खा सिद्धा णिवतीण दोन्नि सव्वट्ठे।

दुगठाणेवि असंखा पुरिसजुगा होंति णायव्वा ॥ ३ ॥ जाव य लक्खा चोद्दस सिद्धा पन्नास होंति सव्वट्ठे । पन्नासट्ठाणेऽवि तु पुरिसजुगा होंतिऽसंखेज्जा ॥ ४ ॥ एगुत्तरा उ ठाणा सव्वट्ठाणे य जाव पन्नासा । एवेक्केक्कगठाणे पुरिसजुगा होंतऽसंखेज्जा॥ ५ ॥ विवरीयं सव्वट्ठे चोद्दसलक्खा उ णिव्वुतो एगो । सच्चेव य परिवाडी पन्नासं जाव सिद्धीए ॥ ६ ॥ तेणं परं तु लक्खा दो दो ठाणा य समग वच्चंति । सिवगतिसव्वट्ठेहिं इणमो तेसिं विही होइ ॥ ७'। दो लक्खा सिद्धीए दो लक्खा नरवतीण सव्वट्ठे । एवं तिलक्ख चउपंच जाव लक्खा असंखेज्जा ॥ ८ ॥ सिवगतिसव्वट्ठेहिं चित्तंतरगंडिया ततो चउरो । एगा एगुत्तरिया एगादिबिउत्तरा बितिया ॥ ९ ॥ ततिएगादितिउत्तरा तिगमादिबिउत्तरा चउत्थेयं । पढमाए सिद्धिक्को दोन्नि य सव्वट्ठसिद्धम्मि ॥१०॥ तत्तो तिन्नि नरिंदा सिद्धा चत्तारि होंति सव्वट्ठे । इय जाव असंखेज्जा सिवगतिसव्वट्ठसिद्धेहिं ॥ ११ ॥ ताहे बिउत्तराए सिद्धिक्को तिन्नि होंति सव्वट्ठे । एवं पंच य सत्त य जाव असंखेज्ज दोन्नित्ति ॥ १२ ॥ एग चउ सत्त दसगं जाव असंखेज्ज होंति दोन्नित्ति । सिवगतिसव्वट्ठेहिं तिउत्तराए मुणेयव्वा ॥१३॥ ताहे-तियगाइ बिउत्तराए अउणत्तीसं तु तितग ठावेतुं । पढमे णत्थि क्खेवो सेसेसु इमो भवे खेवो ॥ १४ ॥ दुग पण णवगं तेरस सत्तरस दुवीस छच्च अट्ठेव । बारस चोदस तह अट्ठवीस छव्वीस पणुवीसा ॥ १५ ॥ एक्कारस तेवीसा सीयाला सतरि सतहत्तरी तह य । इग दुग सत्तासीई एगुत्तरिमेव बावट्ठी ॥ १६ ॥ अउणत्तरि चउवीसा छायाल सयं तहेव छव्वीसा । एए रासीक्खेवा तिगअंतंता जहाकमसो ॥ १७ ॥ सिवगतिसव्वट्ठेहिं दो दो ठाण विसमुत्तरा णेया । जावुणतीसट्ठाणे उणतीसं पुण छवीसाए ॥१८॥ विसमुत्तरा य पढमा एवमसंख विसमुत्तरा णेया । सव्वत्थवि अंतिल्लं अन्नाए आदिमं ठाणं ॥ १९ ॥ अउणत्तीसं वारे ठावेउं णत्थि पढमए खेवो । सेसेसुऽडवीसाए सव्वत्थ दुगादिओ खेवो ॥ २० ॥

सिवगतिपढमादीए वितियाए तह य होति सव्वट्ठे । इय एगंतरियाइं सिवगइसव्वट्ठठाणाइं ॥ २१ ॥ एवमसंखेज्जाओ चित्तंतरगंडियाओ णेयव्वा । जाव जियसत्तुराया अजियजिणपिया समुप्पन्नो ॥ २२ ॥ एवं गाहाहिं चित्तंतरगंडियाओ समत्ताओ । इमा य एयासिं ठवणा—

एत्तिया लक्खा सिद्धिगया
एत्तिया सव्वट्ठ गया,

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ५० |

एवं जाव असंखा पुरिसजुगा सिद्धा एसा पढमा, अओ परं

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ५० |
| १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ |

सव्वट्ठंपि गया एत्तिआ लक्खा
सिद्धा एत्तिया लक्खा ॥ एवंपि असंखेज्जा पुरिसजुगा सिद्धा, एसा बीया, अओ परं

सव्वट्ठेवि गया एत्तिया लक्खा,
सिद्धा एत्तिया लक्खा

| | | | | | |
|---|---|---|---|---|---|
| २ | ३ | ४ | ५ | ६ | ७ |
| २ | ३ | ४ | ५ | ६ | ७ |

एवं जाव असंखेज्जा आवलिया,

दुगाइएगुत्तरा दोवि गच्छंति

| | | | | |
|---|---|---|---|---|
| १ | ३ | ५ | ८ | ९ |
| २ | ४ | ६ | ८ | १० |

आवलिया दूरगमणओ पंचासीइमे ठाणे चिट्ठंति तइया गंडिया, अतः परं चतस्रो गण्डिका एकोत्तरिकादिकाः प्रदर्श्यन्ते-शिवगतौ सर्वार्थे च एवं असंखेज्जा चित्तंतरगंडिया, एगाइ एगुत्तरिया पढमा णेया, सिद्धा एत्तिया सव्वट्ठे एत्तिया चेव, एवं जाव असंखेज्जा, एगादिबिउत्तरा

| | | |
|---|---|---|
| १ | ५ | ९ |
| ३ | ७ | ११ |

बितिया चित्तंतर गण्डिया, सिद्धा एत्तिया सव्वट्ठे एत्तिया चेव, एवं जाव असंखेज्जा चित्तंतरगंडिया, एगादितिउत्तरा

| | | |
|---|---|---|
| १ | ७ | १३ |
| ४ | १० | १६ |

तइया ततश्चतुर्थी त्र्यादिका द्व्यादिविषमोत्तरप्रक्षेपा एकोनत्रिंशत्रिदंकान् संस्थाप्य निदर्श्यते,

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| एत्तिया सव्वट्ठे | ३ | ८ | १६ | २५ | ११ | १७ | २९ | १४ | ५० | ८० | ५ | ७४ | ७२ | ४९ | २९ |
| शिवगतौ सिद्धा | ५ | १२ | २० | ९ | १५ | ३१ | २८ | २६ | ७३ | ४ | ९० | ६५ | २८ | १०३ | ० |

एत्तिया पुणोवि सिवगतौ सव्वट्ठसिद्धौ तु

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २९ | ३४ | ४२ | ५१ | ३७ | ४३ | ५५ | ४० | ७६ | १०६ | ३१ | १०० | ९८ | ७१ | ५५ |
| ३१ | ३८ | ४६ | ३५ | ४१ | ५७ | ५४ | ५२ | ९९ | ३० | ११६ | ९१ | ५३ | १२५ | ० |

एवं पुनः पुनः पञ्चाशदादौ कृत्वा एकोनत्रिंशत् स्थानानि संस्थाप्य द्व्यादिप्रक्षेपकेन यावत् पश्चिमस्थाने एकाशीतिर्भवति

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५५ | ६० | ६८ | ७७ | ६३ | ७९ | ८१ | ६६ | १०२ | १३२ | ५७ | १२६ | १२४ | १०१ | ८१ |
| ५७ | ५४ | ७२ | ६१ | ६७ | ८३ | ८० | ७८ | १२५ | ५६ | १४२ | ११७ | ७९ | १५५ | ० |

अनेन उत्तरा असंख्येयाश्चित्रान्तरगण्डिका नेया, सेसं गाहाणुसारेणं नेयव्वं जाव असंखेज्जा, शेषं निगदसिद्धं यावत् ' से तं अणुओगे '

'से किं तं'मित्यादि ॥ चूडा इव चूडा, इह दृष्टिवादे परिकर्मसूत्रपूर्वानुयोगोक्तानुक्तार्थसंग्रहपरा ग्रन्थपद्धतयश्चूडा इति, एताश्चाद्यानां चतुर्णामेव पूर्वाणां भवन्ति, न शेषाणामिति, अत एवाह—' आदिल्लाण ' मित्यादि, संख्याताः । सम्प्रति पूर्वाणामियं यथासंख्यं " चउ बारसट्ठ दस या हवंति चूडा चउण्ह पुव्वाणं । एए य चूलवत्थू सव्वुवरिं किल पढिज्जंति ॥ १ ॥ " शेषमानिगमनं सूत्रसिद्धमेव, नवरं 'संखेज्जा वत्थु'त्ति पणुवीसुत्तराणि दो सयाणि, 'संखेज्जा चूलवत्थु' त्ति चउतीसं ॥ साम्प्रतमोघतो द्वादशांगविषयमेव दर्शयन्नाह—

'इच्चेय' मित्यादि ॥( ५८-२४७ )॥ इत्येतस्मिन् द्वादशाङ्गे गणिपिटक इति पूर्ववत्, अनन्ता भावाः प्रज्ञप्ता इति योगः, तत्र भवन्तीति भावाः जीवादयः पदार्थाः, एते च जीवपुद्गलानन्तत्वात् अनन्ता इति, तथा अनन्ता अभावाः, सर्वभावानामेव पररूपेणासत्त्वात् त एवानन्ता अभावा इति, स्वपरसत्ताभावाभावोभयाधीनत्वात् वस्तुतत्त्वस्य, तथाहि-जीवो जीवात्मना भावोऽजीवात्मना चाभावोऽन्यथाऽजीवत्वप्रसंगाद्, अत्र बहु वक्तव्यं तत्तु नोच्यते गमनिकामात्रत्वात् आरम्भस्य, अन्ये तु धर्मापेक्षया अनन्ता भावाः अनन्ता अभावाः प्रतिवस्त्वस्तित्वनास्तित्वाभ्यां प्रतिबद्धा इति व्याचक्षते, तथाऽनन्ता हेतवः, तत्र हिनोति-गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुः, ते चानन्ता वस्तुनोऽनन्तधर्मात्मकत्वात् तत्प्रतिबद्धधर्मविशिष्टवस्तुगमकत्वाच्च हेतोः, सूत्रस्य चानन्तगमपर्यायात्मकत्वादिति, यथोक्तहेतुप्रतिपक्षतोऽनन्ता अहेतवः, तथाऽनन्तानि कारणानि मृत्पिण्डतन्त्वादीनि घटपटादिनिर्वर्त्तकानि, तथाऽनन्तान्यकारणानि, सर्वकारणानामेव कार्यान्तराकारणत्वात्, न हि मृत्पिण्डः पटं निर्वर्त्तयतीति, एवं भावाभावाः हेत्वहेतवः कारणाकरणानि, जीवाः-प्राणिनस्तथा अजीवा-द्व्यणुकादयः, तथा भव्याः-अनादिपारिणामिकभव्यभावयुक्ताः, एतेऽनन्ताः प्रज्ञप्ताः, तथा अभव्याः-अनादिपारिणामिकाभव्यभावयुक्ताः, एतेऽनन्ताः प्रज्ञप्ताः इति योगः, तथा सिद्धा अनन्ताः, तथा अनन्ता असिद्धाः प्रज्ञप्ता इति, इह भव्याभव्यानामानन्त्येऽभिहिते अनन्ता असिद्धा इति यत् पुनरभिधानं तत् सिद्धेभ्योऽनन्तगुणत्वख्यापनार्थमिति ॥ साम्प्रतं द्वादशांगविराधनाराधनानिष्पन्नं त्रैकालिकं फलमुपदर्शयन्नाह--'इच्चेय' मित्यादि, इत्येतद् द्वादशांगं गणिपिटकं अतीतकाले अनन्ता जीवा आज्ञया विराध्य चतुरन्तं संसारकान्तारं 'अणुपरियट्टिंसु' त्ति अनुपरावृत्तिमन्त आसन्, इदं हि द्वादशांगं सूत्रार्थोभयभेदेन त्रिविधं, ततश्चाज्ञया-सूत्राज्ञयाऽभिनिवेशतोऽन्यथापाठादिलक्षणया विराध्य

अतीतकाले अनन्ता जीवाश्चतुरन्तं संसारकान्तारं—नारकतिर्यङ्नरामरविविधवृक्षजालदुस्तरं भवाटवीगहनमित्यर्थः, अनुपरावृत्ता-आसन् जमालिवत्, अर्थाज्ञया पुनरभिनिवेशतोऽन्यथाप्ररूपणादिलक्षणया गोष्ठामाहिलवत्, उभयाज्ञया पुनः पंचविधाचार परिज्ञानकरणोद्यतगुर्वादेशादिलक्षणया गुरुप्रत्यनीकद्रव्यलिङ्गधार्यनेकश्रमणवत्, अथवा द्रव्यक्षेत्रकालभावापेक्षयाऽऽगमोक्तानुष्ठा-नमेवाज्ञा, एतद्विराधनयैवानुपरावृत्ता आसन्, उक्तंच—"सव्वाओवि गतीओ अविरहिया णाणदंसणधरेहिं" इत्यादि, 'इच्चेय'-मित्यादि, गतार्थमेव, नवरं 'परित्ता जीवा' इति संख्येया जीवाः, वर्त्तमानविशिष्टविराधकमनुष्यजीवानां संख्येयत्वात्, 'अणुपरियट्टंति' त्ति अनुपरावर्त्तन्ते, भ्रमन्तीत्यर्थः, 'इच्चेत'मित्यादि, इदमपि भावितार्थमेव, नवरं 'अणुपरियट्टिस्संति' त्ति अनुपरावर्त्तिष्यन्ते, पर्यटिष्यन्ति इत्यर्थः॥ 'इच्चेत' मित्यादि, इत्येतद् द्वादशांगं गणिपिटकं अतीतकालेऽनन्ता जीवा आराध्य चतुरन्तं संसारकन्तारं 'वीतिवइंस्वि' ति व्यतिक्रान्तवन्तश्चतुर्गतिकसंसारोल्लंघनेन मुक्तिमवाप्ता इत्यर्थः, 'इच्चेय' मित्यादि, गतार्थं नवरं 'वीइवयंति' त्ति व्युत्क्रामन्ति, 'इच्चेद' मित्यादि गतार्थमेव, नवरं 'वितीवयिस्संति' त्ति व्युत्क्रामिष्यन्ते, एतत्प्रभा-वात् सेत्स्यन्तीत्यर्थः। यदिदमनिष्टेतरभेदभिन्नं फलं प्रतिपादितमेतत् सदाऽवस्थायित्वे सति द्वादशांगस्योपजायत इत्यत आह-'इच्चेय' मित्यादि, इत्येतद् द्वादशांगं गणिपिटकं न कदाचिन्नासीद् अनादित्वात्, न कदाचिन्न भवति सदैव भावात्, न कदाचि-न्न भविष्यति, अपर्यवसितत्वात्, किं तर्हि?-'भुविं चे' त्यादि, ध्रुवत्वादेव नियतं, पञ्चास्तिकायेषु लोकवचनवत्, नियतत्वादेव शा-श्वतं, समयावलिकादिषु कालवत्, शाश्वतत्वादेव वाचनादिप्रदानेऽप्यक्षयं, गंगासिन्धुप्रवाहेऽपि पौण्डरीकह्रदवत्, अक्षयत्वादेवाव्ययं, मानुषोत्तराद् बहिःसमुद्रवत्, अव्ययत्वादेव स्वप्रमाणेऽवस्थितं, जम्बूद्वीपादिवत्, अवस्थितत्वादेव नित्यमाकाशवत्; साम्प्रतं दृष्टा-

न्तमाह-'से जहा णामे'त्यादि, तद्यथा नाम पंचास्तिकायाः-धर्मास्तिकायादयः न कदाचिन्नासन् न कदाचिन्न सन्ति न कदाचिन्न भविष्यन्ति, अभूवन् भवन्ति भविष्यन्ति च, ध्रुवा इत्यादि पूर्ववत्, 'एवामेवे' त्यादि निगमनं निगदसिद्धमेव। 'से समासओ' इत्यादि, तद् द्वादशांगं समासतश्चतुर्विधं प्रज्ञप्तं इत्यादि, प्रायो गतार्थमेव, नवरं द्रव्यतः श्रुतज्ञानी उपयुक्तः सन् सर्वद्रव्याणि जानाति पश्यतीत्यत्राभिन्नदशपूर्वधरादिः श्रुतकेवली परिगृह्यते, तदारतो भजना, सा पुनर्मलविशेषतो ज्ञातव्येति, अत्राह--ननु पश्यतीति कथं?, सकलगोचरदर्शनायोगाद्, अत्रोच्यते, प्रज्ञापनायां श्रुतज्ञानपश्यत्तायाः प्रतिपादितत्वादनुत्तरविमानादीनां चालेख्यकरणात् सर्वथा चादृष्टस्यालेख्यकरणानुपपत्तेः, एवं क्षेत्रादिष्वपि भावनीयमिति, अन्ये तु न पश्यतीत्यभिदधति ॥ साम्प्रतं संगहगाथामाह—

'अक्खर सन्नी' त्यादि ॥(*८६-२४९)॥ इयं गतार्थैव, नवरं सप्ताप्येते सप्रतिपक्षाः, ते चैवं-अक्षरश्रुतमनक्षरश्रुतमित्यादि, इदं पुनः श्रुतज्ञानं सर्वातिशयरत्नसमुद्रकल्पं, तथा प्रायो गुर्वायत्ततत्वात् पराधीनं, अतो विनेयानुग्रहार्थं यो यथा चास्य लाभस्तथा दर्शयन्नाह—

'आगम०' गाहा॥(*८७-२८९)॥ आगमनमागमः, आङ अभिविधिमर्यादार्थत्वात् अभिविधिना मर्यादया वा गमः-परिच्छेद आगमः, स च केवलमत्यवधिलक्षणोऽपि भवति अतस्तद्व्यवच्छित्त्यर्थमाह— शास्यतेऽनेनेति शास्त्रं-श्रुतं, आगमग्रहणं तु षष्टितंत्रादिकुशास्त्रव्यवच्छेदार्थं, तेषामनागमत्वात्, सम्यक्परिच्छेदात्मकत्वाभावादित्यर्थः, शास्त्रतया च रूढत्वात्, तत आगम-

श्चासौ शास्त्रं च आगमशास्त्रं तस्य ग्रहणमिति समासः, गृहीतिर्ग्रहणं, यद् बुद्धेर्गुणैर्वक्ष्यमाणलक्षणैः करणभूतैरष्टभिर्दृष्टं तद् ब्रुवते श्रुतज्ञानस्य लाभः श्रुतज्ञानलाभस्तं तदेव ग्रहणं ब्रुवते, के ?-पूर्वेषु विशारदा-विपश्चितो धीराः, व्रतानुपालने स्थिरा इत्यर्थः, अयं गाथार्थः ॥ बुद्धिगुणैरष्टभिरित्युक्तं ते चामी—

'सुस्सूसति०' गाहा ॥(*८८-२४९)॥ विनययुक्तो गुरुमुखात् श्रोतुमिच्छति शुश्रूषते, पुनः पृच्छति प्रतिपृच्छति, तत् श्रुतमशंकितं करोतीति भावार्थः, पुनः कथितं सच्छृणोति, श्रुत्वा गृह्णाति, गृहीत्वा चेहते-पर्यालोचयति, किमिदमित्थमुतान्यथेति, चशब्दः समुच्चयार्थः, अपिशब्दात् पर्यालोचयन् किंचित् स्वबुध्याऽप्युत्प्रेक्षते, ततस्तदनन्तरमपोहते च, एवमेतद्यदादिष्टमाचार्येणेति, पुनस्तमर्थमागृहीतं धारयति करोति च सम्यक् तदुक्तमनुष्ठानमिति, तदुक्तानुष्ठानमपि च श्रुतप्राप्तिहेतुर्भवति, तदावरणक्षयोपशमादिनिमित्तत्वात्तस्येति, अथवा यद्यदाज्ञापयति गुरुस्तत् सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छतीति, पूर्वसन्दिष्टश्च सर्वकार्याणि कुर्वन् पुनः पृच्छति प्रतिपृच्छति पुनरादिष्टः सन् सम्यक् शृणोति, शेषं पूर्ववत् ॥ बुद्धिगुणा व्याख्यातास्तत्र शुश्रूषतीत्युक्तं, इदानीं श्रवणविधिप्रतिपादनायाह—

'मूअं'० गाहा ॥(*८९-२४९)॥ मूकमिति मूकं शृणुयात्, एतदुक्तं भवति-प्रथमश्रवणे संयतगात्रस्तूष्णीं खल्वासीत, तथा द्वितीये हुंकारं च, ईषद्वन्दनं कुर्यादित्यर्थः, तृतीये बाढकारं कुर्यात्-बाढमेवमेतन्नान्यथेति, चतुर्थश्रवणे गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्, कथमेतदिति, पंचमे तु मीमांसां कुर्यात्, मातुमिच्छा मीमांसा प्रमाणजिज्ञासेतियावत्, ततः षष्ठे

श्रवणे तदुत्तरोत्तरगुणप्रसंगपारगमनं चास्य भवति, परिनिष्ठा सप्तमे श्रवणे भवति, एतदुक्तं भवति-गुरुवदनुभाषत एव सप्तमे श्रवणे इति ॥ एवं तावत् श्रवणविधिरुक्तः, इदानीं व्याख्यानविधिमभिधित्सुराह—

'सुत्तत्थो०' गाहा ॥(*९०-२४९)॥ सूत्रार्थमात्रप्रतिपादनपरः सूत्रार्थः, अनुयोग इति गम्यते, खलुशब्दस्त्वेवकारार्थः, स चावधारणे, एतदुक्तं भवति-गुरुणा सूत्रार्थमात्राभिधानलक्षण एव प्रथमोऽनुयोगः कार्यः, मा भूत् प्राथमिकविनेयानां मतिमोहः, द्वितीयोऽनुयोगः सूत्रस्पर्शिकनिर्युक्तिमिश्रः कार्य इत्येवंभूतो भणितो जिनैश्चतुर्दशपूर्वधरैश्च, तृतीयश्च निरवशेषः, प्रसक्तानुप्रसक्तमप्युच्येत एवंलक्षणो निरवशेषः कार्य इति 'एष' उक्तलक्षणो विधानं विधिः प्रकार इत्यर्थो 'भणितः' प्रतिपादितो जिनादिभिः, क्व ?-सूत्रस्य निजेनाभिधेयेन सार्धमनुकूलो योगोऽनुयोगः सूत्रान्वाख्यानमित्यर्थः, तस्मिन्ननुयोग इति गाथार्थः, आह-परिनिष्ठा सप्तम इत्युक्तं, त्रयश्चानुयोगप्रकाराः, तदेतत् कथमिति, अत्रोच्यते, विनेयगणं विज्ञाय त्रयाणामन्यतमप्रकारेण सप्तवारकरणादविरोधादित्योघविनेयविषयं तावत् सूत्रं, न पुनः स एव नियमविधिः, उद्घट्टितज्ञविनेयानां सकृत् श्रवण एवाशेषग्रहणदर्शनादलं विस्तरेण ॥

'सेत'मित्यादि ॥(५९-२५९)॥ तदेतत् श्रुतज्ञानमिति निगमनं, 'सेत'मित्यादि, तत् परोक्षमिति निगमनमेव। नन्द्यध्ययनविवरणं समाप्तम् ॥

यदिहोत्सूत्रमज्ञानाद् , व्याख्यातं तद् बहुश्रुतैः । क्षन्तव्यं कस्य सम्मोहश्छद्मस्थस्य न जायते ? ॥ १ ॥
नन्द्यध्ययनविवरणं कृत्वा यदवाप्तमिह मया पुण्यम्। तेन खलु जीवलोको लभतां जिनशासने नन्दीम् ॥ २ ॥

कृतिः सिताम्बराचार्यजिनभट्टपादसेवकस्याचार्यश्रीहरिभद्रस्येति। नमः श्रुतदेवतायै भगवत्यै। समाप्ता नन्दिटीका॥ग्रन्थाग्रं २३३६॥

स्वर्गस्थसुविहितावतंसकन्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपट्टाम्बराद्वितीयप्रद्योतनसद्धर्मरक्षकश्रीमद्विजयकमलसूरिसार्वभौमपादपद्मेभ्यो नमो नमः ।

श्रीजिनदासगणिमहत्तरवर्य्यविनिर्मितचूर्णिश्रीमद्धरिभद्रसूरिसंक्रन्दनसंदृब्धवृत्तिसनाथीकृतम्

वन्द्यवर्य्यश्रीमद्देववाचकवर्य्यविरचितम्

# श्रीमन्नन्दीसूत्रम् ।

Ho gai hai

श्रीसंशोधयितृपादाः—

प्रातःस्मरणीयश्रीमद्विजयकमलसूरिविराद्यपट्टालंकारप्रौढगीतार्थपूज्यप्रवेकाचार्यश्रीमद्विजयदानसूरीशितारः

श्रीगुर्जरदेशीयभृगुकच्छनगरवास्तव्यश्रेष्ठिश्रीताराचन्द्रात्मजपीताम्बरस्य भार्याश्रीमती-'ऊजम'-भगिन्या पीताम्बरात्मजवीरचन्द्रस्य
भार्याश्रीमती-'हरकोर-'भगिन्या च स्वश्रेयोऽर्थं प्रदत्तद्रव्यसहाय्येन सूर्यपुरनिवासि श्रीयुतरणछोडात्मजहीरालालेन
इन्दौरनगरे श्रीजैनबन्धुमुद्रणालये श्रेष्ठीजुहारमलमिश्रीलालपालरेचा द्वारा मुद्रापयित्वा
साधुसाध्वीपठनार्थ प्राकाश्यपथं समानीतम्.

वीर सं. २४५७ ]  पण्यम्--पठनपाठनम्.  विक्रम सं. १९८८  (प्रतयः २५०)  [ A. D. 1931

# नन्द्युपोद्घातः

प्रेमोत्तुङ्गनगप्रभेदनपविर्द्वेषाब्धिसंवर्त्तकः, कोपध्वान्तसमापनैकसविता मानेभकण्ठीरवः ।
मायावारिधरप्रचण्डपवनो लोभाटवीपावकः, विश्वे रक्षतु नः प्रतापनृपतिर्जैनेश्वरो जङ्गिमनः ॥ १ ॥
यस्यानन्यकलाभृतोऽन्तिमविभोः पट्टावलीपुष्करे, भूयः कोविदरत्ननीरधिवरे सौहार्दपीयूषभाः ।
आप्ताज्ञागुरुभक्तिचारुपयसः कुर्वन्ति वृद्धिं सदा, कुन्दद्युतियशाः सदा विजयते श्रीदानसूरीशिता ॥ २ ॥
विनेयविमलज्ञप्ति-कैरविणीकलाभृते । ऐंकारसमबीजायै, सरस्वत्यै सदा नमः ॥ ३ ॥

अथाधुनोपक्रम्यते पारमेश्वरप्रवचनपीयूषपानपीनचेतसां विनोदाय कोविदकुलचमत्कारकृद्वैदुष्यवैभवशालिश्रीमज्जिनदासगणिमहत्तरविनिर्मितचूर्णिचतुश्चत्वारिंशदधिकचतुर्दशशतप्रकरणप्रणयनजनितजगज्जन्तूपकारयाकिनीमहत्तरासूनुविद्वद्वृन्दवृन्दारकोत्तमांगविधुननशेमुषीशालिभगवच्छ्रीमद्धरिभद्रसूरिसंदृब्धटीकासनाथीकृतमिदं श्रीनंदीसूत्रं देवार्यशासननभोनभोमणिभगवद्देववाचकवर्य्यविरचितम् । एतेषां त्रयाणां सूत्रकृच्चूर्णिकारटीकाविनिर्मातृवर्याणां मान्यमतल्लिकानां प्रस्तावे यत्किंचिद्वक्तुं प्रयत्यते ।

तत्राद्यस्तावत् देववाचकपूज्यप्रवरा एव नन्दीसूत्रसूत्रणसूत्रधाराः आसन् श्रीनन्दीसूत्रस्य सप्तदशमसूत्रटीकायां 'देववाचकविरचितोऽयं ग्रन्थः' इति श्रीहरिभद्रसूरिवचनात् । ते च देवर्द्धिगणिक्षमाश्रमणापरनामानोऽपि संभाव्यन्ते, यतस्त-

द्विपृपत्क- त विक्रमसंवत्सरे स्मारमणीरमणाः संजाता इत्यनेकप्रमाणैस्तावज्ज्ञातुं शक्यते। प्रतीयते चैवं सूरिसुरर्षमाणां विद्यमानता षष्ठमवैक्रमशताब्द्यामेवाविगानतया।

अत्र कल्पनाश्वारूढा आप्तोक्तिश्रद्धामुखरज्जुपराङ्मुखाः स्वातन्त्र्यवायुवर्मभृतः पतितपुरोगाः स्वकीयवचनाग्रे त्रिकालाबाध्यागमवाचमप्यसत्यतया भ्रान्त्यादिदोषजन्यतयाऽन्यथा प्रख्यापयितुमपि बद्धकक्षाः प्रलपन्ति केचित्— "ते सूरिवरा अष्टमशताब्द्यां प्रादुष्पन्ति स्म" इति। प्रमाणयन्ति च ते प्रज्ञाप्राग्भारप्रकम्पमाना वक्ष्यमाणविचारचातुरीचर्यया यथा—'आद्यं तावत् सूरिवरैस्तैः स्वसंदब्धनंदीसूत्रटीकायां चूर्णिकृज्जिनदासगणिमहत्तरप्राक्तनप्राकृतव्याख्याया अनेकावतरणानि यथायथं समुद्धृतानि दृग्गोचरीक्रियन्ते, चूर्णिश्च शकसंवति सिद्धिनिधिविशिखामिते (त्रयस्त्रिंशदधिकसप्तशतविक्रमसंवत्सरे) समाप्ता बभूवेति प्रकटं प्रमीयतेऽन्तिमभागतः। तस्माच्चूर्णिकृदनु तेषामस्तित्वमष्टमशतसंवत्सर्यां संभाव्यते' इति एतदप्यापातत एव रमणीयतामञ्चति। आद्यं तावच्चूर्णिकृत्काल एव निश्चेतुमशक्योऽस्ति, यत्पूर्वमुक्तं चूर्णिकृत्परिचयप्रस्तावे। तस्मात् "शकराज्ञः पंचसु वर्षशतेषु व्यतिक्रांतेष्वष्टनवतिषु नंद्यध्ययनचूर्णिः समाप्ता" इत्यपि केनचित् प्रक्षिप्तमिव विभाव्यतेऽन्यत्र प्रत्यन्तरे संवत्सरान्तरस्यापि दृश्यमानत्वात्। ततो हारिभद्र्यां टीकायां समुद्धृतानि चूर्णिकारावतरणान्यपि न तयोः पौर्वापर्यनियामकानि। यतः श्रीहरिभद्रसूरिवरैश्चूर्णिकृतां चूर्णिकारैष्टीकाकृतां वा वाक्यानि समुद्धृतानीत्यत्र विनिगमकाभावप्रसञ्जनं दुर्वारम्। यदुक्तं 'नंदीसूत्रबृहट्टीकायामाचाराङ्गसूत्रविषयकव्याख्यावसरे श्रीमन्मलयगिरिपादाः "तथाचाह चूर्णिकृत्" इत्युक्त्वा नंदीचूर्णिनिष्ठं कंचित् पाठमुद्धरयांचक्रुस्तमेव पाठं श्रीहरिभद्रसूरयः स्वटीका-

यामपि' इति तदपि न चूर्णिकारटीकानिर्मातृवर्य्ययोः पूर्वापरतां साधयितुमलम्, यतः पश्चात्तनानामपि चूर्णिकृतां पाठस्यापि श्रीमन्मलयगिरिदेवैरुल्लेखकरणं संभावयितुं शक्यते । यदि च स्वपार्श्वे तदवसरे चूर्णिस्स्यात्तदा प्राक्तनीमपि टीकामुपेक्ष्यार्वाक्तनचूर्णित एवावतरणसमुद्धरणं न बाधावहम् । एवं यदा चूर्णिकारटीकाकृत्पूर्वापरभावसंभावना वैयर्थ्यशालितामियर्ति तदा तव कल्पनाऽपि न सिद्ध्यतीति स्फुटमेवावगम्यते । यत एवमपि सम्भाव्यते यदुत श्रीनंदीसूत्रोपरि चूर्ण्यन्तराण्यपि प्राकाले भवेयुस्तत्रत्यावतरणान्युभयत्रापि टीकाचूर्ण्योः पुनः समीचीनतां घटन्ते यासां वर्तमानकाले समुच्छेद एवाकामेनापि त्वया कक्षीकरणीयः बहवोऽप्यनर्घ्यग्रंथरत्नाः समुच्छेदसंपत्तिसमापन्ना इदानींतनसमये दरीदृश्यन्ते । यथाऽऽवश्यकोपरि प्राग्बह्व्यष्टीका अभवन्निति श्रीहरिभद्रसूरिवासवा आवश्यकटीकामंगलानुष्ठाने प्राहुः—"यद्यपि मयाऽन्यैस्तथान्यैः कृतास्य विवृत्तिस्तथापि संक्षेपात्। तद्रुचिसत्त्वानुग्रहहेतोः क्रियते प्रयासोऽयमिति"॥ अतोऽवगन्तुं शक्यमस्ति यदावश्यकस्यैका बृहट्टीका प्रस्तुतसूरिदृब्धा चतुरशीतिसहस्रश्लोकप्रमाणप्रघोषा अनेका च अपराष्टीका अज्ञातपरिमाणाद्यो वरीवर्तन्तेस्म प्राक्तनानेहसि । एवं प्राक्संभावितनंदीसूत्रचूर्ण्यन्तराण्यपि न कल्पनात्मकानि ।

द्वितीया विचारचातुरी पुनस्तेषां कल्पनाकृपिकृषिवलानां विश्वविख्यातोपमितिभवप्रपंचाख्यकथामनुधावति । 'तत्रोपमितिभवप्रपंचाकाराः स्वकीयकथाप्रांतप्रशस्तावाचार्यश्रीमद्धरिभद्रसूरिवरस्य श्लोकं कर्त्तुकामाः त्रिभिः श्लोकैः स्वधर्मगुरुतया प्रख्यापयामासुस्तद्यथा—

"आचार्यो हरिभद्रो मे, धर्मबोधकरो गुरुः । प्रस्तावे भावतो हन्त, स एवाद्ये निवेदितः ॥ १ ॥

प्रभावनादृते नान्यत्किंचित् प्रदर्शितुमभवत्' इत्याहुः। एतद् बालजल्पितम् स्वकीयानभिज्ञतासूचकमेवार्हतशास्त्रपरिचये। यतः प्रसिद्धपंचमहाव्रतपरिपुष्टशरीरामार्हतीप्रव्रज्यां प्रतिपन्ना ते विश्वविश्वोपकारका जैनाचार्यधुरन्धरा न प्राणान्तेऽपि मृषा वदेयु इति तैः कल्पनाभरक्रान्तहृदयैर्न विस्मर्त्तव्यम्। यदि चरित्रोपनायकसमयोपलम्भाभावे तन्न प्रतिपादितं भवेत् तदा नैष चरित्रसंदब्धृपादानां दोषः न वा चरित्रनायकस्य किन्तु तादृक्शंकाक्रांतचेतसामुन्मत्तचित्तस्यैव, यद्यपि चरित्ररचयितृवरै-रुपलम्भाभावे न लिखितमिति समीचीनं किन्तु चरित्रनियन्तृवरैः स्वीयरचनायामेव यो स्वसमयपरिचयाद्युल्लेखो न विहितः इत्यपि न तेषां पूज्यप्रवराणां पूर्वोक्तोद्देशज्ञापकः किन्तु तेषामनन्यनिस्पृहिशिरःशेखरतापरिचायक एव। ते पूज्यप्राग्रहराः सर्वतंत्रस्वतन्त्राः सर्वज्ञाज्ञापरवशा एव नाधुनिकपिंडपेशलप्रज्ञानां कल्पनापरवन्तो बभुवुः। प्राक्तनाचार्याग्रिमानां यथातथ्यप्रयासो जगज्जन्तूपचिकीर्षानुकुलः एवाभूत् न तु केवलं यद्वा तद्वा लेखनेनस्वीयधर्मप्रभावनाप्रवणः पूर्वोक्तजनमनोरंजकादिकार्यार्थ-मिति स्फुटमवगन्तुं शक्यते श्रद्धाञ्जनोन्मिलितनेत्रकैः यद्येतत्तथ्यवार्तातपोऽपि यदाधुनिकपवनान्धतमसास्कन्दितचक्षुषां न दृग्गोचरीभवति तदा स न कस्यचिदपि परस्य दोषः किंतु 'नो घूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषण' मितिन्यायेन स्वकीयाक्षिनिष्ठ एवेत्यलं विस्तरेण। प्रकृतमनुस्रियते। चूणिकृदस्तित्वप्रस्तावे कस्यांश्चिन्नन्दीसूत्रचूर्णिप्रतौ शकराज्ञः पंचमश-ताद्बी दृश्यते तथापि प्राक्तनानेकप्रतिमध्ये कुत्रचिदिमान्यक्षराण्येव नोपलभ्यन्ते कुत्रचित्त्वन्यथाऽपि दृश्यन्तेऽतस्तदक्षराणि प्रमाणास्पदानि न प्रतिभान्ति। ततो ये केचन बृहट्टीपणिकादिषु स्वाभिलापपूर्त्यर्थं शकराज्ञः पंचशताधिकाष्टनवतिसंवत्सरं प्रतिपादयन्ति तदपि प्रमाणानास्पदं द्रष्टव्यम्। यतः श्रीमद्विजयसेनसूरीश्वराः सेनप्रश्नीयाद्योल्लासेऽपि तथैवोल्लेखयामासुः—

स्वार्थोऽपि संगच्छते, अर्थात् भविष्यन्तमपि मां तादृग्ज्ञानबलेनेदृशं विह्वलचित्तं परिज्ञाय ललितविस्तरा विहिता। अन्यथा 'अनागतं''मदर्थैव' इत्यनयोः शक्यार्थवैयर्थ्यप्रसंगो दुरपसारणीयस्स्यात्। केचनात्र स्वेष्टसिद्ध्यर्थमभिनिविष्टमतयो धनविजयादयः 'अनागतम्' इत्यस्यानेकार्थपरतया व्यावर्णयन्ति यथा 'अनागतम्' इत्यस्य शाक्यमतमर्मादानार्थं गतं मां न आगतं दृष्ट्वा ललितविस्तरा निर्मिता इति। इदमपि स्वकीय वाग्विलासप्रतिपादकमेव। प्रसिद्धार्थहाने तदतिरिक्तार्थकल्पनायां च प्रमाणाभावात् 'मदर्थैवे'ति प्राक्पदार्थेन सह विरोधापत्तेश्च। 'मदर्थैवे'त्यस्याप्यर्थान्तरकल्पनायामिवकारशक्यार्थस्य वैफल्यापत्तेर्दुर्वारत्वाच्च। 'अनागतम्' इत्यस्यान्येऽर्थाः पुनः केवलं स्वीयसंवित्तिविपर्ययापादका एव, तादृक्क्लिष्टकल्पनायां प्रमाणादृष्टचरत्वात् शक्यार्थविद्यमानेऽपि लक्ष्यार्थकक्षीकरणे सर्वत्रविरोधापत्तेर्दुर्निवारत्वाच्चेत्यलं पल्लवितेन। एवमुपमितिप्रशस्तिवचनान्यपि श्रीहरिभद्रसूरिश्रीसिद्धर्षिगणिवरयोः समसमयं साधयितुं नालंभविष्णूनि। अपि च संप्रति प्रतिपादितोपमितिप्रशस्तिवचनात् उपमितिरचनाया विक्रमदशमशताब्दीकालीनत्वात् श्रीसिद्धर्षिप्रस्तुतसूरिप्रवेकयोः समसमयसिद्धिबद्धबुद्धयोऽग्रेसाधयिष्यमाणाष्टमशताब्दीपुष्करपतंगतां प्रस्तुतसूरिवरस्य कया युक्त्या साधयिष्यन्तीत्यपि तेषां तादृक्प्रतिभादर्श एव प्रतिफलितुं शक्यम्। नान्यत्र।

तृतीया तावत्तेषां पूज्यपादश्रीहरिभद्रसूरिवाचिणामस्तित्वस्याष्टमशताब्दीसाधकानां विचारवायुविहितादराणां कुवलयमालाभिधानप्राकृतकथामनुधावति। तथाहि 'श्रीकुवलयमालाख्यकथाकारोद्यतनसूरिप्रभवो दाक्षिण्यचिह्नापरनामानो स्वकीयकथाप्रान्तप्रशस्तौ निजगुरुपरम्परां प्राग् वर्णयित्वा विशिष्टोपकारिसंस्मरणार्थमेवं वर्णयामासुः—

"सीसेण तस्स एसा, हिरिदेवीदिन्नदंसणमणेण। रइया कुवलयमाला, विलसिरदक्खिन्नइंधेण ॥ १ ॥

दिन्नजहिच्छियफलओ, बहुकित्ती कुसुमरेहिराभोओ । आयरियवीरभद्दो, अहावरो कप्परुक्खोव्व ॥ २ ॥
सो सिद्धन्तम्मि गुरू, पमाणनाएण जस्स हरिभद्दो । बहुगन्थसत्थवित्थर-पयडसमत्तसुअसच्चत्थो ॥ ३ ॥" इति

अनुपदवर्त्तमानकारिकायां कुवलयमालानिर्मातारः प्रस्तुतसूरिशक्रान् प्रमाणतर्काध्यापकतया आचार्यवीरभद्रपादांश्च सिद्धान्तशिक्षकतया गुरुत्वेन व्याचक्षते । तेन कुवलयकारप्रस्तुतसूरिवर्य्ययोः समसमयोऽनुमीयते । कुवलयमाला च शकसप्तमशताब्द्यां वैक्रमनवमशताब्द्यां पूर्णा बभूवेति ज्ञायते प्रान्तश्लोकात्, तद्यथा—

" सगकाले वोलीणे, वरिसेण सएहि सत्तहि गएहि । एगदिणेणूणेहिं, रइआ अवरण्हवेलाए ॥ " इति

तस्मादपि प्रस्तुतसूरिसुत्राम्णो विद्यमानताष्टमशताब्द्यामेव विभाव्यते' इति ।

एतदप्यव्याबाधागमयुक्तिमुद्गरेण सशकलं खण्डितं मन्तव्यम् । 'पमाणनाएण जस्स हरिभद्दो' इत्येतावच्छन्दमात्रेण प्रमाणन्यायस्याध्यापकतया सूरिवरस्य प्रकल्पनं जंघालतया समुद्रलंघनमिव प्रतिभासते, तच्छब्दानां तादृगर्थपरत्वस्य स्वकपोलकल्पनात्मकत्वात् । अपि तु श्रीहरिभद्रसूरिगुम्फितानेकप्रमाणन्यायग्रन्थस्याध्ययनेन संजातवैदुष्यवैभवा उद्योतनाचार्यवर्य्यास्तं सूरिशार्दूलं गुरुतुल्यादरतया संस्मर्त्तुमनयारीत्या येतिरे इत्येव भावो निष्क्रष्टुं कथं न युज्यते । तस्मात् कुवलयमालाप्रशस्तिवचोभिरपि कुवलयमाला भंकारप्रस्तुतसूरिवरयोः समकालसाधनं भंगभावमश्नुते । किं चोपमितिकुवलयमालानिष्ठप्रशस्तिवक्तव्याभ्यां श्रीमद्धरिभद्रसूरिवराणां श्रीसिद्धसाधुश्रीउद्योतनसूर्योरुभयोः समकालीनास्तित्वं साधयितुकामा वुद्ध्यजीर्णावगतमस्तकास्तयोग्रन्थकारयोस्त्रिंशदधिकशतसंवत्सरस्यान्तरं कीदृश्या विद्वज्जनाश्चर्यकारिण्या पण्डया पूरयिष्यन्तीत्यपि महत् कुतुहलं वर्ततेऽस्माकम्।

यद्यप्युपमितिप्रान्तप्रशस्तौ प्रतिपादितसंवत्सरे तत्प्रवर्तकाभिधानं नोपलभ्यते तथापि स वैक्रमीय एवानुमीयते यतोऽन्यस्य दुःसंभा-
व्यमानत्वात्।तत एतावता श्रीहरिभद्रसूरिपादानां विद्यमानताया अष्टमशताब्द्यां संभावनं बुद्धिमान्द्यग्रहग्रथिलत्वदर्शकत्वेनाकुशलं
संजातम् । भूयांसि पुनः प्रस्तुतसूरिभूभृतामस्तित्वस्य 'षष्ठमशताब्दीकालीनस्य साधकानि प्रमाणान्यनल्पग्रन्थरत्नेषु चक्षुष्प-
थपान्थतां प्रयान्ति, तद्यथा—श्रीमन्मेरुतुंगाचार्याः स्वप्रणीतविचारश्रेण्यां प्राक्तनाचार्यप्रणीतानुपदोक्तकारिकांसमुद्धरयामासुः

"पंचसए पणसीए, विक्कमकालाओ झत्ति अत्थमिओ । हरिभद्दसूरिसूरो, भवियाणं दिसउ कल्लाणं" ।। इति ।।

पुनरियमेवार्या पूज्यपादश्रीप्रद्युम्नसूरिविरचितविचारसारप्रकरणे श्रीसमयसुंदरोपाध्यायसंदृब्धगाथासाहस्त्र्यां नेत्रायनं
समवतरति । अत्र केचन कल्पनातृणपुञ्जसमर्पितधीधना अत्रत्य विक्रमपदस्य गुप्तपरत्वं संभावयितुं प्रयतन्ते स्वाभिमतसं-
सिद्धये तदपि सार्वसिद्धान्तारामाविवर्तमानविविभ्रवृक्षकार्थं तेषां चित्तालयवर्त्तिज्वालाजिव्हज्वालां प्रकटीकरोति । परं त्विदं
तान् प्रति स्तंभनवचनं यदुतागमानुगामिशब्दानां स्वमत्यनुकुलपरिवर्तनानुकुलयुगस्य तत्रस्थप्रकाशमानपदानां यथेच्छार्थ-
व्यावर्णनानुकुलयुगस्य वा प्रतीक्षार्थं दुश्चरतपश्चर्यां तपन्तु भो वराकाः । जैनज्योतिर्जाज्वल्यमानेऽस्मिन् युगे तद्युगस्य सुपु-
सावपि भ्रान्तिर्न संभावनीया चारुचरित्राचरणचमत्कृतचेतोविपश्चिद्वृन्दारुवृन्दवन्दितांघ्रिवारिजवाचंयमाग्रेसरपूर्वाचार्यवक्तव्ये
भ्रान्त्यादिदोषोद्भावनापेक्षया तु 'मतिरल्पा शास्त्रार्थं गहन' मिति न्यायेन स्वकीयानर्थककपोलकल्पनायामेव भ्रान्त्या-
दिदोषोद्भावनं स्फुटं पश्यन्तु चेत् सचक्षुष्का यूयमिति । सेव्यसत्तमश्रीकुलमंडनसूरयः स्वनिबद्धविचारामृतसंग्रहे तदेवाहुः
"श्रीवीरनिर्वाणात् सहस्रवर्षे पूर्वश्रुतं व्यवच्छिन्नं । श्रीहरिभद्रसूरयस्तदनु पञ्चपंचाशता वर्षैर्दिवं प्राप्ताः ।।" इति ।

श्रीधर्मसागरोपाध्यायास्तपोगच्छपट्टावल्यामप्येतद्विषयकाशयं प्रकटयामासुः—"श्रीवीरात् पञ्चपंचाशदधिकसहस्रवर्षे विक्रमात् पंचाशित्यधिकपंचशतवर्षे याकिनीसूनुः श्रीहरिभद्रसूरिः स्वर्गभागिति"।

श्रीमद्धरिभद्रसूरिसंदृब्धलघुक्षेत्रसमासवृत्तिप्राक्तनप्रतिप्रान्तकारिकायामपि यत्पंचशतोत्तरसप्तपंचशतोद्वत्सरशुक्रशुक्लपंचमीशुक्रवासराद्युपलभ्यते तदप्येनमेवार्थं समर्थयतितराम् ।

एतदर्थं सहस्रावधानसाधकश्रीमुनिसुंदरसूरिपादाः स्वपद्यगुर्वावल्यां समर्थयांचक्रुरनया रीत्या—

"अभूद् गुरुः श्रीहरिभद्रमित्रं, श्रीमानदेवः पुनरेव सूरिः । यो मान्द्यतो विस्मृतसूरिमंत्रं, लेभेऽम्बिकाऽऽस्यात्तपसोज्जयन्ते ॥"

अत्र श्रीमन्मुनिसुंदरसूरयः श्रीमद्धरिभद्रसूरिवरं श्रीमानदेवसूरिमित्रतया जगुः । तथा च पट्टावलीतः श्रीमानदेवसूरिप्रभोरस्तित्वं षष्टमशताब्द्यां निश्चीयतेतराम् । ततः श्रीहरिभद्रसूरिवरा अपि षष्टमशताब्दीं स्वास्तित्वेनालंचक्रुः । एतावत्सु प्रमाणेषु प्रस्तुतसुरिसुत्रामास्तित्वस्य षष्टमशताब्दीसाधकेषु विद्यमानेष्वपि य एतत्तथ्यवार्तामप्यपलपितुमुत्सहन्ते ते कीदृशा इति वाचकवृन्दा एवावधारयन्तु । तस्मात्सच्चतुश्चत्वारिंशदुत्तरचतुर्दशशतप्रकरणप्रणेतृप्रस्तुतटीकाकारश्रीमद्धरिभद्रसूरिसंक्रन्दनानामस्तित्वं निःशंकं षष्टमशताब्द्यां विश्राम्यति, प्राग्निराकृतत्वेन तद्बाधकप्रमाणाभावात् तत्साधकानेकप्रमाणसद्भावाच्चेति पर्यवसानमधिगम्यते ।

अत्रापि केचनानार्यसंस्कृतिसंस्कृतहृदयाः सर्वज्ञागमशैल्यनभिज्ञास्तर्कयन्ति यदुत 'प्रस्तुत टीकाकारसूरिस्वामिनामनुपदोक्तग्रंथसंख्याप्रणेतृत्वमस्मादृशामिदानींतनकालीनासुमतां तु केवलं दृष्ट्याधिक्यपरिवेष्टितमर्थादतिशयोक्तिमयमेव प्रति-

भासते । नूनमेतद्विषयेऽष्टमनवमशताब्दीकालीनप्राक्तनाः पाठा अपि नेत्रसरणिमानेतुं पार्यन्ते । यद्यपि प्रतिपादितसंदर्भसंख्यायाः कञ्चिदप्यर्थपरत्वं भवतु तथाप्यपरिमितप्रकरणप्रणेतृत्वं प्रस्तुतसूरिसुन्दराणां निर्विवादम्' इति लपन्ति। सत्यमेतत् खलु यत्करालकलिकालविकृतवात्याक्रांतचेतसां दुश्चरपंचमहाव्रतसमापन्ननिःस्वार्थिशिरःशेखरचिरंतनाचार्यपुरंदरवचनेषु यदि भवभ्रमणनिबन्धनीभूतान्यथाभावं न स्यात्तर्हि परेषां केषां स्यात् । अत्रापि महदाश्चर्यमुपजायते खलु यदुत चतुश्चत्वारिंशदधिकचतुर्दशशतप्रकरणप्रणेतृत्वमतिशयोक्तिमयं संभाव्यमाना ऐतिहासिकतत्वग्रहाग्रहग्रथिलमतयोऽपरिमितप्रकरणप्रणेतृत्वं स्वकीयप्रतिभादर्शे शीघ्रं प्रतिफलितुं कया युक्त्या शक्नुवन्तीत्यपि विज्ञातुं तैरेव पार्यते । अपरिमितप्रकरणप्रणेतृत्वापेक्षया तु पूर्वोक्तसंख्यारूपपरिमितप्रणेतृत्वं सुतरामनतिशयोक्तिमयं विभावयितुं शक्यं प्रतिभाति । अत्रापि बलवत्तरागमप्रमाणप्रतिपादनास्तित्वं जानन्तोऽपि तेऽश्रद्दधाना शरणार्थं जगच्चञ्चुचार्वाकपितामहमनुधावन्ति न वेति विचारणीयं विचारवद्भिः स्वयमेव ।

अयं ग्रंथः कियद्दीर्घदिष्टात् प्रकाशयितुमारब्धोऽभवत् स च पुनः कारणवशात् दशपरिवत्सरप्रमाणदीर्घकालातिक्रमे प्राकाश्यपथानुकूलः कर्तुं शक्यो भवतीति पश्यंतु प्रेक्षाचक्षुष्काः प्रकटं । श्रीचूर्णिटीकोपेतस्य समग्रस्यास्य संदर्भस्य संशोधने प्राचीनानर्घ्यपुस्तकरत्नसंशोधनादिकार्यसमर्पितनिरंतरजीवनश्रियामज्ञानान्धतमसापासनानन्यागममाधित्याहर्मणेरहर्मुखाभिस्मरणीयानुत्तमसंगलाभिख्यानां दुश्चरतपश्चर्याचरणादिगुणप्रभवनिरंतरानवरताविच्छन्नप्रतापशालिनां तपागच्छाधिपतीनां पूज्यप्रवेकश्रीमद्विजयदानसूरीन्द्राणां परिश्रमपरिविधानाचक्षणं मादृक्पामरजनवचनसामर्थ्यतिरस्कृतमेव । सर्वज्ञसाहित्य-

रत्नाकररचनारतस्यास्य पंचज्ञानविषयकसकलार्थसार्थस्याध्येतारोऽव्याबाधज्ञानसम्पादनैकप्रह्वा भवन्त्वित्येवान्तेऽभिलष्यते ।

अंते ग्रन्थनस्यैतावता परिश्रमेण संशोधनेऽपि 'अवश्यं भाविनो दोषाः छद्मस्थत्वाद्यनुभावतः' इति वचनात्, मुद्रणादिदोषतश्चावशिष्टाशुद्ध्यर्थं निसर्गैकानुग्रहप्रियसहृदयहृदयानां गुणगणग्रहणाग्रहग्रहिलानां सानुनयमनुग्रहमाशास्यमानो विदधामीममुपन्यासं समाप्तिसरणिसन्मुखम् ॥

प्रव्रज्यापीयूषप्रसेचितृप्रवीणपाठकप्रकाण्डश्रीमत्प्रेमविजयगणिवर्य्यान्तेवास्यलंका—
राभिरूपानुत्तरश्रीमज्जम्बूविजय । चरणांघ्रीन्दीवरेन्दिन्दिरायमाणः ।

विनेयाणुरक्षितविजयः ।

सप्तसिद्धिनिधिक्षोणीमिते विक्रमवत्सरे । उपक्रांतिरियं पूर्णा मोहमय्यां विनिर्मिता ॥ १ ॥

॥ नमः श्रीमद्विजयानन्दसूरीश्वरपादारविन्देभ्यः ॥

॥ पूज्यश्रीजिनदासगणिमहत्तरसन्दब्धचूर्ण्या पूज्यश्रीहरिभद्रसूरीश्वरसन्दब्धवृत्त्या च सहितम् ॥

# ॥ श्रीनन्दीसूत्रम् ॥

चूर्णिः—ॐ नमो वीतरागाय । सव्वसुतखंधतादीणं मंगलाधिकारे णंदि त्ति वत्तव्वा, णंदणं–णंदी, नंदंति वा अणेण त्ति नंदी, नंदी पमोदो हारसो कंदप्पो इत्यर्थः । तस्स य चउव्विधो णिक्खेवो, गयाओ णामट्ठवणाओ, दव्वणंदी–जाणगो अणुवउत्तो, अहवा जाणगभवियसरीरवतिरित्तो बारसविधो तूरसंघातो इमो–" भंभा १ मुकुंद २ मद्दल ३ कडंब ४ झल्लरि ५ हुडुक्क ६ कंसाला ७ । काहल ८ तिलिमा ९ वंसो १०, पणवो ११ संखो १२ य बारसमो ॥१॥ " भावणंदी–णंदिसद्दोवउत्तभावो, अहवा इमं पंचविहणाणपरूवगं ' णंदि ' त्ति अज्झयणं, तं च सुतंसेण सव्वसुतब्भंतरभूतं, तं च सव्वसुतारंभेसु विग्घोवसमणत्थमादीए मंगलं पयुज्जति, तस्स य मंगलट्ठाणावसरपत्तस्स गुरो वा विणेयस्स अत्थसुयगोरवुप्पादणत्थं अविच्छेयसंताणागयसुयप्पदरिसणत्थं इमं थेरावलियं कहेत्ता ततो से अत्थं कथयति, सव्वसुतत्था य जतो तित्थकरप्पभवा, अतो भत्तीए पण्णवगसावगपढगचिंतणा य पढमताए णमोक्कारं करेत्ता भणंति—

व्याख्या—नमः श्रीसर्वज्ञाय । जयति भुवनैकभानुः, सर्वत्राविहतकेवलालोकः । नित्योदितः स्थिरस्ताप–वर्जितो वर्धमानजिनः ॥१॥ इह सर्वेणैव संसारिणा सत्त्वेन नारकतिर्यङ्नरामरगतिनिबन्धनानेकशारीरमानसातितीव्रतरदुःखौघसङ्घातपीडितेन

जातिजरामरणशोकरोगाद्युपद्रवव्रातरहितनिरतिशयालोकसुखस्वभावापवर्गगतिसम्भवे सति पीडानिर्वेदात्तत्परित्यागाय निरतिशयालोकसुखाभिलाषाच्च तदवाप्तये आत्मपरतुल्यचित्तेन सर्वथा स्वपरोपकाराय प्रवर्तितव्यमिति। तत्रान्यपरिरक्षणादिना परोपकारपूर्वक एवात्मोपकार इति विशेषतस्तत्र। स पुनः परोपकारो द्विधा द्रव्यतो भावतश्च। तत्र द्रव्यतो भोजनादिविचित्रविभवप्रदानजनितः, अयं चानैकान्तिकोऽनात्यन्तिकश्च। भावतस्तु सद्धर्मप्रदानजनितः. अयं चैकान्तिकस्तथाऽऽत्यन्तिकश्च। सद्धर्मश्च श्रुतधर्मचारित्रधर्मभेदाद्द्विभेदः। तत्र श्रुतधर्मो–जिनवचनस्वाध्यायः, चारित्रधर्मस्तु–तदुक्तश्रमणधर्मः इति। उक्तं च— "सुयधम्मो सज्झाओ, चरित्तधम्मो समणधम्मो"। तत्र श्रुतधर्मसंपत्समन्विता एव प्रायश्चारित्रधर्मग्रहणपरिपालनसमर्था भवन्तीति तत्प्रदानमेवादौ न्याय्यमिति। तत्रापि श्रुतप्रदाने सत्यपि नाविज्ञातार्थादेव तस्मादभिलषितार्थावाप्तिः प्राणिनामित्यतः प्रारभ्यतेऽर्हद्वचनानुयोगः, अयं च परमपदप्राप्तिहेतुत्वाच्छ्रेयोभूतो वर्तते, श्रेयांसि (च) बहुविघ्नानि भवन्ति, यथोक्तम्–"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः॥ १॥" इति। अतोऽस्य प्रारम्भ एव विघ्नविनायकोपशान्तये मङ्गलाधिकारे नन्दिर्वक्तव्यः। अथ नन्दिरिति कः शब्दार्थः? उच्यते–'टुणदि समृद्धौ' इत्यस्य धातोः 'इदितो नुम् धातोः' (पाणिनि० ७–१–५८) इति नुमि विहितेऽनुबन्धलोपे च कृते उणादिकः 'इन् सर्वधातुभ्यः' इति वचनात्, [1]अनुबन्धलोपे च कृते सति नन्दि, (तस्मात्) [2]सुत्वं विसर्जनीयश्चेति (कृते सति) नन्दिः, नन्दनं नन्दिः, नन्दन्त अनेनेति वा, नन्दन्ति अस्मिन्निति वा, नन्दयतीति वा, तदभेदोपचारान्नन्दिः हर्षः प्रमोदः इत्यनर्थान्तरम्। 'ताभ्यामन्यत्रोणादयः'

१ न. इत्यस्य लोपे. २ सोः सुप्रत्ययस्य रुत्वम्.

॥ १ ॥

इति वचनात्, ताभ्यामिति सम्प्रदानापादानाभ्यामन्यत्र उणादयः प्रत्यया भवन्ति । अन्ये तु नन्दी इति अभिदधति, तत्रापि नन्दिरिति स्थिते 'इक् कृष्णादिभ्यः' ( पा० वार्तिकम् ) इति इक् प्रत्ययः, स च 'कृत्यल्युटो बहुलम्' ( पा० ३-३-११३ ) इति वचनाद्भावे करणे वाऽवगन्तव्य इति । ततः '*कृदिकारादक्तिनः' '*सर्वतोऽक्तिन्नर्थादित्येके' इति स्त्रीप्रत्ययः, अस्य भावार्थः—कृदिकारान्तो यः शब्दः क्तिन्वर्जितः तस्मात्स्त्रीप्रत्ययो भवति, अपरे तु सर्वतोऽक्तिन्नर्थादिकारान्तात् स्त्रीप्रत्ययो भवतीति मन्यन्ते, अनुबन्धलोपे च कृते 'यस्य' ( यस्येति च' पा० ६-४-१४८ ) इकारलोपे च नन्दी इति रूपं भवति । नन्दनं नन्दी, नन्दन्ति अनया इति वा भव्याः प्राणिन इति नन्दी इत्यलमप्रस्तुतातिप्रसङ्गेनेति ।

अयं च नन्दिश्चतुर्विधः, तद्यथा—नामनन्दिः, स्थापनानन्दिः, द्रव्यनन्दिः, भावनन्दिश्चेति । तत्र नामस्थापने प्रकटार्थे । द्रव्यनन्दिर्द्विधा आगमतो नोआगमतश्च, तत्रागमतो नन्दिपदार्थज्ञः तत्र चानुपयुक्तः, 'अनुपयोगो द्रव्यम्' इति वचनात् । नोआगमतस्तु ज्ञशरीरद्रव्यनन्दिः, भव्यशरीरद्रव्यनन्दिः, ज्ञशरीरभव्यशरीरव्यतिरिक्तश्च द्रव्यनन्दिः । तत्र ज्ञशरीरद्रव्यनन्दिः नन्दिपदार्थज्ञस्य शरीरं जीवविप्रमुक्तम्, अनुभूतनन्दिभावत्वात् पश्चात्कृतभावस्य द्रव्यत्वात्, यथोक्तम्—"भूतस्य भाविनो वा, भावस्य हि कारणं तु यल्लोके । तद्द्रव्यं तत्त्वज्ञैः, सचेतनाचेतनं कथितम् ॥ १ ॥" भव्यशरीरद्रव्यनन्दिश्च नन्दिपदार्थपरिज्ञानभावयोग्यं बालादिशरीरं, पुरस्कृतभावत्वादस्य । व्यतिरिक्तः पुनः क्रियाविष्टो द्वादशविधस्तूर्याङ्गसङ्घातोऽयं, तद्यथा—"भंभा १ मउंद २ मद्दल ३, कडंब ४ झल्लरि ५ हुडुक्क ६ कंसाला ७ । काहल ७ तलिमा ९ वंसो १०, संखो ११ पणवो १२ य बारसमो ॥१॥"

---

* एतद्वार्तिकद्वयं "बह्वादिभ्यश्च" पा० ४-१-४५ इतिसूत्रस्थम्.

भावनन्दिरपि द्विविधैव ( द्विविध एव ) आगमतो नोआगमतश्च, तत्रागमतो भावनन्दिः नन्दिपदार्थज्ञस्तत्र चोपयुक्तः 'उपयोगो भावः' इति कृत्वा, नोआगमतस्तु भावनन्दिः पञ्चप्रकारज्ञानसमुदायः, नोशब्दो देशवचनः, अथवा पञ्चप्रकारज्ञानस्वरूपप्रतिपादकोऽध्ययनविशेषः, नोशब्दो देशवचन एव, अयं चाध्ययनविशेषः श्रुतांशेन सर्वश्रुताभ्यन्तरभूतो वर्तते, अत एव सर्वश्रुतारम्भेष्वेव विघ्नविनायकोपशान्तये मङ्गलार्थमभिधीयत इति, अस्य च मङ्गलस्थानावसरप्राप्तस्य सत आचार्या विनेयानां सूत्रार्थगौरवोत्पादनाविच्छेदेन सन्तानागतसूत्रार्थपददर्शनार्थं चादावेवावलिकामभिधाय व्याख्यानाय यतन्ते, सर्वश्रुतार्थाश्च यतस्तीर्थकरप्रभवा अतः प्रज्ञापकश्रावकपाठका अभिलषितार्थसिद्धये प्रवर्तमानाः प्रधानोपायत्वाद्भगवत एव नमस्कारपूर्वकं प्रवर्तन्त इत्यत आह ग्रन्थकारः—

**जयइ जगजीवजोणी-वियाणओ जगगुरू जगाणंदो। जगणाहो जगबंधू, जयइ जगप्पियामहो भयवं ॥१॥**

चूर्णिः—'जयइ' गाहा—सोतिंदियादिविसयकसायपरिसहोवसग्गुवघाति कम्मट्ठप्पगारं वा परप्पवादिणो य जतेसु वा 'जयति' त्ति भण्णति। 'जग'त्ति खेत्तभावो तम्मि जे जीवा तेसिं जाओ जोणीओ—सच्चित्तसीतसंवुडादिया चउरासीलक्खविहाणे वा विविहपगारेहिं जाणमाणो वियाणओ, अहवा जेहिं कम्मेहिं जीए जोणीए उववज्जइ, तं तहा जाणति त्ति विसिट्ठो जाणगो वियाणगो, अहवा जगग्गहणातो धम्माधम्मागासपोग्गलगहणं, 'जीव' त्ति सव्वजीवग्गहणं, 'जोणि' त्ति जीवाजीवुप्पत्तिट्ठाणं, जहा य जं उप्पज्जति विगच्छति धुवं वा तं तथा सव्वं जाणति त्ति वियाणगो, अनेन वचनेन केवलणाणसामत्थतो सव्वभावे सव्वहा जाणति त्ति ख्यापितं भवति। 'जगगुरु' त्ति जगं ति सव्वसण्णिलोगो तस्स भगवानेव गुरुः, कथं? उच्यते—गृणाति शास्त्रार्थ-

मिति गुरुः ब्रवीतीत्यर्थः, तिरीयमणुयसदेवासुराए परिसाए धम्ममक्खाइ, जो वा जं पुच्छइ तं सव्वं कथयति तेण गुरू, अनेन वचनेन परोपकारित्वं प्रदर्शितं भवति। जगा–सत्ता ताण आणंदकारी 'जगाणंदो' कहं ? उच्यते–सव्वेसिं सत्ताणं अवावायणोपदेसकरणत्तातो, जतो भणितं–" सव्वे सत्ता ण हंतव्वा, ण परियावेयव्वा, ण परिघेत्तव्वा, ण अज्जावेयव्व " त्ति विसेसतो सण्णीणं धम्मकथणत्ताओ आणंदकारी, ततोऽवि विसेसतो भव्वसत्ताणं ति, अनेन वचनेन हितोपदेशकर्तृत्वं दर्शितं भवति। जगा–सत्ता ते अण्णेहिं परिभविज्जमाणा रक्खइ त्ति 'जगणाहो' कहं ? उच्यते–मणावयणकाएहिं कतकारिताणुमतेहि रक्खंतो जगणाहो भवति, अनेन वचनेन सव्वपाणीणं सणाहता दंसिता भवति। 'जगबंधु' त्ति जगा–सत्ता तेसिं बंधू जगबंधू, कहं ? उच्यते–जो अप्पणो परस्स वा आवतीए वि ण परिच्चयति सो बंधू, भगवं च छुट्टु वि परीसहोवसग्गादिसु बाहिज्जमाणोवि सत्तेसु बंधुत्तं अपरिच्चयंतो ण विराहेति त्ति, अतो जगबंधू, अनेन वचनेन सव्वसत्तेसु सुबंधुता दंसिता भवति। '(जग) पितामहो' त्ति जो पितु पिता स पितामहो, सो य भगवं चेव सव्वसत्ताणं पितामहो, कहं ? उच्यते–सव्वसत्ताण अहिंसादिलक्खणो धम्मो पिता रक्खणत्तातो, सो य धम्मो भगवता पणीतो, अतो भगवं धम्मपिता, एवं च सव्वसत्ताणं भगवं पितामहो त्ति, अनेन वचनेन धम्मं पडुच्च आदिपुरिसत्तं ख्यापितं भवति। एताए गाहाए पच्छद्धस्स पाठंतरं इमं–" जिणवसभो सललियवसभविक्कमगती महावीरो " जिण एव वसभो जिणवसभो, वसभो त्ति संजमभारुव्वहणे चंकमतो सुभा गायसंचालणक्रिया सललितं भण्णति, वामदाहिणाणं वा पुरिमपच्छिमचलणाणं जं कमुक्खेवकरणं स विक्कमतो भण्णति, दुपदस्स पुण एगचलणुक्खेवो चेव विक्कमो। सेसं कंठं ॥ १ ॥ किं च

व्याख्या—'जयति' गाथा—इन्द्रियविषयकषायघातिकर्मभवोपग्राहिकर्मशत्रुगणजयाज्जयतीत्युच्यते । किंविशिष्टो जयति ? 'जगज्जीवयोनिविज्ञायकः' इह जगच्छब्देन सकलधर्माधर्माकाशपुद्गलास्तिकायपरिग्रहः, जीवशब्देन तु सकलजीवास्तिकायपरिग्रहः, उक्तं च—"जगन्ति जङ्गमान्याहुः, जगज्ज्ञेयं चराचरम्" । योनयः सचित्ताद्याः, उक्तं च—"सचित्तशीतसंवृत्तेतरमिश्रास्तद्योनयः" जीवोत्पत्तिस्थानानीत्यर्थः । 'यु मिश्रणे' युवन्ति तैजसकार्मणशरीरवन्तः सन्त औदारिकादिशरीरेण मिश्रीभवन्त्यस्यामिति योनिः, उक्तं च—"जोएण कम्मएणं, आहारेइ अणंतरं जीवो । तेण परं मीसेण, जाव सरीरस्स णिप्फत्ती ॥१॥" ततश्च जगच्च जीवाश्च योनयश्च जगज्जीवयोनयः, विविधं—अनेकधोत्पादाद्यनन्तधर्मात्मकं जानातीति—विज्ञायकः, इति समासः, अनेन केवलज्ञानप्रतिपादनात् स्वार्थसम्पदमाह । तथा जगत् गृणातीति जगद्गुरुः यथोपलब्धजगद्वक्तेति भावना, अनेनापि स्वार्थसम्पदमेवाह । तथा 'जगदानन्दः' इह जगच्छब्देन [1]संज्ञिजङ्गमपरिग्रहः, तेषां सद्धर्मदेशनाद्वारेणानन्दहेतुत्वादैहिकामुष्मिकप्रमोदकारणत्वात् जगदानन्द इति, अनेन परार्थसंपदमाह । तथा 'जगन्नाथः' इह जगच्छब्देन सकलचराचरपरिग्रहः, तस्य यथावस्थितस्वरूपप्ररूपणद्वारेण वितथप्ररूपणापायेभ्यः पालनात् नाथवत् नाथ इति, अनेनापि परार्थसम्पदमिति । तथा 'जगद्बन्धुः', इह जगच्छब्देन सकलप्राणिपरिग्रहः, तदव्यापादनोपदेशप्रणयनेन सुखस्थापकत्वात् बन्धुवत् बन्धुः, तथा चोक्तम्—"सव्वे पाणा, सव्वे भूया, सव्वे जीवा, सव्वे सत्ता, ण हंतव्वा, ण अज्जावेयव्वा, ण परितावेयव्वा, ण उवद्दवेयव्वा, एस धम्मे धुवे णिनीए सासते समेच्च लोयं खेदणेहिं पवेदिते" इत्यादि, अनेनापि परार्थसम्पदमिति । तथा 'जयति जगत्पितामह' इति, इह जग-

---

[1] पञ्चेन्द्रिय इति वा पाठः क्वचित्

च्छन्देन सकलसत्त्वपरिग्रह एव, तेषां च कुगतिगमनभयापायरक्षणात् पिता धर्मो वर्तते, तथा चोक्तम्—"दुर्गतिप्रसृतान् जीवान्, यस्माद्धारयते ततः। धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म इति स्मृतः ॥ १ ॥" तस्यापि चार्थप्रणेतृत्वेन भगवान् पिता वर्तते, अतो जगत्पितामह इति। स्तवाधिकाराच्च पुनः क्रियाभिधानमदुष्टम्, उक्तं च—"सज्झायज्झाणतव—ओसहेसु उवएसथुइपयाणेसु। सन्तगुणकित्तणेसु य, न होंति पुणरुत्तदोसाओ ॥ १ ॥" अनेनापि परार्थसंपदमाह। 'भगवान्' इति, समग्रैश्वर्यादिलक्षणः, तथा चोक्तम्—"ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः। धर्मस्याथ प्रयत्नस्य, षण्णां भग इतीङ्गना ॥ १ ॥" भगोऽस्यास्तीति भगवानिति, अनेन चोभयसम्पदमाह, स्वपरोपकारत्वादैश्वर्यादेः, इत्यलं प्रसङ्गेनेति गाथार्थः ॥ १ ॥" व्याख्यानयन्ति केचित् स्तुतिमेनामन्यथाऽपि विद्वांसः, तत्राप्यपौनरुक्त्यं सूक्ष्मधिया चिन्तनीयमिति।

एवं तावदनादिमन्तो मतास्तीर्थकरा इति ज्ञापनार्थं सामान्येन नमस्कारमभिधाय साम्प्रतमासन्नोपकारित्वात् सकलदुःखपरमौषधभूतप्रवचनप्रणेतृत्वाद्वर्तमानतीर्थाधिपतेर्नमस्कारं प्रतिपादयन्नाह—

**जयइ सुआणं पभवो, तित्थयराणं अपच्छिमो जयइ। जयइ गुरू लोगाणं, जयइ महप्पा महावीरो ॥ २ ॥**

चूर्णिः—'जयइ सुताणं' गाहा—रागदोसादि अरी जिणंतो जितेसु वा जयति त्ति सव्वं, 'सुताणं' ति सुतणाणत्थो भगवं तातो 'पभवो' त्ति पसूती, अणिट्ठवयणपरिहारातो पच्छिमो वि अपच्छिमो भण्णति, अहवा पच्छाणुपुव्वीए अपच्छिमो रिसभो पच्छिमो, अविसिट्ठजीवलोगस्स विसिट्ठसण्णिजीवलोगस्स वा, अहवा सम्मदिट्ठीमादि संजतासंजतलोगस्स गुरू, महं आया जस्स सो महप्पा, सो य अकम्मवीरियसामत्थतो महात्मा, केवलादिविसिट्ठलद्धिसामत्थतो वा महात्मा ॥ २ ॥ किं च—

व्याख्या—'जयइ सु' गाहा—जयतीति पूर्ववत् । श्रुतानां—आचारादिभेदभिन्नानां प्रभवः प्रभवन्त्यस्मादिति प्रभवः—तदर्थाभिधायकत्वात्कारणमित्यर्थः । ऋषभादयोऽप्येवम्भूता एव अत आह—तीर्थकराणामपश्चिमो जयति, तत्र तीर्थकरणशीलास्तीर्थकराः तेषां तीर्थकराणां भरतेऽधिकृतावसर्पिण्यां पश्चिम एव अनिष्टशब्दपरिहारार्थमपश्चिम इत्युच्यते, पश्चानुपूर्व्यां वाऽपश्चिम इति । जयति गुरुर्लोकानां गृणाति शास्त्रार्थमिति गुरुः, लोकानामिति—सत्त्वानां जयति । महात्मा—अनन्तज्ञानवीर्ययुक्तत्वात् महान् आत्मा यस्य स महात्मा महावीर इति 'सूर वीर विक्रान्तौ' इति कषायादिशत्रुजयात् महाविक्रान्तो महावीरः, 'ईर गतिप्रेरणयोः' इत्यस्य वा विपूर्वस्य, विशेषेण ईरयति कर्म गमयति याति वेह शिवमिति वीरः, महाँश्चासौ वीरश्च महावीर इति गाथार्थः ॥२॥

पुनरस्यैवातिशयप्रदर्शनद्वारेण स्तुतिमभिधित्सुराह—

**भद्दं सव्वजगुज्जोयगस्स, भद्दं जिणस्स वीरस्स । भद्दं सुरासुरनमंसियस्स, भद्दं धुयरयस्स ॥ ३ ॥**

चूर्णिः—'भद्दं सव्व' गाहा—भावतो भाविता भद्दं तं भगवतो भवतु त्ति लोगो अट्ठविधोऽवि लोगनिक्खेवो भणितव्वो, सेसं कंठं ॥ ३ ॥ इमं संघस्सेव णगररूवगं—

व्याख्या—'भद्दं' गाहा—भद्रं—कल्याणं भवतु । कस्य ? सर्वजगदुद्योतकस्येति अनेन ज्ञानातिशयमाह । इह च "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" (पा० २–३–७३) इतिवचनात् षष्ठ्यपि भवत्येव, यथा आयुष्यं देवदत्ताय आयुष्यं देवदत्तस्येति, एवं मद्रादिष्वपि वक्तव्यमिति । भद्रं जिनस्य, 'जि जये' अस्य औणादिकनक्प्रत्ययान्तस्य जिन इति भवति, रागादिजयात् जिनः इति, अनेनापायातिशयमाह । अपायो—विश्लेषः, रागादिभिः सार्धमात्यन्तिकवियोग इत्यर्थः । आह—अपा-

यातिशये इति ज्ञानातिशयभावात् व्यतिक्रमः किमर्थं ? 'फलप्रधानाः समारम्भा' इति ज्ञापनार्थम्। भद्रं सुरासुरनमस्कृतस्य इति, अनेन पूजातिशयमाह, न हि विभवानुरूपां पूजामकृत्वैव सुरासुरा नमस्कारक्रियायां प्रवर्तन्ते इति, उक्तं च–" अशोकवृक्षः सुरपुष्पवृष्टि–र्दिव्यो ध्वनिश्चामरमासनं च। भामण्डलं दुन्दुभिरातपत्रं, सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ १ ॥" इति। पूजातिशयान्यथानुपपत्त्यैव वागतिशयो गम्यते। भद्रं धुतरजस इति, अनेन सकलसंसारक्लेशविनिर्मुक्तां सिद्धावस्थामेवाह। यतो बध्यमानकं कर्म रजो भण्यते, तदभावस्त्वयोगिसिद्धानामेव, न पुनरन्येषां, यत आह–" जाव णं एस जीवो एयइ वेयइ चलइ फंदइ (घट्टइ खुब्भइ उदीरइ तं तं भावं परिणमइ,) ताव णं अट्ठविहबंधए वा, सत्तविहबंधए वा, छव्विहबंधए वा, एगविहबंधए वा" इत्यादि, तत्थ–" सत्तविहबंधगा होंति, पाणिणो आउवज्जगाणं तु। तह सुहुमसंपराया, छव्विहबंधा विणिद्दिट्ठा ॥१॥ मोहाउयवज्जाणं, पयडीणं ते उ बंधगा भणिया। उवसंतखीणमोहा, केवलिणो एगविहबंधा ॥२॥ ते पुण दुसमयठिइयस्स, बंधगा न उण संपरायस्स। सेलेसीपडिवन्ना अबंधगा होंति विन्नेया ॥ ३ ॥" आह–भगवतः संसारातीतत्वात् परमकल्याणरूपत्वात् किमेवमुच्यते भद्रं भवतु (इति)? न च [1]स्तोत्रा भणितं सर्वमेव (तथा) भवतीति, अत्रोच्यते–सत्यमेतत् तथापि कुशलमनोवाक्कायप्रवृत्तिकारणत्वान्न दोष इत्यलं प्रसङ्गेन। इति गाथार्थः ॥ ३ ॥ एवं तावत्तीर्थकरनमस्काराः प्रतिपादिताः, साम्प्रतं तीर्थकरानन्तरः सङ्घ इति कृत्वा तीर्थान्तरग्राम्व्युदासेन नगररूपकेण तत्संस्तवं कुर्वन्नाह—

**गुणभवणगहण ! सुयरयणभरिय ! दंसणविसुद्धरत्थागा। संघनगर ! भद्दं ते अखंडचारित्तपागारा ! ॥४॥**

---

१ स्तुतिकारेण.

चूर्णिः—'गुणभवणगहण' गाहा—तम्मि पुरिससंघणगरे इमे गुणा—पिंडविसुद्धिसमितिगुत्तिदव्वादिअभिग्गहमासादिपडिमा-गोयरे य चरगादिया एमादि उत्तरगुणा। तम्मि संघणगरे भवणा कया 'भवण' त्ति घरा तेहिं 'गहण' त्ति—णिरंतरसंठिया घणा तं च संघपुरिसणगरं अंगाणंगादि विचित्तसुतरयणभरियं खयोवसमितादिसंमत्तमइयरत्थाया या मिच्छत्तादिकयवरवज्जियत्त-णतो विसुद्धाओ। मूलगुणचरितं च से पागारो, सो य 'अखंडो' त्ति अविराधितो निरतिचार इत्यर्थः। सेसं कंठं ॥ ४ ॥ संघ-स्सेव इमं चक्करूवगं—

व्याख्या—'गुण' गाहा—गुणभवनगहन! इह गुणाः—पिण्डविशुद्ध्यादय उत्तरगुणा अभिगृह्यन्ते, यथोक्तम्—"पिंडस्स जा विसोही समिईओ भावणा तवो दुविहो। पडिमा अभिग्गहा वि•य उत्तरगुणमो वियाणाहि ॥ १ ॥" एत एव भवनानि, एभिर्गहनं प्रचुरत्वादुत्तरगुणानाम् एभिः सङ्कुलं सङ्घनगरमभिगृह्यते, तस्यामन्त्रणं हे गुणभवनगहन! तथा श्रुतरत्नभृत! श्रुतान्ये-वाचारादीनि निरूपमसुखहेतुत्वाद्रत्नानि, तैर्भृतं पूरितमित्यर्थः, तस्यामन्त्रणम्। तथा दर्शनविशुद्धरथ्याक! इह दर्शनं—प्रशम-संवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं सम्यग्दर्शनं गृह्यते, तच्चोपशमिकादिभेदात् पञ्चविधं, तथा चोक्तम्—" तं च पंचधा सम्मं उवसमं सासायणं खओवसमियं वेदयं खइयं " ति दर्शनमेव असारमिथ्यात्वादिकचवररहिता शुद्धा रथ्या यस्य तत् तथाविधं, तस्यामन्त्रणं सङ्घनगर! सङ्घः—चातुर्वर्णः श्रमणादिसङ्घातः, स नगरमिव सङ्घनगरं, तस्यामन्त्रणं, यथा पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः, उक्तं च " उपमितं व्याघ्रादिभिः सामान्याप्रयोगे " (पा० २-१-५६) भद्रं—कल्याणं तव भवतु, अखण्डचारित्रप्राकार! चारित्रं मूलगुणाः, अखण्डं—अविराधितं चारित्रमेव प्राकारो यस्य तत्तथाविधं, तस्यामन्त्रणम्। इति

गाथार्थः ॥ ४ ॥ संसारोच्छेदित्वात्सङ्घस्यैव चक्ररूपकेण स्तवं कुर्वन्नाह—

**संजमतवतुंबारयस्स, नमो सम्मत्तपारियल्लस्स। अप्पडिचक्कस्स जओ, होउ सया संघचक्कस्स ॥५॥**

चूर्णिः—'संजम' गाहा–विसुद्धभावचक्कस्स सत्तरसविधो संजमो तुंबं, तस्स बारसविहो तवो महाअरगा, 'पारियल्लं' ति जा वाहिरपुट्ठयस्स बाहिरब्भमी से सम्मतं कतं, जम्हा अण्णेहिं चरगादिएहिं जेतुं ण सकति, तम्हा एयं जयति, अप्पडिचक्कं च एतं णमो एरिसस्स चक्कस्सेति ॥ ५ ॥ इमं चक्कस्स रहरूवगं—

व्याख्या–'संयम' गाहा–संयमतपस्तुम्बारकाय नमः संयमश्च तपांसि च संयमतपांसि, तुम्बं चारकाश्च तुम्बारकाः, तत्र यथासङ्ख्यं संयमतपांस्येव तुम्बारका यस्य तत्तथाविधं, तस्मै नमः, तत्र संयमाः (मः) पञ्चाश्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः (चतुः) कषायजयः दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः, तपो द्वादशप्रकारं वाह्यमाभ्यन्तरं (च), तत्र वाह्यं षड्विधं, यथोक्तं–"अनशनमूनोदरता, वृत्तेः संक्षेपणं रसत्यागः। कायक्लेशः संलीन–तेति वाह्यं तपः प्रोक्तम् ॥१॥" आभ्यन्तरमपि षड्विधम्, उक्तं च–"प्रायश्चित्तं विनयो वैयावृत्त्य स्वाध्यायो ध्यानं व्युत्सर्गश्चेति"। 'सम्मत्तपारियल्लस्स त्ति' पारियल्लं बाह्यपुष्टकस्य (पृष्ठस्य) वाह्या भ्रमिरुच्यते, ततश्च सम्यक्त्ववाह्यभ्रमिणे नमः। व्याख्यातं गाथार्धम्। चरकादिभिस्तुल्यत्वान्नास्य प्रतिचक्रं विद्यत इत्यप्रतिचक्रं, तस्य जयो भवतु इति सुप्रणिधानमेतत्, सदा–सर्वकालं सङ्घश्चक्रमिव सङ्घचक्रं तस्य, इति गाथार्थः ॥ ५ ॥ इदानीं सङ्घस्यैव मार्गगामित्वतो रथरूपकेण स्तवं कुर्वन्नाह—

श्रीनन्दी-सूत्रस्य चूर्णि-र्वृत्तिश्च

॥ ६ ॥

संघस्य चक्रेणौ-पम्यम् रथेनौ-पम्यम्

भद्दं सीलपडागूसियस्स, तवनियमतुरयजुत्तस्स। संघरहस्स भगवओ, सज्झायसुनंदिघोसस्स॥६॥

चूर्णिः—'भद्दं सिल' गाहा–रहो सामण्णतो पंचमहव्वतमइओ, 'उस्सितो त्ति' तस्सट्ठारससीलंगसहस्सूसिता कता पडागा।
बारसविहो तवो इंदियनोइंदियो य णियमो, एते अस्सा। सज्झायसद्दो णंदिघोसो। सेसं कंठं ॥इमंपि॥६॥ संघस्सेव पउमरूवगं–

व्याख्या—'भद्दं गाहा–भद्रं–कल्याणं भवतु, कस्य? सङ्घरथस्य भगवत इति योगः। किंविशिष्टस्य? शीलोच्छ्रितपता-
कस्य प्राकृतशैल्याऽन्यथोपन्यासः, शीलग्रहणादष्टादशशीलाङ्गसहस्रपरिग्रहः। तपोनियमतुरगयुक्तस्य–तपः संयमाश्वयुक्तस्येत्यर्थः।
(तथा) स्वाध्यायो–वाचनादिः, यथोक्तम्–"वाचना प्रच्छना परावर्तनाऽनुप्रेक्षा धर्मकथा चेति", तत्र स्वाध्याय एव शोभनो
नन्दिघोषः–तूर्यरवः [1]नेमिनिर्घोषो वा यस्य स तथा तस्य। इह च शीलाङ्गनिरूपणे सत्यपि तपोनियमनिरूपणं प्रधानपरलो-
काङ्गत्वख्यापनार्थम्, अस्ति चायं न्यायो यदुत "सामान्योक्तावपि प्राधान्यख्यापनार्थं विशेषाभिधानम्" इति, यथा ब्राह्मणा
आयाता वशिष्ठोऽप्यायात इत्येवमन्यत्रापि योजनीयमित्यलं प्रसङ्गेनेति गाथार्थः ॥ ६ ॥ सङ्घस्यैव लोकासंश्लिष्टत्वतः पद्मरूपकेण
स्तवं प्रतिपादयन्नाह—

कम्मरयजलोहविणिग्गयस्स, सुयरयणदीहनालस्स। पंचमहव्वयथिरक-न्नियस्स गुणकेसरालस्स ॥७॥

सावगजणमहुअरिपरि-वुडस्स जिणसूरतेयबुद्धस्स। संघपउमस्स भद्दं, समणगणसहस्सपत्तस्स ॥८॥

चूर्णिः—'कम्मरय' गाहा ('सावग' गाहा य)–कम्म एव रयो कम्मरयो, अहवा जं पुव्वं बद्धं तं कम्मं, बज्झमाणं रयो,

॥ ६ ॥

[1] अयमर्थः 'सज्झायसुनेमिघोसस्स' इति पाठान्तरे द्रष्टव्यः

तं सव्वंपि जलोहम्मि कल्प्यते, अहवा पुव्वबद्धं कम्मपंको, बज्झमाणं जलोहो, ततो विणिग्गतो संघपउमो। तस्स नालो सुत एव रयणं सुतरयणं, तं से णालो कतो। पंचमहव्वता य से 'थिर त्ति' दढा ते 'कण्णिय त्ति' बाहिरपत्ता कता। मूलुत्तरगुणा य से अणेगविहा तेहिं गुणेहि 'आलस्स त्ति' अधिकयोगयुक्तस्य गुणकेससलस्स–मूलादिगुणकेसरयुक्तस्येत्यर्थः। बितिय गाहाए 'परिवुड त्ति' परिवारितं। जिणसूरस्स धम्मकहणरकाणतेयेण पबोधितं। अणेगसमणसहस्सा य से अब्भितरपत्ता कता। एरिसस्स संघपउमस्स भद्दं भवतु॥ ७–८॥ इमं चंदसंघरूवगं—

व्याख्या—'कम्मरय' गाहा 'सावय' गाहा (च)—सङ्घपद्मस्य भद्रं–मङ्गलं भवत्विति क्रिया। किम्भूतस्य? कर्मरजोजलौघविनिर्गतस्य, इह ज्ञानावरणादिलक्षणं कर्म, तदेवानेकधा जीवगुण्डनात् रजो भण्यते, तदेव भवकारणत्वाज्जलौघस्तस्माद्विनिर्गत इव निर्गतः, तथा चाविरतसम्यग्दृष्टेरपि अपार्धपुद्गलपरावर्तपरः संसार उक्त इत्यतो विनिर्गतस्तस्य। श्रुतरत्नमेव दीर्घनालं यस्य स, तद्बलादेव निर्गत इति भावनीयम्। पञ्चमहाव्रतानि प्राणातिपातादिविनिवृत्तिलक्षणानि, तान्येव स्थिरा–दृढा कर्णिका–मध्यगण्डिका यस्य। गुणा–उत्तरगुणाः त एव तत्परिकरत्वात् केसराणि यस्य विद्यन्त इति गुणकेसरवत् तस्य गुणकेसरवतः। श्रावकजनमधुकरीपरिवृतस्येति प्रकटार्थं, नवरमभ्युपेतसम्यक्त्वः प्रतिपन्नाणुव्रतोऽपि प्रतिदिवसं यतिभ्यः सकाशात् साधूनामगारिणां च सामाचारीं शृणोतीति श्रावकः, उक्तं च—"यो ह्यभ्युपेतसम्यक्त्वो, यतिभ्यः प्रत्यहं कथाम्। शृणोति धर्मसंबद्धामसौ श्रावक उच्यते॥१॥" जिनसूर्यतेजोबुद्धस्य केवलज्ञानभास्करविशिष्टसंवेदनप्रभवधर्मदेशनाबुद्धस्येति भावार्थः। श्रमणगणसहस्रपत्रस्येति प्रकटार्थमेव, नवरं श्राम्यतीति श्रमणः, "कृत्यल्युटो बहुलम्" (पा० ३–३–११३) इतिवचनात्कर्तरि ल्युट्, श्राम्यतीति–तप-

स्यति एतदुक्तं भवति–प्रव्रज्यादिवसादारभ्य सकलसावद्ययोगविरतो गुरूपदेशादनशनादि यथाशक्त्या [1]प्राणोपरमात्तपश्चरतीति श्रमणः, उक्तं च–" यः समः सर्वभूतेषु, स्थावरेषु त्रसेषु च । तपश्चरति शुद्धात्मा, श्रमणोऽसौ प्रकीर्तितः ॥१॥ " इति गाथाद्वयार्थः ॥ ७–८ ॥ इदानीं सङ्घस्यैव सौम्यतया चन्द्ररूपकेण स्तवमाह—

**तवसंजममयलंछण, अकिरियराहुमुहदुद्धरिस निच्चं । जय संघचंद ! निम्मल–सम्मत्तविसुद्धजोण्हागा ॥ ९ ॥**

चूर्णिः—'तवसंयम' गाहा–संघचंदस्स मिया तवसंजमा तेहिं लंछितो । 'अकिरिय त्ति' णत्थियवादी से राहुमुहं तेहिं 'दुआधरिसो त्ति' ण सक्कते जेतुं 'णिच्चं' ति सव्वकालं, संकादिविसुद्धसम्मत्तं से जोण्हा । सेसं कंठं ॥ ९ ॥ सूरसंघरूवगं इमं—

व्याख्या—'तवसंयम' गाहा–तपःसंयममृगलाञ्छन–तपःसंयममृगचिह्न !, अक्रिया (य) राहुमुखदुष्प्रधृष्य, इह अक्रिया (य) शब्देन नास्तिका गृह्यन्ते, अनभ्युपगमात् अविद्यमानपरलोकक्रियाः अक्रियाः, त एव राहुमुखं, तेन दुष्प्रधृष्योऽनभिभवनीयस्तस्यामन्त्रणं । नित्यमिति सदा जय सङ्घचन्द्र निर्मलसम्यक्त्वविशुद्धज्योत्स्नाक इह मिथ्यात्वभावतमोरहितं[2] निर्मलं सम्यक्त्वमुच्यते, तदेव विशुद्धा–निर्मला ज्योत्स्ना–यस्य स तथाविधः तस्यामन्त्रणम् । इति गाथार्थः ॥ ९ ॥ अधुना सङ्घस्यैव प्रकाशकतया सूर्यरूपकेण स्तवमाह—

**परतित्थियगहपहनासगस्स, तवतेयदित्तलेसस्स । नाणुज्जोयस्स जए, भद्दं दमसंघसूरस्स ॥ १० ॥**

१ यथाशक्ति आ इति पदच्छेदः २ भावमलरहितं इति वा पाठः

चूर्णिः—'परतित्थिय' गाहा–हरिहरहिरण्णसक्कोलूकचरगतावसादयो परतित्थिया गहा तेसिं णाणतेयप्पभं सुतादिणाणप्पभाए णासेति, तवणियमकरणातो य अतीव दित्तिमंतलेस्सो 'लेसस'त्ति रस्सीयो सुतादिणाणुज्जोतसंपण्णस्स य इमम्मि जए संघसूरस्स भद्दं भवतु। सेसं कंठं ॥ १० ॥ इमं संघसमुद्दरूवगं—

व्याख्या—'परतित्थिय' गाहा–परतीर्थिकग्रहप्रभानाशकस्य इह परतीर्थिकाः कपिलकणभक्षाक्षपादादिमतावलम्बिनः त एव ग्रहास्तेषां प्रभा एकदुर्णयज्ञानलक्षणा, तां नाशयति अनन्तनयसङ्कुलप्रवचनसमुत्थज्ञानालोकेन अपनयतीति समासः तस्य। तपस्तेजोदीप्तलेश्यस्य तपस्तेज एव दीप्ता–उज्ज्वला लेश्या–दीधितयो यस्य। ज्ञानोद्योतस्येति गतार्थम्। जगति–लोके भद्रं–मङ्गलं भवतु। कस्य? दमसङ्घसूर्यस्य दम–उपशमो भण्यते, तत्प्रधानः सङ्घसूर्यः दमसङ्घसूर्यः तस्य। इति गाथार्थः ॥ १० ॥ साम्प्रतं सङ्घस्यैव महत्तया समुद्ररूपकेण स्तवमाह—

**भद्दं धिइवेलापरिगयस्स, सज्झायजोगमगरस्स। अक्खोहस्स भगवओ, संघसमुद्दस्स रुंदस्स ॥ ११ ॥**

चूर्णिः—'भद्दं' गाहा–जलवेदिअंतरे जं रमणं सा वेला, सा य मेरा वि भण्णति, एवं संघसमुद्दस्स धितीवेला ताए परिवुडो त्ति वेड्ढितो वायणादिसज्झायजोगकरणं मगरो परप्पवादोपसग्गादिभिर्न क्षुभ्यति। रुंदो–महंतो। सेसं कंठं ॥ ११ ॥ इमं संघस्स मेरुरूवगं—

व्याख्या—'भद्दं' गाहा–सङ्घसमुद्रस्य भद्रं भवत्विति क्रिया। किम्भूतस्य? धृतिवेलापरिगतस्य धृतिः–आत्मपरिणामः सैव वेला–वेदिका जलान्तररमणलक्षणा मर्यादा वा, तया परिगतः तस्य। स्वाध्याययोगमकरस्य कर्मविदारणमहाशक्तियुक्तत्वात्

स्वाध्याय एव मकरो यस्मिंस्तस्य । अक्षोभ्यस्य–परीषहोपसर्गसम्भवे निष्प्रकम्पस्य । भगवतः–समग्रैश्वर्यादियुक्तस्य । रुन्दस्येति–विस्तीर्णस्येति गाथार्थः ॥ ११ ॥ इदानीं सङ्घस्यैव स्थिरतयाऽचलेन्द्ररूपकेण स्तुतिं कुर्वन्नाह—

**सम्मदंसणवरवइर–दढरूढगाढावगाढपेढस्स । धम्मवररयणमंडिय–चामीयरमेहलागस्स ॥ १२ ॥**
**नियमूसियकणयसिला–यलुज्जलजलंतचित्तकूडस्स । नंदणवणमणहर–सुरभिसीलगंधुद्धुमायस्स ॥ १३ ॥**
**जीवदयासुंदरकंदरु–द्दरियमुणिवरमइंदइन्नस्स । हेउसयधाउपगलंत–रयणदित्तोसहिगुहस्स ॥ १४ ॥**
**संवरवरजलपगलिय–उज्झरपविरायमाणहारस्स । सावगजणपउररवंतमोरनच्चंतकुहरस्स ॥ १५ ॥**
**विणयनयपवरमुणिवरफुरंतविज्जुज्जलंतसिहरस्स । विविहगुणकप्परुक्खगफलभरकुसुमाउलवणस्स ॥ १६ ॥**
**नाणवररयणदिप्पंतकंतवेरुलियविमलचुलस्स । वंदामि विणयपणओ संघमहामंदरगिरिस्स ॥ १७ ॥**

चूर्णिः—तस्य य पव्वतस्स इमे रूवगा, तस्स य पव्वयस्स इमे अवयवा–पेढं मेहला उस्सयो सिला मेहला सुवखडा, मेहलाए वणं गुहा, गुहासु य मइंदा, सुवण्णादिधातवो, नाणाविधवीरियोसहिपज्जलितो णिज्झरा य सलिलजुत्ता कुहरा य से मयूरादिपक्खिउवसोभिता अणुवग्घातिविज्जुल्लतोवसोभितो य सो कप्पादिरुक्खुवसोभितो य अंतरंतरेसु य वेरुलितादिरतणसोभितो एतेसिं पदाणं पडिरूवेण इमाहिं छहिं गाहाहिं उवसंहारो–'सम्मद्दंसण' गाहा, 'णियमू' गाहा, 'जीवदया' गाहा, 'संवर' गाहा, 'विणय' गाहा, 'णाणावरण' गाहा । संघपव्वतस्स सम्मद्दंसणं चेव वइरं, तं च संकादिसल्लरहियत्तणयो दढं ति रूढं

ति वड्डितं, कहं ? विसुज्झमाणत्तणतो 'गाढं'ति—अतीव 'अवगाढं'ति—ओगाढं सद्दहाणत्तणतो जीवादिपदत्थेसु अतीव ओगाढं ति वुत्तं भवति, एतं पेढं । धम्मो दुविहो मूलुत्तरगुणेसु, सो य दुविहोऽवि वरोत्ति—पधाणो, तत्थुत्तरगुणधम्मो रयणा, तेहिं मंडिता जे मूलगुणा ते चामीकरं ति—सुवण्णं तम्मयी मेखला तया जुत्तस्स मेहलागस्स । नियमो त्ति इंदियनोइंदिएसु अणेगविधो सो य णियमो सिलायलो तेहिं चेव उस्सितो असुभज्झवसाणविरहितत्तणतो कम्मविसुज्झमाणत्तणतो वा उज्जलसुत्तत्थाणुसरणत्तगतो जलति चित्तं, चिंतिज्जइ जेण तं चित्तं, तं चेव कूडं ति चित्तकूडस्स । णंदंति जेण वणयरजोइसभवणवेमाणिया विज्जाहरमणुया य तेण णंदणं, वणं ति—वणसंडं, तं च लतावल्लिविताणणेगसंठाणसंठितेहिं गहणं, पत्तपल्लवपुप्फफलोववेतेहिं मणहारित्तणतो मणहरं, गंधतो सुरभिगंधं, सीलवगसंडेऽवि जम्हा साधवो णंदंति प्रमोदन्ति (न्ते) रमन्तीत्यर्थः विविहलद्धिविसेसतो य मणहरं सीलवणं, विसुद्धभावत्तणतो य सुगंधं, जहा दव्ववणसंडं गंधेण उद्धुमातं ति व्याप्तं, तहा सोलगंधेण संघस्स गंधुद्धुमायस्स । किं च जं पव्वतासण्णं सिलारुक्खगहणं तं कंदरं ति, भावेण जीवेसु दयाकरणसुंदरं जं तं कंदरं ति, तत्थ य उप्पाबल्ले दरितो त्ति दप्पितो जीवदयाकरणदप्पितो त्ति वुत्तं भवति को य सो मुणिगणो सो चेव मुणिगणो मइंदो परप्पवादिसासणसंघमयाण इंदो, कहं ? सितवादुउत्तमभावत्तणतो । हेतु त्ति—पक्खधम्मो कारणं वा ते सतग्गसो सुत्ते संभवंति, ते य हेतवो धातू, ते य पगलंति परूवणगुहाए, सा य परूवणगुहा णाणादिरतणादिएहिं दित्ता, खेलोसहिमादिओसहीहिं वा दित्ता, एवं दित्तोसहि-गुहस्स संघस्स । संवरो त्ति—पच्चक्खाणं, तं चेव सलिलं किंचि पव्वतग्गाओ सरितं उज्झरं, इहावि खाइगभावाता खओवसमिय-उज्झरं, ततो पलंबिता खतोवसमितसंवरदगधारा, सच्चेव धारा हारो, तेण विरायते सोभति त्ति । सावगजणो पउरो त्ति—बहुप-

छिद्देणं दिणकरकिरणव्व विणिस्सिता दव्वमुज्जोवेंति, तहाऽवधिमावरणखयोवसमे अवधिलंभो अथापवत्तितो विण्णतो (५-८)

वृत्तिः—'से किं तं णोइंदियपच्चक्खं' अथ किं तत् नोइन्द्रियप्रत्यक्षं ?, नोइन्द्रियप्रत्यक्षं त्रिविधं प्रज्ञप्तं, तद्यथा अवधिज्ञानप्रत्यक्षमित्यादि । 'से किं तं' इत्यादि सूत्रम्-अथ किं तदवधिज्ञानप्रत्यक्षं ?, अवधिज्ञानप्रत्यक्षं द्विविधं प्रज्ञप्तं, तद्यथा-भवप्रत्ययं च क्षायोपशमिकं च, तत्र भवन्त्यस्मिन् कर्मवशवर्तिनः प्राणिन इति भवः नारकादिजन्मेति भावः, भव एव प्रत्ययः-कारणं यस्य तद्भवप्रत्ययं । चः पूर्ववत् । तथा क्षयश्चोपशमश्च क्षयोपशमौ, ताभ्यां निर्वृत्तं क्षायोपशमिकं । तत्र यद्येषां भवति तत्तेषामुपदर्शयन्नाह-'दुण्हं' इत्यादि, द्वयोः जीवसमूहयोः भवप्रत्ययं, तद्यथा-देवानां नारकाणां च, तत्र दीव्यन्तीति देवाः निरुपमक्रीडामनुभवन्तीत्यर्थः तेषां, तथा नरान् कायन्तीति नरकाः योग्यतया शब्दयन्तीत्यर्थः तेषु भवा नारकास्तेषाम् । अत्राह-नन्ववधिज्ञानं क्षायोपशमिके भावे वर्तते, देवनारकभवश्चौदयिकः, तत्कथं तद्भवप्रत्ययमिति ?, उच्यते-क्षायोपशमिकमेव तत् किंतु स एव देवनारकभवेऽवश्यंभावी पक्षिणां गगनगमनलब्धिनिमित्तवत् इत्यतो भवप्रत्यय इति, उक्तं च-"उदयखयखयोवसमोवसमा जं च कम्मुणो भणिया । दव्वं खेत्तं कालं, भवं च भावं च संपप्प ॥ १ ॥" तथा द्वयोः क्षायोपशमिकं, तद्यथा-मनुष्याणां पञ्चेन्द्रियतिर्यग्योनीनां च, न चैषामवश्यंतया भवतीत्यतः सत्यपि क्षायोपशमिकत्वे भवप्रत्ययाद्भिन्नमिदमिति, तत्वतस्तु सर्वमेव क्षायोपशमिकमिति । अधुना क्षयोपशमस्वरूपं प्रतिपादयन्नाह-'को हेऊ' इत्यादि, को हेतुः किं निमित्तं किं विषयं क्षायोपशमिकं ? यद्वा किं कारणं क्षायोपशमिकमुच्यते इत्यध्याहारः अत्र निर्वचनमभिधातुकाम आह-क्षायोपशमिकं तदावरणीयानाम् अवधिज्ञानावरणीयानां कर्मणामुदीर्णानाम्-उदयावलिकाप्राप्तानां क्षयेण

प्रलयेन अनुदीर्णानां च-आत्मनि व्यवस्थितानामुपशमेन उदयनिरोधेन अवधिज्ञानमुत्पद्यत इति संवन्धः । यत एवमतः कर्मोदयविषयम् । अथवा येन तदावरणीयानां कर्मणामुदीर्णानां क्षयेणानुदीर्णानामुपशमेनावधिज्ञानमुत्पद्यते तेन क्षायोपशमिकमित्युच्यते इति। स च क्षयोपशमो विशिष्टगुणप्रतिपत्तिमन्तरेण तथागुणप्रतिपत्तितश्च भवति, तत्रान्तरेण यथाऽऽकाशे घनपटलाच्छादितमूर्तेर्दिवसकरमण्डलस्य कथञ्चिदुपजातरन्ध्रेण विनिर्गतास्तिमिरनिचयप्रलयहेतवः किरणाः स्वावपातदेशास्पदं द्रव्यमुद्योतयन्ति तथा प्रकृतिभास्वरस्यात्मनो मिथ्यात्वादिजनितज्ञानावरणीयादिकर्ममलपटलतिमिरतिरस्कृतस्वभावस्यानादौ संसारे परिभ्रमतो यथाप्रवृत्त्योपजातावधिज्ञानावरणक्षयोपशमविवरस्यावधिज्ञानालोकः प्रसाधयति स्वकार्यमिति, गुणप्रतिपत्तिस्तु मूलगुणादिप्रतिपत्तेर्भवति । यत आह—

**अहवा गुणपडिवन्नस्स अणगारस्स ओहिनाणं समुप्पज्जइ, तं समासओ छव्विहं पन्नत्तं, तं जहा-आणुगामियं १ अणाणुगामियं २ वड्ढमाणयं ३ हीयमाणयं ४ पडिवाइयं ५ अप्पडिवाइयं ६ [ सू० ९ ]।**

चूर्णिः—'गुणपडिवन्न'इत्यादि—उत्तरुत्तरचरणगुणविसुज्झमाणवेक्खातो अवधिणाणदंसणावरणाण खयोवसमो भवति, तक्खयोवसमेण अवधी उप्पज्जति । अणुगामियं ति अणुगमणसीलो अणुगामितो तदावरणखयोवसमातप्पदेसविसुद्धगमणत्तातो लोयणं व ॥

वृत्तिः—'अथवा' इत्यादि, अथवेति प्रकारान्तरप्रदर्शनार्थम्, अन्तरेण प्रतिपत्तिमित्यस्मादिदं प्रकारान्तरमेव। गुणाः—मूलगुणादयस्तैः प्रतिपन्नो—गृहीतो गुणप्रतिपन्न इति, अनेनातिशयपात्रतामाह, यतः पात्राश्रयिणो, गुणाः, उक्तं च-"नोदन्वानर्थितामेति, न चाम्भोभिर्न पूर्यते। आत्मा तु पात्रतां नेयः, पात्रमायान्ति सम्पदः ॥ १ ॥" अथवा प्राकृतशैल्या पूर्वापरनिपातकरणात् प्रतिपन्नगुणस्य अनगारस्य, न गच्छन्तीत्यगाः- वृक्षास्तैः कृतमगारं- गृहं, नास्यागारं विद्यते इत्यनगारः-परित्यक्तद्रव्यभावगृह इत्यर्थः, तस्य प्रशस्ताध्यवसायस्य तदावरणकर्मक्षयोपशमे सत्यवधिज्ञानं समुत्पद्यते। 'तं समासतो' इत्यादि, तत् अवधिज्ञानं समासतः—संक्षेपेण षड्विधं—षट्प्रकारं प्रज्ञप्तं-प्ररूपितं। तद्यथा-'आनुगामुकम्' अनुगमनशीलमानुगामुकमवधिज्ञानं लोचनवद्गच्छन्तमनुगच्छतीति भावार्थः। 'अनानुगामुकं' नावधिज्ञानिनं गच्छन्तमनुगच्छति शृङ्खलाप्रतिबद्धप्रदीपवत् इति हृदयं। (वर्धते इति) वर्धमानं, तदेव वर्धमानकं, "संज्ञायां कन्" (पा० ५-३-८७) उत्पत्तिकालादारभ्य प्रवर्धमानं महेन्धननिबन्धनोत्पद्यमानानलज्वालाकलापवदिति भावना 'हीयमानकं' हीयते इति हीयमानं, तदेव हीयमानकं कुत्सायां कन् ('कुत्सिते' पा० ५-३-७४, इत्यनुवर्तमाने 'संज्ञायां कन्' पा० ५-३-७५ इत्यनेन), उदयसमयसमनन्तरमेव हीयमानं दग्धेन्धनप्रायधूमध्वजार्चिर्व्रातवदित्यर्थः। 'प्रतिपाति' प्रतिपतनशीलं प्रतिपाति, कथञ्चिदापादितजात्यमणिप्रभाजालवदिति गभार्थः। 'अप्रतिपाति' न प्रतिपाति अप्रतिपाति क्षारमृत्पुटपाकाद्यापाद्यमानजात्यमणिकिरणनिकरवदित्यभिप्रायः। आह—आनुगामुकानानुगामुकभेदद्वय एव शेषभेदानां वर्धमानकादीनामन्तर्भावात् किमर्थमुपन्यास इति?, उच्यते—सत्यप्यन्तर्भावे तद्विकल्पद्वयादेव तेषामपरिच्छित्तेः, तथाहि—नानुगामुकमनानुगामुकं चेत्युक्ते वर्धमानकादयो गम्यन्ते इत्यज्ञातज्ञापनार्थं च शास्त्रे प्रवृत्तिरित्यलं प्रसङ्गेन ॥

से किं तं आणुगामियं ओहिनाणं ?, आणुगामियं ओहिनाणं दुविहं पण्णतं, तं जहा-अंतगयं च मज्झगयं च । से किं तं अंतगयं ?, अंतगयं तिविहं पन्नत्तं, तं जहा--पुरओ अंतगयं मग्गओ अंतगयं पासओ अंतगयं । से किं तं पुरओ अंतगयं ?, पुरओ अंतगयं-से जहानामए केइ पुरिसे उक्कं वा चडुलिअं वा अलायं वा मणिं वा पईवं वा जोइं वा पुरओ काउं पणुल्लेमाणे २ गच्छेज्जा, से तं पुरओ अंतगयं । से किं तं मग्गओ अंतगयं?, मग्गओ अंतगयं-से जहानामए केइ पुरिसे उक्कं वा चडुलिअं वा अलायं वा मणिं वा पईवं वा जोइं वा मग्गओ काउं अणुकड्ढेमाणे २ गच्छिज्जा, से तं मग्गओ अंतगयं । से किं तं पासओ अंतगयं ?, पासओ अंतगयं--से जहानामए केइ पुरिसे उक्कं वा चडुलिअं वा अलायं वा मणिं वा पईवं वा जोइं वा पासओ काउं परिकड्ढेमाणे २ गच्छिज्जा, से तं पासओ अंतगयं । से किं तं मज्झगयं ?, मज्झगयं--से जहानामए केइ पुरिसे उक्कं वा चडुलिअं वा अलातं वा मणिं वा पईवं वा जोइं वा मत्थए काउं समुव्वहमाणे २ गच्छिज्जा, से तं मज्झगयं ॥

चूर्णिः—'अंतगयं' ति जहा जलंतं वणंतं पव्वतंतं अवसिट्ठो अंतसद्दो, एवं ओरालियसरीरंते ठितं गतं ति एगट्ठं, तं च

आतप्पदेसफड्डगावहि एगादिसोवलंभाओ य अंतगतमोहिणाणं भण्णति, अहवा सव्वातप्पदेसविसुद्धेसु वि ओरालियसरीरगंतेण एगदिसि पासणं गतं ति अंतगतं भण्णति, अहवा फुडतरमत्थो भण्णति एगदिसावधिउवलद्धखेत्तातो सो अवधिपुरिसो अंतगतो त्ति जम्हा तम्हा अंतगतं भण्णाति। मज्झगतं पुण ओरालियसरीरमज्झे फड्डगविसुद्धीतो सव्वातप्पदेसविसुद्धीतो वा सव्वदिसोवलंभत्तणतो मज्झगतो त्ति भण्णति, अहवाऽवधिउवलद्धिखेत्तस्स वा अवधिपुरिसो मज्झगतो त्ति अतो वा मज्झगतो ओही भण्णति। 'उक्क' त्ति दीविया, 'चुडलि' त्ति तणपिंडी अग्गे पज्जालिता, 'अलातं' ति दारुयं जलंतं, मणि वा जलिति 'जोइं' मल्लगादिठितं अगणि जलंतं, 'पदीवो' त्ति दीवतो, 'पुरतो' त्ति अग्गतो 'पणोल्लणं' ति 'णुद प्रेरणे' हत्थगहितस्स डंडगगहितस्स वा परंपरेण नुदन्नित्यर्थः, 'मग्गतो' त्ति पिट्ठतो, 'अणुकड्ढणं, ति हत्थगाहितस्स डंडगगहियस्स वा अणु--पच्छा या कड्ढणं ति, 'पासतो' त्ति दाहिणे वा वामे वा पासे दोसु वा सयं जमलठितं, परिकड्ढियं, ति हत्थडंड--गठितं वा परिपासतो ठितस्स कड्ढणं परिकड्ढणं ॥ सीसो पुच्छति—

वृत्तिः—'से किं तमाणुगामिकं' इत्यादि, अथ किं तदानुगामुकमवधिज्ञानं ?, आनुगामुकमवधिज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा--अन्तगतं च मध्यगतं च। इहान्तः--पर्यन्तो भण्यते, वनान्तवत् गतं स्थितमित्यनर्थान्तरम्। अन्ते गतमन्तगतम् अन्ते स्थितं, तच्च फड्डका (स्पर्धका) वधित्वादात्मप्रदेशान्ते सर्वात्मप्रदेशक्षयोपशमभावतो वा औदारिकशरीरान्ते एकदिगुपलम्भाद्वा तदुद्योतितक्षेत्रान्ते गतमन्तगतम्, इह तच्चात्मप्रदेशान्तगतमुच्यते सकलजीवोपयोगे सत्यपि साक्षादेकदेशेनैव दर्शनात्, औदारिकशरीरान्तगतमपि औदारिकशरीरैकदेशेनैव दर्शनाच्च, यथोक्तं क्षेत्रान्तगतं त्ववधिमतस्तदन्तवृत्तेरिति भावना। चशब्दः पूर्ववत्। 'मध्यगतं च' इह मध्यः प्रसिद्ध एव दण्डादिमध्यवत्, मध्ये गतं मध्यगतं मध्ये स्थितं, तच्च सर्वत्र फड्डक-

विशुद्धेरात्ममध्ये सर्वात्ममध्ये सर्वात्मनो वा क्षयोपशमयोगाविशेषेऽप्यौदारिकशरीरमध्योपलब्धेस्तन्मध्ये सर्वदिगुपलम्भाद्धा तत्प्रकाशितक्षेत्रमध्ये गतं मध्यगतम्, अत्र चात्ममध्यगतमभिधीयते, सर्वात्मोपयोगे सत्यपि मध्य एव फड्डकसद्भावात् साक्षान्मध्यभागेनोपलब्धेः, औदारिकशरीरमध्यगतमपि औदारिकशरीरमध्यभागेनैवोपलब्धेः, प्रस्तुतक्षेत्रमध्यगतं पुनर-वधिज्ञानिनः तत्र मध्ये भावादिति भावार्थः चशब्दः पूर्ववत् । 'से किं तं' इत्यादि प्रायः सुगमम्, नवरं उल्का–दीपिका, चुडली–पर्यन्तज्वलिता तृणपूलिका, अलातम्-उल्मुकं, मणिः-पद्मरागादिः, प्रदीपशिखादिज्योतिः, मल्लिकाद्याधारोऽग्निः, प्रदीपः प्रतीतः पुरतः–अग्रतः, हस्तदण्डादौ गृहीत्वा 'पणोल्लेमाणे पणोल्लेमाणे' त्ति प्रेरयन् २ गच्छेत्–यायात्, 'से तं' तदे-तत् पुरतोऽन्तगतम्, अयमत्र भावार्थः–स हि गच्छन् उल्कादिभ्यः सकाशात् पुरत एव पश्यति, नान्यत्र एवं यतोऽवधि-ज्ञानाद्विविधक्षयोपशमनिमित्तत्वाद्देशपुरत एव पश्यति, नान्यत्र, तत्पुरतोऽन्तगतमभिधीयते इत्येतावता अंशेन दृष्टान्तः इत्येवं सर्वत्र योज्यम् । 'से किं तं' इत्यादि, निगदसिद्धं नवरं अणुकड्ढेमाणे २ त्ति अनुकर्षन् २ । एवं 'परिकड्ढेमाणे २' इति परिकर्षन् २ । 'अथ किं तन्मध्यगतम्' इत्यादि निगदसिद्धमेव, नवरं मस्तके–शिरसि कृत्वा गच्छेत् । तदेतन्मध्यगतमिति एतदुक्तं भवति–स तेन मस्तकस्थेन सर्वत्र तत्प्रकाशितमर्थं पश्यति, परमेवं यतोऽवधिज्ञानात्तदुद्योतितार्थावगमस्तन्मध्यगत-मित्येतावता अंशेन दृष्टान्त इति ॥ इह व्याख्यातार्थं सम्यगनवगच्छन्नाह चोदकः—

**अंतगयस्स मज्झगयस्स य को पइविसेसो?, पुरओ अंतगएणं ओहिनाणेणं पुरओ चेव संखि-ज्जाणि वा असंखेज्जाणि वा जोअणाइं जाणइ पासइ, मग्गओ अंतगएणं ओहिनाणेणं मग्गओ**

चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ, पासओ अंतगएणं पासओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ, पासओ अंतगएणं पासओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ मज्झगएणं ओहिनाणेणं सव्वओ समंता संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ। से तं आणुगामियं ओहिनाणं(सू०१०)

चूर्णिः—'अंतगतस्स' इच्चाइ। आयरियाह–'पुरतो' इच्चाइ। 'सव्वतो' त्ति सव्वासु वि दिसिविदिसासु, समंता इति सव्वातप्पदेसेसु सव्वेसु वा विसुद्धफड्डगेसु वा, अहवा 'सव्वतो' त्ति सव्वासु दिसिविदिसासु सव्वातप्पदेसफड्डगेसु य, 'स' इति निद्देसे अवधिपुरिसस्स 'मंता' इति णाता, अहवा समं दव्वादयो तुल्ला, 'अत्ता' इति प्राप्ता इत्यर्थः।

वृत्तिः—'अंतगतस्स मज्झगतस्स य' इत्यादि सूत्रं सिद्धं यावत्। 'मज्झगतेणं' इत्यादि, मध्यगतेनावधिज्ञानेन सर्वतः– सर्वासु दिग्विदिक्षु समन्तात्–सर्वैरात्मप्रदेशैर्विशुद्धफड्डकैर्वा सङ्ख्येयानि वा असंख्येयानि वा योजनानि जानाति पश्यति, अथवा स मन्ता अवधिज्ञान्येव च गृह्यते, संख्येयानि चेत्यत्र संख्यायन्त इति संख्येयानि एकादीनि शीर्षप्रहेलिकापर्यन्तानि गृह्यन्ते, तत ऊर्ध्वमसङ्ख्येयानि, तदेतदानुगामुकमवधिज्ञानमिति॥

से किं तं अणाणुगामिअं ओहिनाणं?, अणाणुगामिअं ओहिनाणं से जहा नामए केइपुरिसे एगं महंतं जोइट्ठाणं काउं तस्सेव जोइट्ठाणस्स परिपेरंतेहिं २ परिघोलेमाणे २ तमेव जोइट्ठाणं

पासइ, अन्नत्थ गए न पासइ, एवामेव अणाणुगामिअं ओहिनाणं जत्थेव समुप्पज्जइ तत्थेव संखेज्जाणि असंखेज्जाणि वा संबद्धाणि वा असंबद्धाणि वा जोअणाइं जाणइ पासइ, अन्नत्थ गए ण पासइ से तं अणाणुगामिअं ओहिनाणं ( सू० ११ )।

चूर्णिः—णो गच्छति त्ति अणाणुगामिकं संकलापडिबद्धठितपदीवो व्व, तस्स य खेतावेक्खखयोवसमलाभत्तणतो अणाणुगामितं. 'पेरंतं' ति समंततो अगणिपासणं, तस्स य जोइस्स सव्वतो दिसिविदिसासु समंता 'परिघोलणं' ति पुणो २ इतो २ परिसक्कणं ॥

वृत्तिः—'से किं तं' इत्यादि प्रकटार्थमेव, नवरं ज्योतिःस्थानम्-अग्निस्थानं कृत्वा तस्यैव ज्योतिःस्थानस्य पर्यन्तेषु। किमेकदिग्गतेषु ?, नेत्याह-परिः सर्वतो भावे, ततश्च परिपर्यन्तेषु २ परिघूर्णन्-परिभ्रमन्नित्यर्थः, तदेव ज्योतिःस्थानं-ज्योतिःप्रकाशितं क्षेत्रामित्यर्थः पश्यति,अन्यत्र गतो न पश्यति,तदुपलम्भाभावात् तदावरणक्षयोपशमस्य तत्क्षेत्रसंबन्धसापेक्षत्वात्। एवमेव अनानुगामुकमवधिज्ञानं यत्रैव क्षेत्रे व्यवस्थितस्य सतः समुत्पद्यते तत्रैव व्यवस्थितः सन् संख्येयानि वाऽसंख्येयानि वा योजनानि संबद्धानि वाऽसंबद्धानि वा जानाति पश्यति, नान्यत्र, क्षेत्रसंबन्धसापेक्षत्वादवधिज्ञानावरणक्षयोपशमस्य। तदेतदनानुगामुकम् ॥

से किं तं वड्ढमाणयं ओहिनाणं ? २ पसत्थेसु अज्झवसाणट्ठाणेसु वट्टमाणस्स वट्टमाणचरि-

त्तस्स विसुज्झमाणस्स विसुज्झमाणचरित्तस्स सव्वओ समंता ओही वड्ढइ--जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स। ओगाहणा जहन्ना-ओहीखित्तं जहन्नं तु ॥ ४८ ॥ सव्वबहुअगणिजीवा, निरंतरं जत्तियं भरिज्जंसु । खित्तं सव्वदिसागं, परमोही खेत्तनिद्दिट्ठो ॥ ४९ ॥ अंगुलमावलिआणं, भागमसंखिज्ज दोसु संखिज्जं । अंगुलमावलिअंतो, आवलिआ अंगुलपुहुत्तं ॥ ५० ॥ हत्थम्मि मुहुत्तंतो, दिवसंतो गाउअम्मि बोद्धव्वो । जोयणदिवसपुहुत्तं, पक्खंतो पन्नवीसाओ ॥५१॥ भरहम्मि अद्धमासो, जंबूद्दीवम्मि साहिओ मासो । वासं च मणुअलोए, वासपुहुत्तं च रुअगम्मि ॥ ५२ ॥ संखिज्जम्मि उ काले, दीवसमुद्दाऽवि हुंति संखिज्जा। कालम्मि असंखिज्जे, दीवसमुद्दा उ भइअव्वा ॥५३॥ काले चउण्ह वुड्ढी, कालो भइअव्वु खित्तवुड्ढीए। वुड्ढीए दव्वपज्जव, भइअव्वा खित्तकाला उ ॥ ५४ ॥ सुहुमो अ होइ कालो, तत्तो सुहुमयरं हवइ खित्तं । अंगुलसेढिमित्ते, ओसप्पिणिओ असंखिज्जा ॥ ५५ ॥ से तं वड्ढमाणयं ओहिनाणं ( सू० १२ ) ।

चूर्णिः—वद्धंतं वुड्ढी पुव्वावत्थातो उवरुवरि वड्ढमाणं ति, तं च उस्सण्णं चरणगुणविसुद्धिमवेक्खत्तणतो पसत्थज्झवसाणट्ठाणातो जदि पसत्थलेसाणुगता भवंति, पसत्थदव्वलेसाहिं अणुरंजितं चित्तं पसत्थज्झवसाणं भण्णति, पसत्थज्झवसाणातो य

चरणागतविसुद्धीवो य चरणपच्चतलद्धीणं वुड्ढी भवति। इमाओ य जहण्णुक्कोसविमज्झिमोधिवुड्ढीदंसणगाहाओ जहा-पेढीयाए।

वृत्तिः—'से किं तं' इत्यादि, अथ किं तद्वर्धमानकं? २वर्धमानमेव वर्धमानकं प्रशस्तेष्वध्यवसायस्थानेषु वर्तमानस्य वर्तमानचारित्रस्य,इहौघतो द्रव्यलेश्योपरंजितं चित्तमध्यवसायस्थानमुच्यते,अस्य चानवस्थितत्वात् तद्द्रव्यसाचिव्ये सति विशेषभावात् वहुत्वमिति। तत्र प्रशस्तेष्वित्यनेनाप्रशस्तकृष्णलेश्यादिद्रव्योपरंजितव्यवच्छेदमाह। अध्यवसायस्थानेषु वर्तमानस्य प्रशस्ताध्यवसायस्येत्यर्थः, सर्वतः-समंतादवधिः परिवर्धत इति योगः, अनेनाविरतसम्यग्दृष्टेरपि वर्धमानक उक्तो वेदितव्यः। वर्तमानचारित्रस्येत्यनेन तु देशविरतसर्वविरतयोरिति। विशुद्ध्यमानस्य-तदावरणकर्ममलविगमादुत्तरोत्तरां शुद्धिमनुभवतः अविरतसम्यग्दृष्टेरेव, अनेनावधेः शुद्धिजन्यत्वमाह,विशुद्ध्यमानचारित्रस्य देशसर्वविरतस्य सर्वतः समंतादवधिः परिवर्धत इति,तत्र परिवर्धत इत्युक्तम्। अथ सर्वजघन्योऽयं कियत्प्रमाणो भवतीति प्रश्नसंभवे क्षेत्रतः प्रतिपादयन्नाह-'जावइया' गाहा, व्याख्या-यावतीयावत्प्रमाणा, आहारयतीत्याहारकः, त्रिसमयमाहारकः त्रिसमयाहारकः त्रीन् वा समयानिति तस्य,सूक्ष्मनामकर्मोदयात् सूक्ष्मस्तस्य, पनकश्चासौ जीवश्च पनकजीवः वनस्पतिविशेष इत्यर्थः तस्य,अवगाहन्ते यस्यां प्राणिनःसाऽवगाहना तनुरित्यर्थःजघन्या-सर्वस्तोका, अवधेः क्षेत्रं जघन्यं-सर्वस्तोकं, तुशब्द एवकारार्थः, स चावधारणे, तस्य चैवं प्रयोगः-अवधिक्षेत्रं जघन्यमेतावदेवेति। अत्र च सम्प्रदायसमधिगम्योऽयमर्थः-'योजनसहस्रमानो, मत्स्यो मृत्वा स्वकायदेशे यः। उत्पद्यते हि सूक्ष्मः,पनकत्वेनेह स ग्राह्यः ॥१॥ संहृत्य चाद्यसमये, स ह्यायामं करोति च प्रतरम्। संख्यातीताख्यांगुल-विभागबाहल्यमानं तु ॥ २ ॥ स्वतनुपृथुत्वमात्रं, दीर्घत्वेनापि जीवसामर्थ्यात्। तमपि द्वितीयसमये, संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥ संख्यातीतांगुल-विभा-

गविष्कम्भमाननिर्दिष्टाम्। निजतनुपृथुत्वदीर्घां, तृतीयसमये तु संहृत्य ॥४॥ उत्पद्यते च पनकः,स्वदेहदेशे स सूक्ष्मपरिणामः।
समयत्रयेण तस्या-वगाहना यावती भवति ॥५॥ तावज्जघन्यमवधे-रालम्बनवस्तुभाजनं क्षेत्रम्। इदमित्थमेव मुनिगण-सुस-
म्प्रदायात्समवसेयम् ॥६॥" अत्र कश्चिदाह-किमिति महान् मत्स्यः किं वा तस्य तृतीयसमये निजदेहदेशे समुत्पादः त्रिसमया-
हारकत्वं वा कल्प्यत इति ? अत्रोच्यते-स एव हि महामत्स्यस्त्रिभिः समयैरात्मानं संक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनो भवति,
नान्यः, प्रथमद्वितीयसमययोश्चातिसूक्ष्मः, चतुर्थादिषु चातिस्थूरः, त्रिसमयाहारक एव च तद्योग्य इत्यतस्तद्ग्रहणमिति। अन्ये तु
व्याचक्षते-त्रिसमयाहारक इति आयामविष्कम्भसंहारसमयद्वयं सूचिसंहारेणोत्पादसमयश्चैते त्रयः समया विग्रहाभावाच्चाहारक
एतेष्वित्यत उत्पादसमय एव त्रिसमयाहारकः सूक्ष्मः पनकजीवो जघन्यावगाहनश्च,अतस्तत्प्रमाणं जघन्यमवधिक्षेत्रमिति, एतच्चा-
युक्तं, त्रिसमयाहारकत्वस्य पनकजीवविशेषणत्वात्, मत्स्यायामविष्कम्भसंहरणसमयद्वयस्य च पनकसमयायोगात्त्रिसमयाहारक-
ताख्यविशेषणानुपपत्तिप्रसंगादलं प्रसंगेनेति गाथार्थः। एवं तावज्जघन्यमवधिक्षेत्रमुक्तमिदानीमुत्कृष्टविभागमभिधातुकाम
आह-'सव्वबहुअगणिजीवा' व्याख्या-सर्वेभ्यो-विवक्षितकालावस्थायिभ्योऽनलजीवेभ्य एव बहवः सर्वबहवो न भूतभविष्यद्भ्यो,
नापि शेषजीवेभ्यः,कुतः?असंभवात्,अग्नयश्च ते जीवाश्च अग्निजीवाः,सर्वबहवश्च तेऽग्निजीवाश्च सर्वबह्वग्निजीवाः,निरन्तरमिति क्रिया-
विशेषणं यावत्-यावत्परिमाणं भृतवंतो-व्याप्तवन्तः क्षेत्रम्-आकाशम्,एतदुक्तं भवति-नैरन्तर्येण विशिष्टसूचीरचनया यावद्भृतवन्त
इति,भूतकालनिर्देशश्चाजितस्वामिकाल एव प्रायः सर्वबहवोऽनलजीवा भवन्ति अस्यामवसर्पिण्यामित्यर्थस्य ख्यापनार्थमिदमनन्तरो-
दितविशेषणं,क्षेत्रमेकदिक्कमपि भवत्यत आह-सर्वदिक्कम्, अनेन सूचीपरिभ्रमणप्रमितमेवाह, परमश्चासाववधिश्च परमावधि क्षे-

त्रमनन्तरव्यावर्णितं प्रभूतानलजीवमितमंगीकृत्य निर्दिष्टः-क्षेत्रनिर्दिष्टः-प्रतिपादितो गणधरादिभिरिति। ततश्च पर्यायेण परमावधेरेतावत्क्षेत्रमित्युक्तं भवति। अथवा सर्वबह्वग्निजीवा निरंतरं यावद् भृतवन्तः क्षेत्रं सर्वदिक्कं, एतावति क्षेत्रे यानि अवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमंगीकृत्य निर्दिष्टः, भावार्थस्तु पूर्ववदेव, अयमक्षरार्थः, इदानीं साम्प्रदायिकः प्रतिपाद्यते-तत्र सर्वबह्वग्निजीवा बादराः प्रायोऽजितस्वामितीर्थकरकाले भवन्ति तदारम्भकपुरुषबाहुल्यात्, सूक्ष्माश्चोत्कृष्टपदिनस्तत्रैवावरुध्यन्ते, ततश्च सर्वबहवो भवन्ति, तेषां च स्वबुद्ध्या षोढाऽवस्थानं कल्प्यते, एकैकक्षेत्रप्रदेशे एकैकजीवावगाहनया सर्वतश्चतुरस्रो घनः प्रथमं,स एव जीवःस्वावगाहनया द्वितीयम्, एवं प्रतरोऽपि द्विभेदः, श्रेण्यपि द्विभेदा, तत्राद्याः पञ्चप्रकारा अनादेशाः क्षेत्रस्याल्पत्वात् क्वचित्समयविरोधाच्च, षष्ठः प्रकारस्तु सूत्रादेश इति, ततश्चासौ श्रेण्यवधिज्ञानिनः सर्वासु दिक्षु शरीरपर्यन्तेन भ्राम्यते, सा चासंख्येयानलोके लोकमात्रान् क्षेत्रविभागान् व्याप्नोति, एतावदवधिक्षेत्रमुत्कृष्टमिति सामर्थ्यमंगीकृत्यैवं प्ररूप्यते' एतावति क्षेत्रे यदि द्रष्टव्यं भवति (तर्हि) पश्यति,न त्वलोके द्रष्टव्यमस्तीति गाथार्थः। एतत्तावज्जघन्यमुत्कृष्टं चावधिक्षेत्रमभिहितम्, इदानीं विमध्यमप्रतिपिपादयिषया एतावत्क्षेत्रोपलम्भे चैतावत्कालोपलम्भः,तथैतावत्कालोपलम्भे चैतावत्क्षेत्रोपलम्भ इत्यस्यार्थस्य प्रदर्शनाय चेदं गाथाचतुष्टयं जगाद शास्त्रकारः-'अंगुलमावलियाणं'गाहा,'हत्थम्मि'गाहा, 'भरहम्मि'गाहा, 'संखेज्जम्मि उ' गाहा,आसां व्याख्या-अंगुलं क्षेत्राधिकारात् प्रमाणांगुलं गृह्यते,अवध्यधिकाराच्चोच्छ्रयांगुलमित्येके। आवलिका-असंख्येयसमयसंघातोपलक्षितः कालः, उक्तं च-"असंखेयाणं समयाणं समुदयसमितिसमागमेणं एगावलिग त्ति वुच्चइ"। अंगुलं चावलिका चांगुलावलिके, तयोरंगुलावलिकयोर्भागमसंख्येयं पश्यति अवधिज्ञानी, एतदुक्तं भवति-क्षेत्रम-

गुलासंख्येयभागमात्रं पश्यन् कालतः आवलिकाया असंख्येयमेव भागं पश्यत्यतीतमनागतं चेति, क्षेत्रकालदर्शनमुपचारेणोच्यते, अन्यथा हि क्षेत्रव्यवस्थितानि दर्शनयोग्यानि द्रव्याणि तत्पर्यायांश्च विवक्षितकालान्तर्वर्तिनः पश्यति, न तु क्षेत्रकालौ मूर्त्तद्रव्यालम्बनत्वात्,एवं सर्वत्र भावना द्रष्टव्या, क्रिया च गाथाचतुष्टयेऽप्यध्याहार्या। तथा द्वयोरंगुलावलिकयोः संख्येयौ भागौ पश्यति, अंगुलसंख्येयभागमात्रं क्षेत्रं पश्यन्नावलिकायाः संख्येयभागमेव पश्यतीत्यर्थः। तथाऽगुलं पश्यन् क्षेत्रतः आवलिकान्तः पश्यति भिन्नामावलिकामित्यर्थः। तथा कालत आवलिकां पश्यन् क्षेत्रतोऽगुलपृथक्त्वं पश्यति, पृथक्त्वं हि द्विप्रभृतिरानवभ्यः, इति प्रथमगाथार्थः। द्वितीयगाथाव्याख्या-हस्त इति हस्तविषयः क्षेत्रतोऽवधिः,कालतो मुहूर्त्तान्तः पश्यति भिन्नमुहूर्त्तमित्यर्थः, अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युच्यते, तथा कालतो दिवसान्तो-भिन्नदिवसं पश्यन्,क्षेत्रता गव्यूत इति गव्यूतविषयो बोद्धव्यः,तथा योजनविषयः क्षेत्रतोऽवधिः कालतो दिवसपृथक्त्वं पश्यति, तथा पक्षान्तः-भिन्नं पक्षं पश्यन् कालतः पंचविंशतियोजनानि पश्यतीति द्वितीयगाथार्थः। तृतीयगाथाव्याख्या-भरत इति क्षेत्रतो भरतविषयेऽवधौ कालतः अर्धमास उक्तः। एवं जम्बूद्वीपविषये चावधौ साधिको मासः, वर्षं च मनुष्यलोकविषयेऽवधाविति, मनुष्यलोकः खल्वर्धतृतीयद्वीपसमुद्रपरिमाणः,वर्षपृथक्त्वं च रुचकाख्यबाह्यद्वीपविषयेऽवधाववगन्तव्यमिति तृतीयगाथार्थः। चतुर्थगाथाव्याख्या-संख्यायत इति संख्येयः,स च संवत्सरलक्षणोऽपि भवति, तु शब्दो विशेषणार्थः। किं विशिनष्टि ? संख्येयो वर्षसहस्रात् परतोऽपि गृह्यते इति तस्मिन् संख्येये कलनं कालः तस्मिन् कालेऽवधेर्गोचरे सति क्षेत्रतस्तस्यैवावधेर्गोचरतया द्वीपाश्च समुद्राश्च द्वीपसमुद्रा अपि भवन्ति संख्येयाः, अपिशब्दान्महानेकोऽपि तदेकदेशोऽपीति, तथा कालेऽसंख्येये पल्योपमादिलक्षणेऽवधेर्विषये सति

तस्यैवासंख्येयकालपरिच्छेदकस्यावधेः क्षेत्रतः परिच्छेद्यतया द्वीपसमुद्रास्तु भाज्याः कदाचिदसंख्येया एव, यदा इह कस्यचिन्मनुष्यस्यासंख्येयद्वीपसमुद्रविषयोऽवधिरुत्पद्यत इति कदाचिन्महान्तः संख्येयाः कदाचिदेकदेशः स्वयम्भूरमणतिरश्चोऽवधिर्विज्ञेयः, स्वयंभूरमणविषयमनुष्यबाह्यावधेर्वा योजनापेक्षया च सर्वपक्षेष्वसंख्येयमेव क्षेत्रमिति गाथार्थः। एवं तावत्परिस्थूरन्यायमंगीकृत्य क्षेत्रवृद्ध्या कालवृद्धिरनियता कालवृद्ध्या च क्षेत्रवृद्धिः प्रतिपादिता। साम्प्रतं द्रव्यक्षेत्रकालभावापेक्षया यस्य वृद्धौ यस्य वृद्धिर्भवति यस्य वा न भवति अमुमर्थमभिधित्सुराह-'काले' गाहा व्याख्या-कालेऽवधिज्ञानगोचरे वर्धमाने चतुर्णां द्रव्यादीनां वृद्धिर्भवति, कालस्तु भाज्यो-विकल्पयितव्यः, क्षेत्रस्य वृद्धिः क्षेत्रवृद्धिस्तस्यां क्षेत्रवृद्धौ सत्यां कदाचिद्वर्धते कदाचिन्नेति, कुतः?, क्षेत्रस्य सूक्ष्मत्वात् कालस्य च स्थूलत्वात्, द्रव्यपर्यायौ तु वर्धेते, सप्तम्यन्तता चास्य-"ए होइ अकारंते, पयम्मि बीयाए बहुसु पुल्लिंगे। तइयाइसु छट्ठी सत्तमीण एक्कमि महिलत्थे ॥१॥" अस्माल्लक्षणात् सिद्धेत्येवमन्यत्रापि प्राकृतशैल्या इष्टविभक्त्यन्तता पदानामवगन्तव्येति। तथा वृद्धौ च द्रव्यं च पर्यायश्च द्रव्यपर्यायौ तयोर्वृद्धौ सत्यां भाज्यौ-विकल्पनीयौ क्षेत्रकालावेव तुशब्दस्यैवकारार्थत्वात्, कदाचिदनयोर्वृद्धिर्भवति कदाचिन्नेति, द्रव्यपर्याययोः सकाशात् परिस्थूरत्वात् क्षेत्रकालयोरिति भावार्थः। द्रव्यवृद्धौ तु पर्याया वर्धन्त एव, पर्यायवृद्धौ च द्रव्यं भाज्यं, द्रव्यात्पर्यायाणां सूक्ष्मत्वात् एकस्मिन् भावे(अ)क्रमवर्तिनामपि च वृद्धिसंभवात् कालवृद्ध्यभावो भावनीय इति गाथार्थः। अत्र कश्चिदाह-जघन्यमध्यमोत्कृष्टभेदभिन्नयोरवधिज्ञानसंबन्धिनोः क्षेत्रकालयोरंगुलावलिकाऽसंख्येयभागोपलक्षितयोः परस्परतः प्रदेशसमयसंख्यया परिस्थूरसूक्ष्मत्वे सति कियता भागेन हीनाधिकत्वमिति?, अत्रोच्यते-सर्वत्र प्रतियोगिनः खल्वावलिकाऽसंख्येयभागादेः कालादसंख्येयगुणं क्षेत्रं, कुत एतत्? अत आह-'सुहुमो य' गाहा, व्याख्या-सूक्ष्मश्च-श्लक्ष्णश्च भवति कालः, यस्मादुत्पलपत्रशतभेदे समयाः प्रतिपत्रमसंख्येयाः प्रतिपादितास्तथापि

ततः कालात्सूक्ष्मतरं भवति क्षेत्रं, कुतः ?, यस्मादंगुलश्रेणिमात्रे क्षेत्रे प्रदेशपरिमाणं प्रतिप्रदेशं समयगणनयाऽवसर्पिण्योऽसंख्येयास्तीर्थकृद्भिः प्रतिपादिताः, एतदुक्तं भवति-अंगुलश्रेणिमात्रक्षेत्रप्रदेशाग्रमसंख्येयावसर्पिणीसमयराशिपरिमाणमिति गाथार्थः। 'से तं' इत्यादि, तदेतद्वर्धमानकमवधिज्ञानमिति ॥

से किं तं हीयमाणयं ओहिनाणं ?, हीयमाणयं ओहिनाणं अप्पसत्थेहिं अज्झवसाणट्ठाणेहिं वट्टमाणस्स वट्टमाणचरित्तस्स संकिलिस्समाणस्स संकिलिस्समाणचरित्तस्स सव्वओ समंता ओही परिहायइ, से तं हीयमाणयं ओहिनाणं ४ (सू० १३)।

चूर्णिः—हाणी त्ति हस्समाणं पुव्वावत्थातो अधोऽधो हस्समाणं,तं च वड्ढमाणविपक्खतो भणितव्वं अप्पसत्थलेस्सोवरंजितं चित्तं अणेगासुभत्थचिंतणपरं चित्तं संकिलिट्ठं भण्णति ॥

वृत्तिः—'से किं तं'इत्यादि,अथ किं तत् हीयमानकं?,हीयमानकं कथंचिदवाप्तं सदप्रशस्तेष्वध्यवसायस्थानेषु 'वर्तमानस्य' सतोऽविरतसम्यग्दृष्टेर्वर्तमानचारित्रस्य' देशविरतादेः 'संक्लिश्यमानस्य' बद्ध्यमानकर्मसंसर्गादुत्तरोत्तरं संक्लेशमासादयतः अविरतसम्यग्दृष्टेरेव 'संक्लिश्यमानचारित्रस्य' देशविरतादेःसर्वतः-समन्ताद्वधिः परिक्षीयते, तदेतद्धीयमानकमवधिज्ञानमिति ॥

से किं तं पडिवाइओहिनाणं ?, पडिवाइओहिनाणं जहण्णेणं अंगुलस्स असंखिज्जयभागं वा संखिज्जभागं वा वालग्गं वा वालग्गपुहत्तं वा लिक्खं वा लिक्खपुहत्तं वा जूयं वा जूयपुहत्तं वा जवं वा

जवपुहुत्तं वा अंगुलं वा अंगुलपुहुत्तं वा पायं वा पायपुहुत्तं वा विहत्थिं वा विहत्थिपुहुत्तं वा रयणिं वा रयणिपुहुत्तं वा कुच्छिं वा कुच्छिपुहुत्तं वा धणुं वा धणुपुहुत्तं वा गाउअं वा गाउपुहुत्तं वा जोअणं वा जोअणपुहुत्तं वा जोअणसयं वा जोयणसयपुहुत्तं वा जोयणसहस्सं वा जोयणसहस्सपुहुत्तं वा जोअणलक्खं वा जोअणलक्खपुहुत्तं वा उक्कोसेणं लोगं वा पासित्ता णं पडिवइज्जा। से तं पडिवाइ ओहिनाणं ( सू० १४ )

चूर्णिः—उप्पन्नोहिनाणस्स पुणो पातो त्ति पडिवाती नाश इत्यर्थः, तं च खेत्तविसेसोवलंभेणं भण्णति, ते य इमे असंखेयंगुलभागादिया दुप्पभिति जाव णव त्ति अंगुलपुहुत्तं भण्णति, दो हत्था कुच्छी पडिवातिणो जाव उक्कोसो लोगमेत्तए वा ॥

वृत्तिः—'से किं तं' इत्यादि अथ किं तत् प्रतिपात्यवधिज्ञानं ?, प्रतिपात्यवधिज्ञानं 'जहन्नामिति,' यदवधिज्ञानं जघन्येन सर्वस्तोकतया अंगुलस्यासंख्येयभागमात्रं वा उत्कर्षेण-सर्वप्रचुरतया यावल्लोकं दृष्ट्वा-लोकमुपलभ्य तथाविधक्षयोपशमजन्यत्वात् प्रतिपतेत्-न भवेदित्यर्थः, तदेतत् प्रतिपात्यवधिज्ञानमिति क्रिया, शेषं प्रायो निगदसिद्धं, नवरं पृथक्त्वमिति द्विप्रभृतिः आनवभ्य इति सिद्धान्तपरिभाषा, तथा हस्तद्वयं कुक्षिरुच्यते, चत्वारो हस्ता धनुरिति, 'से त'मित्यादि, तदेतत्प्रतिपात्यवधिज्ञानं ॥

से किं तं अपडिवाइ ओहिनाणं ? अपडिवाइ ओहिनाणं जेणं अलोगस्स एगमवि आगासपएसं जाणइ पासइ तेण परं अपडिवाइ ओहिनाणं, से तं अपडिवाइ ओहिनाणं ( सू० १५ )

चूर्णिः—'अपडिवाति' त्ति सोऽवि खेत्तविसेसोवलंभातो चेव णज्जति, अतो भण्णति-'अलोगस्स एगमवि' त्ति, अविपदत्थो संभावणे, किमुत दुपदेसादिउवलंभे इत्यर्थः ॥

वृत्तिः—'से किं तं' इत्यादि, अथ किं तदप्रतिपात्यवधिज्ञानं ? 'जेणं' ति येनावधिज्ञानेनालोकस्य संबन्धिनमेकमप्याकाशप्रदेशम्, अपिशब्दात् बहून् वा पश्येत्-शक्त्यपेक्षयोपलभेत एतावत्क्षयोपशमप्रभवं यत् तत ऊर्ध्वमिति तत आरभ्याप्रतिपाति आकेवलप्राप्तेरवधिज्ञानमिति, अयमत्र भावार्थः- एतावत्क्षयोपशमसंप्राप्तात्मा विनिहतप्रधानप्रतिपक्षयोद्धसंघात इव नरपतिर्न पुनः कर्मशत्रुणा परिभूयते, किं तर्हि समासादितैतावदालोकजय एवाप्रतिनिवृत्तः । शेषमपि कर्मशत्रुं विनिर्जित्याप्नोति केवलराज्यश्रियमिति । लोकालोकविभागस्त्वयं- जीवादीनां वृत्तिर्द्रव्याणां भवति यत्र तत्क्षेत्रं तैर्द्रव्यैः सह लोकः, तद्विपरीतं ह्यलोकाख्यम् । 'से तं' इत्यादि तदेतदप्रतिपात्यवधिज्ञानमिति ॥ व्याख्याताः षड् भेदाः, साम्प्रतं द्रव्यादिविषयापेक्षया भेदतोऽवधिज्ञानमेव निरूपयन्नाह—

**तं समासओ चउव्विहं पन्नत्तं, तंजहा- दव्वओ खित्तओ कालओ भावओ, तत्थ दव्वओ णं ओहिनाणी जहन्नेणं अणंताइं रूविदव्वाइं जाणइ पासइ, उक्कोसेणं सव्वाइं रूविदव्वाइं जाणइ पासइ । खित्तओ णं ओहिनाणी जहन्नेणं अंगुलस्स असंखिज्जइभागं जाणइ पासइ, उक्कोसेणं असंखिज्जाइं अलोगे लोगप्पमाणमित्ताइं खंडाइं जाणइ पासइ कालओ णं ओहिनाणी जहन्नेणं**

**आवलियाए असंखिज्जइभागं जाणइ पासइ, उक्कोसेणं असंखिज्जाओ उस्सप्पिणीओ अवसप्पिणीओ अईयमणागयं च कालं जाणइ पासइ। भावओ णं ओहिनाणी जहन्नेणं अणंते भावे जाणइ पासइ, उक्कोसेण वि अणंते भावे जाणइ पासइ, सव्वभावाणमणंतभागं जाणइ पासइ ( सू० १६ )**

चूर्णि:— वित्थरेण खयोवसमविसेसतो असंखेज्जविधमोहिण्णाणं ओहिमादिगतिपज्जवसाणं वा चउद्दसविधवित्थरो ते पडुच्च इमं चतुविहं समासतो भण्णति- दव्वादि, दव्वओ ओधिण्णाणी जहण्णेणं तेयाभासंतरं अणंते दव्वे उवलब्भति, उक्कोसतो सव्वरूविदव्वाइं जाणइ त्ति नाणं, तं च जं विसेसग्गाहगं तं णाणं सागारमित्यर्थः, पासति त्ति दंसणं, तं च जं सामण्णग्गाहगं तं दंसणं अणागारमित्यर्थः। खेत्ततो कालतो य सुत्तसिद्धं। भावतो ओधिण्णाणी जहण्णेणं अणंते भावे उवलब्भति उक्कोसतोऽवि अणंते, जहण्णपदातो उक्कोसपदं अणंतगुणं, उक्कोसपदेऽवि जे भावा ते सव्वभावाण अणंतभागे वट्टंति ॥

वृत्तिः—'तं समासओ' इत्यादि, तत्-अवधिज्ञानं समासतः- संक्षेपेण चतुर्विधं प्रज्ञप्तं, तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावत इति। तत्र द्रव्यतः 'णं' इति वाक्यालंकारे, अवधिज्ञानी जघन्येन अनन्तानि द्रव्याणि तैजसभाषाद्रव्याणामपान्तरालवर्तीनि, यत उक्तम्- 'तेयाभासादव्वाण अंतरा एत्थ लब्भइ पट्ठवउ त्ति' उत्कृष्टतः सर्वरूपिद्रव्याणि बादरसूक्ष्मभेदभिन्नानि जानाति विशेषाकारेण, पश्यति सामान्याकारेण। आह-आदौ दर्शनं ततो ज्ञानमिति क्रमः, तत् किमर्थमेनं परित्यज्य प्रथमं जानातीत्युक्तम् ? अत्रोच्यते- इहावधिज्ञानाधिकारात्प्राधान्यख्यापनार्थमादौ जानातीत्युक्तम्, अवधिदर्शनस्य त्ववधिविभंगसाधारणत्वात्पश्चात्पश्यतीति। अथवा सर्वा एव लब्धयः साकारोपयोगोपयुक्तस्योत्पद्यन्ते इति, अवधेश्च लब्धित्वादित्य-

अवधि-विषयाः द्रव्यादयः

क्षेत्रतोऽवधिज्ञानी जघन्येनांगुलस्यासंख्येय-
स्यार्थस्य ख्यापनार्थमादौ जानातीत्याह, ततः क्रमेणोपयोगप्रवृत्तेः पश्यतीति । क्षेत्रतोऽवधिज्ञानी जघन्येनांगुलस्यासंख्येय-
भागमुत्कृष्टतोऽसंख्येयानि अलोके केवलाकाशास्तिकाये शक्तिमपेक्ष्य लोकप्रमाणानि खण्डानि जानाति पश्यति । कालतोऽव-
धिज्ञानी जघन्येनावलिकाऽसंख्येयभागमुत्कृष्टतोऽसंख्येया अवसर्पिण्युत्सर्पिणीरतीतं चानागतं च कालं जानाति पश्यतीति,
भावार्थः प्राक् प्रतिपादितः एव भावतोऽवधिज्ञानी जघन्येनानन्तान् भावान् पर्यायान् आधारद्रव्यानन्तत्वात् न तु प्रतिद्रव्य-
मिति, उत्कृष्टतोऽनन्तान् भावान् जानाति पश्यति, तेऽपि चोत्कृष्टपदिनः सर्वभावानां-सर्वपर्यायाणामनन्तभाग इति ॥
इत्थमवधिज्ञानं भेदतोऽप्यभिधाय साम्प्रतं संग्रहगाथामाह—

**ओही भवपच्चइओ, गुणपच्चइओ अ वण्णिओ दुविहो। तस्स य बहू विगप्पा, दव्वे खित्ते अ काले अ ॥ ५६ ॥**

चूर्णिः— 'ओधी भव' गाहा—दव्वतो बहुविगप्पा परमाणुमादिदव्वविसेसातो, खेत्ततोऽवि अंगुलअसंखेयभागविकप्पादिया, कालतोऽवि आवलियअसंखेज्जभागादिया, भावतोऽवि वण्णपज्जवादिया ॥

वृत्तिः—अवधिर्भवप्रत्ययो गुणप्रत्ययश्च वर्णितो-व्याख्यातः एषः अनन्तरं पाठान्तरं वा 'वर्णितो द्विविधः' तस्य द्विविधस्यापि बहवो विकल्पा द्रव्यत इति-द्रव्यविषयाः परमाणुकादिद्रव्यभेदात्, क्षेत्रत इति- क्षेत्रविषया अंगुलासंख्येयभागादिविशिष्टक्षेत्रभेदात् कालत इति- कालविषयाः आवलिकाऽसंख्येयभागाद्युपलक्षितकालभेदात् । चशब्दाद्भावविषयाश्च वर्णाद्यनेकप्रकारत्वाद्भावानाम् इति गाथार्थः ॥ एवं तावदवधिज्ञानमभिधाय साम्प्रतं ये बाह्यावधयो ये चाभ्यन्तरावधयो भवन्ति तानुपदर्शयन्नाह—

॥ ३४ ॥

**णेरइयदेवतित्थंकरा य, ओहिस्सऽबाहिरा हुंति। पासंति सव्वओ खलु, सेसा देसेण पासंति॥५७॥**
**से तं ओहिनाणपच्चक्खं।**

वृत्तिः—नारकाश्च देवाश्च तीर्थकराश्चेति समासः, चशब्द एवकारार्थः, स चावधारणे, अस्य च व्यवहितः प्रयोग इति दर्शयिष्यामः, एते नारकादयोऽवधेः-अवधिज्ञानस्य न बाह्या अबाह्या भवन्ति, इदमत्र हृदयम्-अवध्युपलब्धक्षेत्रस्यान्तर्वर्तन्ते सर्वतोऽवभासकत्वात् प्रदीपवत् अबाह्यावधय एव भवन्ति नैषां बाह्यावधिर्भवतीत्यर्थः। तथा पश्यति सर्वतः-सर्वासु दिक्षु विदिक्षु च, खलुशब्दोऽप्येवकारार्थः, स चावधारणे सर्वास्वेव दिक्ष्विति। आह- अवधेरबाह्या भवन्तीत्यस्मादेव सर्वत इत्यस्य सिध्धत्वात्सर्वतो ग्रहणमतिरिच्यत इति अत्रोच्यते- ननु अभ्यन्तरत्वे सत्यपि न सर्वे सर्वतः पश्यन्ति दिगन्तरालादर्शनादवधेर्विचित्रत्वात् अतो नातिरिच्यत इति। शेषास्तिर्यग्नरा देशेनेति- एकदेशेन पश्यन्ति, अत्रेष्टिताऽवधारणविधिः शेषा एव देशतः पश्यन्ति न तु देशत एवेति गाथार्थः॥ अथवाऽन्यथा व्याख्यायते-एवं तावदवधिज्ञानमभिधाय साम्प्रतं ये नियताऽवधयो ये चानियतावधयो भवन्ति तान् प्रतिपादयन्नाह- 'नेरइय' गाहा, व्याख्या- नारका देवा स्तीर्थकरा एवावधेरबाह्या भवन्ति। किमुक्तं भवति? नियतावधयो भवन्ति नियमेनैषामवधिर्भवतीत्यर्थः, तेन चावधिना पश्यन्ति सर्वत एव न पुनर्देशतोऽपि। अत्राह- पश्यन्ति सर्वत एवेत्येतावदेवास्तु अवधेरबाह्या भवन्तीत्येतत्त्वनर्थकं नियतावधित्वस्यार्थसिध्धत्वात् तथा चोक्तम्- "द्वयोर्भवप्रत्ययः, तद्यथा- देवानां च नारकाणां च" इति, अतोऽर्थगम्यमेवैषां नियतावधित्वं तीर्थकृतामपि प्रसिध्धतरपारभविकावधिसमन्वागमादेव नियतावधित्वसिध्धिरिति, अत्रोच्यते- नियतावधित्वे सिध्धेऽपि न सर्वे-

क्षेत्रतोऽवधिज्ञानी जघन्येनांगुलस्यासंख्येय-
स्यार्थस्य ख्यापनार्थमादौ जानातीत्याह, ततः क्रमेणोपयोगप्रवृत्तेः पश्यतीति।
भागमुत्कृष्टतोऽसंख्येयानि अलोके केवलाकाशास्तिकाये शक्तिमपेक्ष्य लोकप्रमाणानि खण्डानि जानाति पश्यति। कालतोऽव-
धिज्ञानी जघन्येनावलिकाऽसंख्येयभागमुत्कृष्टतोऽसंख्येया अवसर्पिण्युत्सर्पिणीरतीतं चानागतं च कालं जानाति पश्यतीति,
भावार्थः प्राक् प्रतिपादितः एव भावतोऽवधिज्ञानी जघन्येनानन्तान् भावान् पर्यायान् आधारद्रव्यानन्तत्वात् न तु प्रतिद्रव्य-
मिति, उत्कृष्टतोऽनन्तान् भावान् जानाति पश्यति, तेऽपि चोत्कृष्टपदिनः सर्वभावानां-सर्वपर्यायाणामनन्तभाग इति ॥
इत्थमवधिज्ञानं भेदतोऽप्यभिधाय साम्प्रतं संग्रहगाथामाह—

**ओही भवपच्चइओ, गुणपच्चइओ अ वण्णिओ दुविहो। तस्स य बहू विगप्पा, दव्वे खित्ते अ काले अ ॥ ५६ ॥**

चूर्णिः— 'ओधी भव' गाहा–दव्वतो बहुविगप्पा परमाणुमादिदव्वविसेसातो, खेत्ततोऽवि अंगुलअसंखेयभागविक-
प्पादिया, कालतोऽवि आवलियअसंखेज्जभागादिया, भावतोऽवि वण्णपज्जवादिया ॥

वृत्तिः—अवधिर्भवप्रत्ययो गुणप्रत्ययश्च वर्णितो-व्याख्यातः एषः अनन्तरं पाठान्तरं वा 'वर्णितो द्विविधः' तस्य
द्विविधस्यापि बहवो विकल्पा द्रव्यत इति-द्रव्यविषयाः परमाणुकादिद्रव्यभेदात्, क्षेत्रत इति- क्षेत्रविषया अंगुलासंख्येयभा-
गादिविशिष्टक्षेत्रभेदात् कालत इति- कालविषयाः आवलिकाऽसंख्येयभागाद्युपलक्षितकालभेदात्। चशब्दाद्भावविषयाश्च
वर्णाद्यनेकप्रकारत्वाद्भावानाम् इति गाथार्थः ॥ एवं तावदवधिज्ञानमभिधाय साम्प्रतं ये बाह्यावधयो ये चाभ्यन्तरावधयो
भवन्ति तानुपदर्शयन्नाह–

**णेरइयदेवतित्थंकरा य, ओहिस्सऽबाहिरा हुंति। पासंति सव्वओ खलु, सेसा देसेण पासंति॥५७॥**

**से तं ओहिनाणपच्चक्खं।**

वृत्तिः—नारकाश्च देवाश्च तीर्थकराश्चेति समासः, चशब्द एवकारार्थः, स चावधारणे, अस्य च व्यवहितः प्रयोग इति दर्शयिष्यामः, एते नारकादयोऽवधेः-अवधिज्ञानस्य न बाह्या अबाह्या भवन्ति, इदमत्र हृदयम्-अवध्युपलब्धक्षेत्रस्यान्तर्वर्तन्ते सर्वतोऽवभासकत्वात् प्रदीपवत् अबाह्यावधय एव भवन्ति नैषां बाह्यावधिर्भवतीत्यर्थः। तथा पश्यति सर्वतः-सर्वासु दिक्षु विदिक्षु च, खलुशब्दोऽप्येवकारार्थः, स चावधारणे सर्वास्वेव दिक्ष्विति। आह- अवधेरबाह्या भवन्तीत्यस्मादेव सर्वत इत्यस्य सिध्धत्वात्सर्वतो ग्रहणमतिरिच्यत इति अत्रोच्यते- ननु अभ्यन्तरत्वे सत्यपि न सर्वे सर्वतः पश्यन्ति दिगन्तरालादर्शनादव-धेर्विचित्रत्वात् अतो नातिरिच्यत इति। शेषास्तिर्यग्नरा देशेनेति- एकदेशेन पश्यन्ति, अत्रेष्टिताऽवधारणविधेः शेषा एव देशतः पश्यन्ति न तु देशत एवेति गाथार्थः॥ अथवाऽन्यथा व्याख्यायते-एवं तावदवधिज्ञानमभिधाय साम्प्रतं ये नियताऽवधयो ये चानियतावधयो भवन्ति तान् प्रतिपादयन्नाह- 'नेरइय' गाहा, व्याख्या- नारका देवा स्तीर्थकरा एवाव-धेरबाह्या भवन्ति। किमुक्तं भवति ? नियतावधयो भवन्ति नियमेनैषामवधिर्भवतीत्यर्थः, तेन चावधिना पश्यन्ति सर्वत एव न पुनर्देशतोऽपि। अत्राह- पश्यन्ति सर्वत एवेत्येतावदेवास्तु अवधेरबाह्या भवन्तीत्येतत्त्वनर्थकं नियतावधित्वस्यार्थसिध्ध-त्वात् तथा चोक्तम्- "द्वयोर्भवप्रत्ययः, तद्यथा- देवानां च नारकाणां च" इति, अतोऽर्थगम्यमेवैषां नियतावधित्वं तीर्थकृ-तामपि प्रसिध्धतरपारभविकावधिसमन्वागमादेव नियतावधित्वसिध्धिरिति, अत्रोच्यते- नियतावधित्वे सिध्धेऽपि न सर्व-

कालावस्थायित्वसिद्धिरित्यतस्तत्प्रदर्शनार्थमवधेरबाह्या भवन्तीति सदाऽवधिज्ञानवन्तो भवन्तीति ज्ञापनार्थत्वाददुष्टम्। यद्येवं तीर्थकृतां सर्वकालावस्थायित्वं विरुध्यत इति, न, छद्मस्थकालस्यैव विवक्षितत्वात्, अलं विस्तरेण, शेषं पूर्ववदिति गाथार्थः ॥ से तं ओहिनाणं' ति तदेतदवधिज्ञानम्।

बाह्याबाह्यावधिः मनःपर्यायस्य स्वामी

से किं तं मणपज्जवनाणं ? मणपज्जवनाणे णं भंते किं मणुस्साणं उप्पज्जइ अमणुस्साणं ? गोअमा ! मणुस्साणं नो अमणुस्साणं। जइ मणुस्साणं किं संमुच्छिममणुस्साणं गब्भवक्कंतिअमणुस्साणं ? गोअमा। नो संमुच्छिममणुस्साणं उप्पज्जइ गब्भवक्कंतिअमणुस्साणं उप्पज्जइ जइ गब्भवक्कंतियमणुस्साणं किं कमभूमिअगब्भवक्कंतिअमणुस्साणं अकम्मभूमियगब्भवक्कंतिअमणुस्साणं अंतरदीवगगब्भवक्कंतिअमणुस्साणं ? गोअमा ! कम्मभूमिअगब्भवक्कंतिअमणुस्साणं नो अकम्मभूमिअगब्भवक्कंतिअमणुस्साणं नो अंतरदीवगगब्भवक्कंतिअमणुस्साणं। जइ कम्मभूमिअगब्भवक्कंतिअमणुस्साणं किं संखिज्जवासाउयकम्मभूमिअगब्भवक्कंतिअमणुस्साणं असंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं ? गोअमा ! संखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं नो असंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं। जइ संखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणु-

॥ ३५ ॥

स्साणं किं पज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं अपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं ? गोअमा ! पज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं नो अपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं । जइ पज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं किं सम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं मिच्छदिट्ठिपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं सम्मामिच्छाद्दिट्ठिपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं ? गोअमा ! सम्मद्दिट्ठिपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं नो मिच्छाद्दिट्ठपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं नो सम्मामिच्छाद्दिट्ठपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं । जइ सम्मद्दिट्ठपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं किं संजयसम्माद्दिट्ठिपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं असंजयसम्माद्दिट्ठपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं संजयासंजयसम्माद्दिट्ठपज्जत्तगसंखिज्जवासाउअकम्मभूमियगब्भवक्कंतिअमणुस्साणं ? गो-

यमा ! संजयसम्मद्दिट्ठिपज्जत्तगसंखिज्जवासाउयकम्मभूमियगब्भवक्कंतिअमणुस्साणं नो असं-
जयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं नो संजयासंजयसम्मद्दि-
ट्ठिपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं । जइ संजयसम्मद्दिट्ठिपज्जत्तग-
संखिज्जवासाउयकम्मभूमिअगब्भवक्कंतिअमणुस्साणं किं पमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखिज्ज-
वासाउयकम्मभूमिअगब्भवक्कंतिअमणुस्साणं अपमत्तसंजयसम्मद्दिट्ठिपज्जत्तगअसंखेज्जवासाउअ-
कम्मभूमिअगब्भवक्कंतिअमणुस्साणं ? गोअमा ! अपमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअ-
कम्मभूमिअगब्भवक्कंतिअमणुस्साणं णो पमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअकम्मभूमिअ-
गब्भवक्कंतिअमणुस्साणंनोपमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअ
मणुस्साणं। जइ अपमत्तसंजयसम्मद्दिट्ठिपज्जत्तग संखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्सा-
णं किं इड्ढिपत्तअपमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं
अणिड्ढिपत्तअपमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखिज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं ?
गोअमा! इड्ढिपत्तअपमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं

मनःपर्या-
यस्य
स्वामी.

**नो अणिड्ढिपत्तअपमत्तसंजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउअकम्मभूमिअगब्भवक्कंतिअमणुस्साणं मणपज्जवनाणं समुप्पज्जइ ॥ ( सू० १७ )**

चूर्णि:—मणपज्जवनाणमिदाणिं–तस्स सरूवं वण्णितमादीए, इदाणिं सामी विसेसिज्जइ पुच्छुत्तरेहिं 'किं मणुस्स' इत्यादि, संमुच्छिममणुस्सा गब्भवक्कंतियमणुस्साणं चेव वंतपित्तादिसु संभवंति, कम्मभूमगा पंचसु भरहेसु पंचसु एरवदेसु पंचसु महाविदेसेसु य, हेमवतादिसु मिथुणा ते अकम्मभूमगा, तिण्णिजोयणसते लवणजलमोगाहित्ता चुल्लहिमवंतसिहरिपादपतिट्ठिता एगोरूगादिछप्पण्णअंतरदीवगा । 'किं पज्जत्तगाणं अपज्जत्ताणं' ति पज्जत्ती णाम सत्ती सामत्थं, सा य पुग्गलदव्वोवचया उप्पज्जति, ताओ य छप्पज्जत्तीतो ता । आहार॰सरीर॰इंदिय॰आणपाणू॰भासा॰मणपज्जत्ती चेति । तत्थ एगिंदियाणं चउरो विगलिंदियाणं पंच, असंणीणं संववहारतो पंच चेव, सण्णीणं च छ । तत्थ आहारपज्जत्ती नाम- खलरसपरिणामणसत्ती आहारपज्जत्ती, सत्तधातुतया परिणामणसत्ती सरीरपज्जत्ती, पंचण्हमिंदियाणं जोग्गा पोग्गला विचितु अणाभोगनिवत्तितविरियकरणेण तब्भावापायणसत्ती इंदियपज्जत्ती, पोग्गलजोग्गाणापाणूण गहणणिसिरणसत्ती आणापाणूपज्जत्ती, वइजोगे पोग्गले घेत्तुण भासत्ताए परिणामेत्ता वइजोगत्ताए निसिरणसत्ती भासापज्जत्ती, मणजोग्गे पोग्गले घेत्तूणं मणत्ताए परिणामेत्ता मणजोगत्ताए निसिरणसत्ती मणपज्जत्ती । एताओ पज्जत्तीओ पज्जत्तयणामकम्मोदएणं णिव्वित्तिज्जंति, ता जेसिं अत्थि ते पज्जत्तया, अपज्जत्तयणामकम्मोदएणं अणिव्वत्तातो जेसिं ते अपज्जत्तया । अप्पमत्तसंजता जिणकप्पिया परिहारविसुध्धिया

घडागासखेत्तेण विउलतरो भवति, एवं विउलमती अब्भहियतरागं मणोलद्धिजीवदव्वाधारखेत्तं जाणति, तं च नियमा विपुलतरं इत्यर्थः । अहवा आयामविक्खंभेणं अब्भहियतरागं बाहल्लेण विउलतरं खेत्तं उपलभत इत्यर्थः । अहवा दोऽवि पदा एगट्ठा विसिट्ठविसुद्धिविसेसदंसगो तरसद्दो त्ति यथा शुक्लः शुक्लतर इति । किं च जहा पगासगदव्वविसेसातो खेत्तविसुद्धिविसेसो लक्खिज्जति तहा मणपज्जवणाणावरणाविसेसातो रिजुमणपज्जवणाणिसमीवातो विपुलमणपज्जवणाणी विसुद्धतरागं जाणति, मणपज्जवणाणावरणखयोवसमुत्तमलंभत्तणतो वा वितिमिरतरागं ति भण्णति । अहवा पुव्वबद्धमण-पज्जवणाणावरणखयोवसमुत्तमलंभत्तणतो विसुद्धं ति भणितं, तस्सेवावरणवज्झमाणस्सऽभावत्तणतो पुव्वबद्धस्स य अणुद-यत्तणतो वितिमिरतरागं ति भण्णति । अहवा दोऽवि एते एगट्ठिया पदा मणपज्जवनाणस्स । सेसं कंठं । इदाणिं केवलणाणं भण्णाति मणपज्जवणाणाणंतरं सुत्तक्कमुद्दिट्ठत्तणतो विसुद्धिलाभुत्तरमयो य केवलं भणति ॥

वृत्तिः— एतच्चोत्पद्यमानं द्विधोत्पद्यते, तद्यथा- ऋजुमतिश्च विपुलमतिश्च मननं मतिः संवेदनमित्यर्थः, ऋज्वी-सामान्यग्राहिणी मतिः ऋजुमतिः, घटोऽनेन चिन्तित इत्यध्यवसायनिबन्धनमनोद्रव्यप्रतिपत्तिरित्यर्थः ॥ एवं विपुला-विशेष-ग्राहिणी मतिर्विपुलमतिः, घटोऽनेन चिन्तितः स च सौवर्णः पाटलिपुत्रकोऽद्यतनो महानित्याद्यध्यवसायहेतुभूतमनोद्रव्य-विज्ञप्तिरिति भावार्थः, अस्यां व्युत्पत्तौ स्वतंत्रं ज्ञानमेव गृह्यत इति । अथवा ऋज्वी- सामान्यग्राहिणी मतिरस्य सोऽयमृजु-मतिस्तद्वानेव गृह्यते, एवं विपुला- विशेषग्राहिणी मतिरस्येति विपुलमतिस्तद्वानेव, भावार्थः प्राग्वदुत्तरत्र वा वक्ष्यामः । 'तं समासतो' इत्यादि तत् समासतश्चतुर्विधं प्रज्ञप्तं, तद्यथा- द्रव्यतः क्षेत्रतः कालतः भावतः, तत्र द्रव्यतः 'णं' इति पूर्ववत्

ऋजुमतिः अनन्तान्-अपरिमितान् अनन्तपर माएवात्मकानित्यर्थः, स्कन्धान् विशिष्टैकपरिणामपरिणतान् संज्ञिभिः पञ्चेन्द्रियैः पर्याप्तकैः अर्धतृतीयद्वीपसमुद्रान्तर्वर्तिभिर्मनस्त्वेन परिणामितानित्यर्थः. जानीत इति मनःपर्यायज्ञानावरणक्षयोपशमस्य पटुत्वात्साक्षात्कारेण विशेषभूयिष्ठपरिच्छेदाज्जानीत इत्युच्यते । तदालोचितं पुनरर्थं घटादिलक्षणमध्यक्षतो न जानाति, किंतु तत्परिणामान्यथानुपपत्याऽनुमानतः पश्यतीत्युच्यते उक्तं च भाष्यकारेण--" जाणइ बज्झेऽणुमाणाउ त्ति " इत्थं चैतदङ्गीकर्तव्यम्, यतो मूर्त्तद्रव्यालम्बनमेवेदं, मन्तारस्त्वमूर्त्तमपि धर्मास्तिकायादिकं मन्येरन् न च तदनेन साक्षात्कर्तुं शक्यते । तथा चतुर्विधं चक्षुर्दर्शनादिदर्शनमुक्तमतो भिन्नालम्बनमेवेदमवसेयम्, तत्र च दर्शनसंभवात् पश्यतीत्यपि न दुष्टम्, एकप्रमात्रपेक्षया तदनन्तरभाविस्वाच्चोपन्यस्तामिति । ओघतो वैकविधक्षयोपशमलब्धौ विविधोपयोगसंभवाद्विशेषसामान्यार्थापेक्षया जानाति पश्यति चेत्यदुष्टमित्यलं विस्तरेण । तानेव विपुलमतिरभ्याधिकतरान् स्कन्धान् द्रव्यार्थतया वर्णादिभिश्च जानाति पश्यति च । क्षेत्रत ऋजुमतिरधो यावदस्या रत्नप्रभायाः पृथिव्या उपरिमाधस्त्यानि क्षुल्लकप्रतराणीति, क्षुल्लकप्रतरपरिज्ञानार्थमिमं पण्णविज्जंति--तिरयलोकस्स उड्ढाहमट्ठारसजोयणसयस्स बहुमज्झे एत्थ असंखेज्जंगुलभागमेत्ता लोगागासपतरा अलोगेण संवट्टिया सव्वखुड्डगतरा खुड्डागपतर त्ति भण्णंति, ते थ सव्वतो रज्जुप्पमाणा तेसिं बहुमज्झे दो खुड्डागपतरा, तेसिं बहुमज्झे जंबुद्दीवे रतणप्पभपुढवीबहुसमभूमिभागे मंदरस्स बहुमज्झे एत्थाट्ठपएसो रुयगो जत्तो दिसिविदिसिविभागो पवत्तो, एयं तिरियलोयमज्झं, एयातो तिरियलोयमज्झातो रज्जुप्पमाणखुड्डागपतरेहिंतो उवरिं तिरियं असंखेयंगुलभागवुड्ढी उवरि हुत्तोऽवि अंगुलअसंखेयभागारोहो चेव एवं तिरियमुवरिं च अंगुलासंखेयभागवुड्ढीए ताव लोग-

सावर्थश्चेति समासः, तं प्रकटयति- प्रकाशयति जनमनःपरिचिन्तितार्थप्रकटनं मानुषक्षेत्रम्- अर्धतृतीयद्वीपसमुद्रपरिमाणं तन्निबन्धनं, न तद्बहिर्व्यवस्थितप्राणिमनःपरिचिन्तितार्थविषयं प्रवर्तत इत्यर्थः, गुणाः- क्षान्त्यादयः त एव प्रत्ययाः कारणानि यस्य तद्गुणप्रत्ययं, चारित्रमस्यास्तीति चारित्रवान् तस्य चारित्रवत एवेदं भवति, एतदुक्तं भवति- अप्रमत्तसंयतस्य आमर्षौषध्यादिऋद्धिप्राप्तस्य चेति गाथार्थः । 'से तं मणपज्जवणाणं' तदेतत् मनःपर्यायज्ञानमिति ॥

मू०-से किं तं केवलनाणं ? केवलनाणं दुविहं पन्नतं, तं जहा- भवत्थकेवलनाणं च सिद्धकेवलनाणं च । से किं तं भवत्थकेवलनाणं ? भवत्थकेवलनाणं दुविहं पण्णत्तं, तं जहा- सजोगिभवत्थकेवलनाणं च अयोगिभवत्थकेवलनाणं च । से किं तं सजोगिभवत्थकेवलनाणं? सयोगिभवत्थकेवलनाणं दुविहं पण्णत्तं तं जहा- पढमसमयसयोगिभवत्थकेवलनाणं च अपढमसमयसजोगिभवत्थकेवलनाणं च, अहवा चरमसमयसयोगिभवत्थकेवलनाणं च अचरमसमयसजोगिभवत्थकेवलनाणं च । से तं सजोगिभवत्थकेवलनाणं । से किं तं अयोगिभवत्थकेवलनाणं ? अयोगिभवत्थकेवलनाणं दुविहं पन्नत्तं, तं जहा- पढमसमयअयोगिभवत्थकेवलनाणं च अपढमसमयअयोगिभवत्थकेवलनाणं च, अहवा चरमसमयअजोगिभवत्थकेवलनाणं च अचरमसमयअजोगिभवत्थकेवलनाणं च । से तं अजोगिभवत्थकेवलनाणं ( सू० १९ ).

चूर्णिः— ‘से किं तं केवल’ इत्यादि सूत्रम्, केवलनाणअभेदेऽवि भेदो भवसिध्धावत्थादिएहिं अणेगधा इमो क-ज्जति, मणुस्सभवट्ठितस्स जं केवलनाणं तं भवत्थकेवलनाणं, चसद्दो उस्सण्णे भेददंसणे, सव्वकम्मविप्पमुक्को सिद्धो, तस्स जं णाणं तं सिद्धकेवलनाणं। मणादितो जोगो, सो य जहा संभवतो तेण सह जोगेण सजोगी तस्स जं नाणं तं स-जोगिभवत्थकेवलनाणं। अजोगी सव्वजोगनिरुद्धो सभावठितो, तस्स जं णाणं तं अजोगिभवत्थकेवलनाणं। पढमसमयो केवलणाणुप्पत्तिसमयो चेव, अपढमो बितियादिसमयो जाव सजोगित्तस्स चरमसमयेत्यर्थः। अहवा एसेवत्थो समयविकप्पेण अण्णहा दंसिज्जति-सजोगिकालचरिमसमए चरिमो त्ति पच्छिमो, ततो परं अयोगी भविष्यतीत्यर्थः, अचरिमो त्ति चरिमो न भवति चरिमस्स आदिसमयातो आरब्भ ओमत्थगं गेज्झं जाव पढमसमयो ताव अचरमसमया भण्णत्ति, एतेसु जं णाणं तं अचरमसमयभवत्थकेवलनाणं, सेसं कंठं ॥

वृत्तिः— ‘से किं तं केवलनाणं’ इत्यादि, अथ किं तत् केवलज्ञानं? केवलनज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा-भवस्थकेवलज्ञानं च सिद्धकेवलज्ञानं च भवन्त्यस्मिन् कर्मवशवर्तिनः प्राणिन इति भवः, भवो गतिर्जन्मेति पर्यायाः, भवे तिष्ठतीति भवस्थः, तस्य केवलज्ञानं। भवस्थकेवलज्ञानं’ षिधौ (धू) संराद्धौ’ ‘राध साध संसिद्धो’ ‘षिधू शास्त्रे माङ्गल्ये च’ सिध्यति स्म सिद्धः, यो येन गुणेन निष्पन्नः--परिनिष्ठितो न पुनः साधनीयः सिद्धौदनवत् स सिद्धः, स च कर्मसिद्धादि भेदादनेकविधः, उक्तं च-“ कम्मे सिप्पे य विज्जाए, मंते जोगे अ आगमे। अत्थजत्ताअभिप्पाए, तवे कम्मक्खए इअ ॥ १ ॥ ” इह कर्मक्षयसि-द्धेनाधिकारः, स चाशेषकर्मांशक्षयात् कर्मक्षयसिद्धः, सितध्मांसित्वात् सिद्धः ‘सित वर्णबन्धनयोः’ इति सितं-बद्धमष्टप्रकारं कर्म

उड्ढलो-
वुड्ढी णेयव्वा जाव उड्ढलोयमज्झं, ततो पुणो तेणेव कमेणं संवट्टो कायव्वो जाव उवरिमलोगंतो रज्जुप्पमाणो, ततो
मसज्झातो उवरिं हेट्ठा य कमेण खुड्डागपतरा भाणियव्वा जाव रज्जुप्पमाणा खुड्डागपयर त्ति, तिरियलोयमज्झरज्जुप्पमाण-
खुड्डगपतरेहिंतोऽवि हेट्ठा अंगुलस्स असंखेयभागवुड्ढी तिरियं अहोवगाहेण वि अंगुलस्स असंखेयभागो चेव, एवमहोलोगो
वड्ढेयव्वो जाव अहोलोगंतो सत्तरज्जुओ सत्तरज्जुपतरेहिंतो वि उवरि कमेण खुड्डागपयरा भाणियव्वा जाव तिरियलोयमज्झा
रज्जुप्पमाणा खुड्डागपयर त्ति, एवं खुड्डागपरूवणे कते इमं भन्नइ--उवरिम त्ति तिरियलोयमज्झाओ अहो जाव नवजोयणस-
याणि ताव इमीसे रतणप्पभाए पुढवीते उवरिमखुड्डागपतर त्ति भन्नंति, तदधो अधोलोगे जाव अहोलोगिया गाम त्ति, एए
हेट्ठिमखुड्डागपयर त्ति भन्नंति, रिजुमती अहो ताव पस्सति त्ति, भणियं होइ । अहवा अहोलोगस्स उवरिमा खुड्डागपयरा ति-
रियलोगस्स य हेट्ठिमा खुड्डागपयर त्ति ते जाव पश्यतीत्यर्थः । अन्ने भणंति--उवरिम त्ति अधोलोगोवरि जे ते उवरिमा,
के य ते ? उच्यते--सव्वतिरियलोगवत्तिणो तिरियलोगस्स वा अहो नवजोयणसतवत्तिणो, ताण चेव जे हेट्ठिमा ते जाव पश्य-
तीत्यर्थः । इमं च ण घडति, अहोलोइयगाममणपज्जवणाणसंभवबाहल्लत्तणओ, उक्तं च--" इहाधोलौकिकान् ग्रामान्,
तिर्यग्लोकविवर्तिनः । मनोगतांस्त्वसौ भावान्, वेत्ति तद्वर्तिनामपि ॥ १ ॥ " अलं प्रसंगेन । एवमूर्ध्वं यावज्जोति-
श्चक्रस्योपरितलं तिर्यग्यावदन्तो मनुष्यक्षेत्रे मनुष्यलोकान्त इत्यर्थः । शेषं सुगमम् यावत् ' सण्णीणं पंचेंदियाणं ' इत्यादि,
तत्र संज्ञिनोऽपान्तरालगतावपि तदायुष्कसंवेदनादभिधीयन्त एव, न तैरिहाधिकार इत्यतः पञ्चेन्द्रियग्रहणं, ततोऽपि चोपपात-
क्षेत्रप्राप्ता अपि मनःपर्याप्त्याऽपर्याप्तका अपि भण्यन्ते, न च तैरपीहाधिकार इत्यदः पर्याप्तकग्रहणमिति, स्वरूपकथनं वा सं-

ज्ञिनां पंचेन्द्रियाणां पर्याप्तकानामिति । अथवा संज्ञिनो हेतुवादोपदेशेन विकलेन्द्रिया अपि भण्यन्ते, तद्व्यवच्छेदार्थं पञ्चेन्द्रियग्रहणं, तेऽप्यपर्याप्तका अपि भवन्ति, अतः पर्याप्तकग्रहणमिति । तं चेवेत्यादि, इह क्षेत्राधिकारस्यैव प्राधान्यात्तदेव मनोलब्धिसमन्वितजीवाधारक्षेत्रमभिगृह्यते । विपुलमतिः अर्धं तृतीयस्य येषु तानि अर्धतृतीयानि, तैरभ्यधिकतरं प्रभूततरमित्यर्थः, तदेव प्राकृतशैल्याऽभ्यधिकतरकं, एवं शेषेष्वपि द्रष्टव्यं, तत्रैकदिशमप्यधिकतरं भवत्यतः सर्वत्राभ्यधिकतरमिति प्रतिपादनार्थमाह–विपुलतरं--विस्तीर्णतरम् , अथवाऽऽयामविष्कम्भावाश्रित्याभ्यधिकतरं बाहल्यमाश्रित्य विपुलतरं, तथा विशुद्धतरं--निर्मलतरमित्यर्थः, यथा चन्द्रकान्तादि प्रकाशकद्रव्यं विमलविमलतरविशेषाद्विमलप्रकाशितद्रष्टुः सकाशाद्विमलतरप्रकाशितद्रष्टा विशुद्धतरं पश्यति, एवं विष्कम्भितोदयमनःपर्यायज्ञानावरणस्य कारणभेदतो मन्दमन्दतरविशेषभावात् ऋजुमतेः सकाशाद्विपुलमतिर्विशुद्धतरमिति उपशान्तावरणविशेषादपि ज्ञानस्य विशेष इत्येतावतांशेन दृष्टान्तः, तथा तदावरणक्षयोपशमविशेषाच्च वितिमिरतरं--निर्मलतरम् । अथवा प्राग्बद्धतदावरणकर्मक्षयोपशमस्य प्रधानत्वाद्विविशुद्धतरं बध्यमानावरणकर्मक्षयोपशमविशेषाच्च वितिमिरतरं बध्यमानाभावाच्च वितिमिरतरमित्यन्ये, अथवैकार्थिका एवैते शब्दा नानादेशजानां विनेयानां कस्यचित्कश्चित्प्रसिद्धो भवतीत्युपन्यस्ताः, क्षेत्रं तात्स्थ्यात्तद्व्यपदेश इति जानाति पश्यति । शेषं निगदसिद्धं यावत् ' मणपज्जव ' गाहा, व्याख्या--मनःपर्यायज्ञानं प्राग्निरूपितशब्दार्थं, पुनः शब्दो विशेषणार्थः, इदं हि रूपिनिबन्धनक्षायोपशमिकप्रत्यक्षादिसाम्येऽपि सत्यवधिज्ञानात्स्वाम्यादिभेदेन विशिष्टमिति स्वरूपतः प्रतिपादयन्नाह---जायन्त इति जनाः, तेषां मनांसि जनमनांसि, जनमनोभिः परिचिन्तितः जनमनःपरिचिन्तितः, जनमनःपरिचिन्तितश्चा-

सावर्थश्चेति समासः, तं प्रकटयति- प्रकाशयति जनमनःपरिचिन्तितार्थप्रकटनं मानुषक्षेत्रम्- अर्धतृतीयद्वीपसमुद्रपरिमाणं तन्निबन्धनं, न तद्बहिर्व्यवस्थितप्राणिमनःपरिचिन्तितार्थविषयं प्रवर्तत इत्यर्थः, गुणाः- क्षान्त्यादयः त एव प्रत्ययाः कारणानि यस्य तद्गुणप्रत्ययं, चारित्रमस्यास्तीति चारित्रवान् तस्य चारित्रवत एवेदं भवति, एतदुक्तं भवति- अप्रमत्तसंयतस्य आमर्षौषध्यादिऋद्धिप्राप्तस्य चेति गाथार्थः । 'से तं मणपज्जवणाणं' तदेतत् मनःपर्यायज्ञानमिति ॥

मू०-से किं तं केवलनाणं ? केवलनाणं दुविहं पन्नत्तं, तं जहा- भवत्थकेवलनाणं च सिद्धकेवलनाणं च । से किं तं भवत्थकेवलनाणं ? भवत्थकेवलनाणं दुविहं पण्णत्तं, तं जहा- सजोगिभवत्थकेवलनाणं च अयोगिभवत्थकेवलनाणं च । से किं तं सजोगिभवत्थकेवलनाणं? सयोगिभवत्थकेवलनाणं दुविहं पण्णत्तं तं जहा- पढमसमयसयोगिभवत्थकेवलनाणं च अपढमसमयसजोगिभवत्थकेवलनाणं च, अहवा चरमसमयसयोगिभवत्थकेवलनाणं च अचरमसमयसजोगिभवत्थकेवलनाणं च । से तं सजोगिभवत्थकेवलनाणं । से किं तं अयोगिभवत्थकेवलनाणं ? अयोगिभवत्थकेवलनाणं दुविहं पन्नत्तं, तं जहा- पढमसमयअयोगिभवत्थकेवलनाणं च अपढमसमयअयोगिभवत्थकेवलनाणं च, अहवा चरमसमयअजोगिभवत्थकेवलनाणं च अचरमसमयअजोगिभवत्थकेवलनाणं च । से तं अजोगिभवत्थकेवलनाणं ( सू० १९ ).

चूर्णिः— 'से किं तं केवल' इत्यादि सूत्रम्, केवलनाणअभेदेऽवि भेदो भवसिध्धावत्थादिएहिं अणेगधा इमो कज्जति, मणुस्सभवट्ठितस्स जं केवलनाणं तं भवत्थकेवलनाणं, चसद्दो उस्सण्णे भेददंसणे, सव्वकम्मविप्पमुक्को सिद्धो, तस्स जं णाणं तं सिद्धकेवलनाणं। मणादितो जोगो, सो य जहा संभवतो तेण सह जोगेण सजोगी तस्स जं नाणं तं सजोगिभवत्थकेवलनाणं। अजोगी सव्वजोगनिरुद्धो सब्भावठितो, तस्स जं णाणं तं अजोगिभवत्थकेवलनाणं। पढमसमयो केवलणाणुप्पत्तिसमयो चेव, अपढमो बितियादिसमयो जाव सजोगित्तस्स चरमसमयेत्यर्थः। अहवा एसेवत्थो समयविकप्पेण अण्णहा दंसिज्जति-सजोगिकालचरिमसमए चरिमो त्ति पच्छिमो, ततो परं अयोगी भविष्यतीत्यर्थः, अचरिमो त्ति चरिमो न भवति चरिमस्स आदिसमयातो आरब्भ ओमत्थगं गेज्झं जाव पढमसमयो ताव अचरमसमया भण्णत्ति, एतेसु जं णाणं तं अचरमसमयभवत्थकेवलनाणं, सेसं कंठं ॥

वृत्तिः— 'से किं तं केवलनाणं' इत्यादि, अथ किं तत् केवलज्ञानं? केवलनज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा-भवस्थकेवलज्ञानं च सिद्धकेवलज्ञानं च भवन्त्यस्मिन् कर्मवशवर्तिनः प्राणिन इति भवः, भवो गतिर्जन्मेति पर्यायाः, भवे तिष्ठतीति भवस्थः, तस्य केवलज्ञानं। भवस्थकेवलज्ञानं' षिधौ (धू) संराद्धौ' 'राध साध संसिद्धौ' 'षिधू शास्त्रे माङ्गल्ये च' सिध्यति स्म सिद्धः, यो येन गुणेन निष्पन्नः--परिनिष्ठितो न पुनः साधनीयः सिद्धौदनवत् स सिद्धः, स च कर्मासिद्धादि भेदादनेकविधः, उक्तं च-" कम्मे सिप्पे य विज्जाए, मंते जोगे अ आगमे। अत्थजत्ताअभिप्पाए, तवे कम्मक्खए इअ ॥ १ ॥" इह कर्मक्षयसिद्धेनाधिकारः, स चाशेषकर्मांशक्षयात् कर्मक्षयसिद्धः, सितध्मांसित्वात् सिद्धः 'सित वर्णबन्धनयोः' इति सितं-बद्धमष्टप्रकारं कर्म

तद्ध्वंसितुं शीलमस्येति सितध्वंसी सिद्धः तस्य केवलज्ञानं सिद्धकेवलज्ञानम् । 'से किं तं' इत्यादि अथ किं तद्भवस्थकेवलज्ञानं? भवस्थकेवलज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा--सयोगिभवस्थकेवलज्ञानं च अयोगिभवस्थकेवलज्ञानं च, इह युज्यन्त इति योगाः कायादयः, उक्तं च, " कायवाङ्मनःकर्म योगः, " ( तत्वा० ६-१ ) तत्रौदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो वाग्योगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो मनोयोगः, तद्यथा संभवं योगोऽस्य विद्यते इति सयोगी, सयोगी चासौ भवस्थश्च सयोगिभवस्थः, तस्य केवलज्ञानं सयोगिभवस्थकेवलज्ञानं । एवं न योगी अयोगी, स च भवस्थश्च अयोगिभवस्थः, तस्य केवलज्ञानं अयोगिभवस्थकेवलज्ञानं शैलेश्यवस्थागतस्येत्यर्थः । अथ किं तत् सयोगिभवस्थकेवलज्ञानं ? सयोगिभवस्थकेवलज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा-प्रथमसमयसयोगिभवस्थकेवलज्ञानं च अप्रथमसमयसयोगिभवस्थकेवलज्ञानं च, तत्र प्रथमसमयस्तत्प्रथमतयोत्पत्तिसमय एव गृह्यते, न प्रथमोऽप्रथमः द्वितीयादयः सर्वे एव शैलेश्यवस्थाप्राप्तेरप्रथमसमय इति । अथवेत्यन्यथा प्रतिपाद्यते--चरमसमय इत्यादि, तत्र चरमः सयोगिकालान्त्यसमयः, न चरमोऽचरमः पश्चानुपूर्व्या चरमादारभ्य सर्व एव आकेवलप्राप्तेरचरमा इति । से तमित्यादि निगमनम् । 'से किं तं' इत्यादि, अत्रापि शैलेश्यवस्थाभाविकेवलज्ञानमवधीकृत्यैवमेव भावनीयम्, अलं विस्तरेण । ' से तं ' इत्यादि निगमनं तदेतद्भवस्थकेवलज्ञानम् ॥

मु०—से किं तं सिद्धकेवलनाणं ? सिद्धकेवलनाणं दुविहं पण्णत्तं, तं जहा—अणंतरसिद्धके-

वलनाणं च परंपरसिद्धकेवलनाणं च ( सू० २० )

चूर्णिः—से किं तं सिद्धकेवलनाणं इत्यादिसूत्रं, तत्थ सिद्धकेवलणाणं दुविहं—अणंतरं, परंपरं तत्थ अणंतरं णो समयंतरं पत्तं सिद्धत्वप्रथमसमयवर्तिन इत्यर्थः ॥

वृत्तिः—'से किं तं' इत्यादि, अथ किं तत् सिद्धकेवलज्ञानं? सिद्धकेवलज्ञानं द्विविधं प्रज्ञप्तं, तद्यथा-अनन्तरसिद्धकेवलज्ञानं च परंपरसिद्धकेवलज्ञानं च। तत्र शैलेश्यवस्थापर्यन्तवर्तिसमयसमासादितसिद्धत्वस्य तस्मिन्नेव समये यत्केवलज्ञानं तदनन्तरसिद्धकेवलज्ञानं, ततो द्वितीयादिसमयेष्वनन्तामप्यनागताद्धां परंपरसिद्धकेवलज्ञानमिति ॥

**से किं तं अणंतरसिद्धकेवलनाणं ? अणंतरसिद्धकेवलनाणं पन्नरसविहं पण्णत्तं, तं जहा—तित्थसिद्धा १ अतित्थसिद्धा २ तित्थयरसिद्धा ३ अतित्थयरसिद्धा ४ सयंबुद्धसिद्धा ५ पत्तेयबुद्धसिद्धा ६ बुद्धबोहियसिद्धा ७ इत्थिलिंगसिद्धा ८ पुरिसलिंगसिद्धा ९ नपुंसगसिद्धा १० सलिंगसिद्धा ११ अन्नलिंगसिद्धा १२ गिहिलिंगसिद्धा १३ एगासिद्धा १४ अणेगासिद्धा १५ से तं अणंतरसिद्धकेवलनाणं ( सू० २१ )**

चूर्णिः—ते पंचदशविधाः तित्थसिद्धाइया, तित्थसिद्धा इति जे तित्थे सिद्धा ते तित्थसिद्धा, तित्थं च चाउव्वण्णो समणसंघो पढमगहधरो वा, भणितं च "आरिसे तित्थं भंते तित्थं अरिहादि तित्थं ? गोतमा! अरहा ताव तित्थंकरे, तित्थं पुण

चाउव्वण्णो समणसंघो ।" तम्मि तित्थकालभावे उप्पण्णे ततो वा तित्थकालभावातो जे सिद्धा ते तित्थसिद्धा ॥ १ ॥ अतित्थं चाउव्वण्णसंघस्स अभावो तित्थकालभावस्स वा अभावो, तम्मि अतित्थकालभावे अतित्थकालभावतो वा जे सिद्धा ते अतित्थसिद्धा, तं च अतित्थं तित्थंतरे तित्थे वा अणुप्पण्णे जहा मरुदेविसामिणिप्पभितयो २। रिसभादयो तित्थकरा, ते जम्हा तित्थकरणामकम्मुदयभावे ठिता तित्थकरभावातो वा सिद्धा तम्हा ते तित्थकरसिद्धा ३ । अतित्थकरा सामण्णकेवलिणो गोतमादि, तम्मि अतित्थकरभावे ठिता अतित्थकरभावातो वा सिद्धा अतित्थकरसिद्धा ४ । सयमेव बुद्धा सयंबुद्धा सयमप्पणा जे वा जाइसरणादिकारणं पडुच्च बुद्धा सयंबुद्धा, स्फुटतरमुच्यते- बाह्यप्रत्ययमन्तरेण ये प्रतिबुद्धास्ते स्वयंबुद्धाः, ते य दुविहा- तित्थगरा तित्थगरवतिरित्ता वा, इह वइरित्तेहिं अधिकारो, किं च सयंबुद्धस्स बारसविहो वि उवही भवति, पुव्वाधीतं से सुतं भवति वा ण वा, जति से नत्थि तो लिंगं नियमा गुरुसण्णिहे पडिवज्जइ गच्छे एव विहरति, अह पुव्वाधीतसुतसंभवो अत्थि तो से लिंगं देवता पयच्छाति गुरुसण्णिहे वा पडिवज्जति, जइ य एगविहारविहरणजोग्गो इच्छा वा से तो एक्को चेव विहरति, अण्णहा गच्छे विहरतीत्यर्थः, एतम्मि भावे ठिता सिद्धा एतातो वा भावातो सिद्धा सयंबुद्धसिद्धा ५ । पत्तेयबुद्धा पत्तेयं बाह्यं वृषभादिकारणमभिसमीक्ष्य बुद्धाः प्रत्येकबुद्धाः, बहिःप्रत्ययं प्रति बुद्धानां च पत्तेयं नियमा विहारो जम्हा तम्हा य ते पत्तेयबुद्धा जहा करकंडुमादयो, किं च पत्तेयबुद्धाणं जहण्णेण दुविहो उक्कोसेण नवविधो उवही नियमा पाउरणवज्जो भवति, किं च पत्तेय बुद्धाणं पुव्वाधीतं सुतं णियमा भवति जहण्णेणं एक्कारसंगा उक्कोसेणं भिण्णदसपुव्वा, लिंगं च से देवता पयच्छति, लिंगवज्जितो वा भवति, जतो भणितं-" रुप्पं पत्तेयबुद्धा " इति, एतम्मि भावे ए-

तातो वा सिद्धा पत्तेयबुद्धसिद्धा ६। बुद्धबोधिता जे सतं बुद्धेहिं तित्थकरादिएहिं बोहिता पत्तेयबुद्धेहिं वा कविलादिएहिं बोधि-
ता ते बुद्धबोधिता, अहवा बुद्धबोधिएहिं बोधिता बुद्धबोधिता, एवं सुहम्मादिएहिं जंबुणामादयो भवंति, अहवा बुद्ध इति
प्रतिबुद्धाः तेहिं प्रतिबोधिता बुद्धबोधिताः प्रभवादिभिराचार्यैः एतब्भावे ठिता एतातो वा सिद्धा बुद्धबोधितसिद्धा ७। सलिं-
गसिद्धा दव्वलिंगं प्रति रजोहरणमुहपोत्तिपडिग्गहधारणं सलिंगं, एतम्मि दव्वलिंगे ठिता एतातो वा सिद्धा सलिंगसिद्धा
८। अण्णलिंगसिद्धा तावसपरिव्वायगादिवक्कलकासायमादिदव्वलिंगठिता सिद्धा अण्णलिंगसिद्धा ९। गिहिलिंगेऽवि
केसादिअलंकरणादिए दव्वलिंगे ठिता सिद्धा गिहिलिंगसिद्धा १०। इत्थिलिंगं ति इत्थीए लिंगं इत्थिलिंगं, इत्थीए
उवलक्खणं त्ति वुत्तं भवति, तं तिविहं वेदो सरीरनिव्वत्ती णेवत्थं च, इह सरीरनिव्वत्तीए अधिकारो, ण वेदणेवत्थेहिं,
तत्थ वेदे कारणं जम्हा खीणवेदो जहण्णेणं अंतो मुहुत्तातो उक्कोसेण देसूणपुव्वकोडीतो सिज्झति, णेवत्थस्स य आणिय-
तत्तणतो, तम्हा ण तेहिं अहिकारो, सरीराकारणिव्वत्ती पुण णियमा वेदुदयातो णामकम्मुदयाओ य भवति, तम्मि सरीर-
निव्वत्तिलिंगे ठिता सिद्धा तातो वा सिद्धा इत्थिलिंगसिद्धा ११। एवं पुरिसणपुंसकलिंगा वि भाणितव्वा १२-१३।
एकसिद्धात्ति एकम्मि समए एक्को चेव सिद्धो १४। अणेगसिद्ध त्ति एक्कम्मि समए अणेगे सिद्धा दुगादि जाव अट्ठसतं ति,
भणितं च-'बत्तीसा अडयाला, सट्ठी बावत्तरी य बोधव्वा। चुलसीति छण्णउती, दुरहित अट्ठुत्तरसतं च ॥ १ ॥" १५।
चोदक आह-णणु एते पण्णरसभेदा वि भेदठिताअण्णोण्णनिरवेक्खा ण भवंति कहं पण्णरसभेद त्ति पण्णत्ता ? आचार्य
आह- णणु तित्थातित्थपुरिसविभागुप्पण्णणुप्पण्णकालभेदतो वा दो भेदा परोप्परविरुद्धा, तहा तित्थगरणामकम्मुदयातो

अभावतो य दो भेदा परोप्परविरुद्धा, तहा लिंगादिया दव्वलिंगपडिवत्तिभेदा परोप्परविरुद्धा, तहा मोहुत्तरपगडिवेदभेदोदयतो त्थितिमादिसरीरलिंगणिव्वत्ती परोप्परविरुद्धा, एगाणेगाऽदि एक्ककालसहचरिताचरितत्तणतो भिण्णा सयंबुद्धादयोऽवि णाणावरणक्खओवसमविसेसपडिबोधविसेसत्तणतो प्रतिविसिट्ठा, एवं तित्थादियाण अण्णोण्णलक्खणसभावठिताणं पंचदस भेदा पण्णत्ता, किंच जहा मतिणाणे आदियाण चरिमपज्जवसाणाणं अण्णोण्णाणुवेक्खंताणऽवि भेदो इहं पि जइ तहा तो को दोसो ? किंच नाणणयाभिप्पायत्तणतो सुत्तस्स य अणेगगमपज्जायत्तणतो अभिधाणभेदत्तणतो य पंचदसभेदकरणं ति ण दोसो ॥

वृत्तिः— 'से किं तं' इत्यादि प्रश्नसूत्रस्य निर्वचनम्, अनन्तरसिद्धकेवलज्ञानं पञ्चदशविधंप्रज्ञप्तं, सिद्धानामेवानन्तरभवगतोपाधिभेदेन पञ्चदशभेदभिन्नत्वात्, पञ्चदशभेदभिन्नतामेव दर्शयन्नाह तद्यथा--तीर्थसिद्धा इत्यादि, तत्र येनेह जीवा जन्मजरामरणसलिलं मिथ्यादर्शनाविरतिगंभीरं विचित्रदुःखगणकरिमकरं रागद्वेषपवनप्रक्षोभितमनन्तसंसारसागरं तरन्ति तत्तीर्थमिति, तच्च यथावस्थितसकलजीवाजीवादिपदार्थप्ररूपकमत्यन्तानवद्यान्याविज्ञातचरणकरणक्रियाधारमचिन्त्यशक्तिसमन्वितावेसंवाद्युडुपकल्पं चतुस्त्रिंशदतिशयसमन्वितपरमगुरुप्रणीतं प्रवचनम्, एतच्च संघः प्रथमगणधरो वा, तथा चोक्तम्- "तित्थं भंते तित्थं तित्थकरे तित्थं ? गोयमा ! अरिहा ताव नियमा तित्थंकरे, तित्थं पुण चाउवन्नो समणसंघो पढमगणहरो वा" इत्यादि, ततश्च तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः १। अतीर्थसिद्धास्तीर्थान्तरसिद्धा इत्यर्थः, श्रूयते च- "जिणंतरे साहुवुच्छेओ त्ति" तत्रापि जातिस्मरणादिनाऽवाप्तापवर्गमार्गाः सिध्यन्ति एव, मरुदेवीप्रभृतयो वाऽतीर्थ-

सिद्धाः, तदा तीर्थस्यानुत्पन्नत्वात् २ । तीर्थकरसिद्धास्तीर्थकरा एव ३ । अतीर्थकरासिद्धा अन्ये सामान्यकेवलिनः ४। स्वयं
बुद्धाः सन्तो ये सिद्धास्ते स्वयंबुद्धसिद्धाः ५ । प्रत्येकबुद्धाः सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धाः इति ६ । अथ स्वयंबुद्ध-
प्रत्येकबुद्धयोः कः प्रतिविशेषः इति ? उच्यते- बोध्युपधिश्रुतलिंगकृतो विशेषः, तथाहि- स्वयंबुद्धा बाह्यप्रत्ययमन्तरेणैव
बुध्यन्ते, प्रत्येकबुद्धास्तु न तद्विरहेण, श्रूयते च बाह्यवृषभादिप्रत्ययसापेक्षा करकण्ड्वादीनां प्रत्येकबुद्धानां बोधिरिति ।
उपधिस्तु स्वयंबुद्धानां द्वादशविधः पात्रादिः, प्रत्येकबुद्धानां तु नवविधः प्रावरणवर्जः । स्वयंबुद्धानां पूर्वाधीतश्रुतेऽनियमः,
प्रत्येकबुद्धानां तु नियमतो भवत्येव । लिंगप्रतिपत्तिः स्वयंबुद्धानामाचार्यसन्निधावपि भवति, प्रत्येकबुद्धानां तु देवता
प्रयच्छति इत्यलं विस्तरेण । बुद्धबोधितसिद्धाः बुद्धा-आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्त इह गृह्यन्ते ७ । एते च सर्वेऽपि
केचित्स्त्रीलिंगासिद्धाः ८ । केचित्पुंल्लिंगसिद्धाः ९ । केचिन्नपुंसकालिंगासिद्धाः इति १० । आह-तीर्थकरा अपि स्त्रीलिंगसिद्धा
भवन्ति ? भवन्तीत्याह, यत उक्तं सिद्धप्राभृते-"सव्वत्थोवा तित्थगरिसिद्धा, तित्थगरितित्थे णो तित्थसिद्धा संखेज्जगुणा,
तित्थगरि तित्थे णो तित्थगरिसिद्धाओ संखेज्जगुणाओ, तित्थगरि तित्थे णो तित्थगरसिद्धा संखेज्जगुणा" इति । न तु
नपुंसकलिंगः, प्रत्येकबुद्धास्तु पुल्लिङ्गा एव । स्वलिङ्गसिद्धा द्रव्यलिंगं प्रतित्य रजोहरणगोच्छकधारिणः ११ । अन्यलिंग-
सिद्धाः परिव्राजकादिलिंगे सिद्धाः १२ । गृहिलिंगसिद्धा मरुदेवीप्रभृतयः १३ । एकसिद्धा इति एकस्मिन् समये एक
एव सिद्धः १४।। अणेगसिद्धा इति एकस्मिन् यावदष्टशतं सिद्धं, यत उक्तम्-" बत्तीसा अडयाला सट्ठी बावत्तरी य
बोद्धव्वा। चुलसीती छन्नउई, दुरहिय अट्ठुत्तरसयं च ॥ १ ॥" १५ । अत्राह चोदकः—ननु सर्व एवैते भेदास्तीर्थसिद्धा-

तीर्थसिद्धभेदद्वयान्तर्भाविनः, तथाहि-तीर्थसिद्धा एव तीर्थकरसिद्धाः अतीर्थकरसिद्धा अपि तीर्थसिद्धा वा स्युरतीर्थसिद्धा वेत्येवं शेषेष्वपि भावनीयमित्यतः किमेभिरिति ? अत्रोच्यते--अन्तर्भावे सत्यपि पूर्वभेदद्वयादेवोत्तरोत्तरभेदाप्रतिपत्तेः अज्ञातज्ञापनार्थं च भेदाभिधानमिति । से तमित्यादि निगमनम् ॥

से किं तं परंपरसिद्धा केवलनाणं ? परंपरासिद्धकेवलनाणं अणेगविहं पण्णत्तं, तं जहा--अपढमसमयसिद्धा दुसमयसिद्धा तिसमयसिद्धा चउसमयसिद्धा जाव दससमयसिद्धा संखिज्जसमयसिद्धा असंखिज्जसमयसिद्धा अणंतसमयसिद्धा, से तं परंपरासिद्धकेवलनाणं । से तं सिद्धकेवलनाणं ॥ तं समासओ चउविहं पण्णत्तं, तं जहा--दव्वओ खित्तओ कालओ भावओ । तत्थ दव्वओ णं केवलनाणी सव्वदव्वाइं जाणइ पासइ, खित्तओ णं केवलनाणी सव्वं खित्तं जाणइ पासइ, कालओ णं केवलनाणी सव्वं कालं जाणइ पासइ, भावओ णं केवलनाणी सव्वे भावे जाणइ पासइ । "अह सव्वदव्वपरिणामभावविण्णत्तिकारणमणंतं । सासयमप्पडिवाई एगविहं केवलं नाणं " ॥ ५८ ॥ ( सू०२२ )

चूर्णिः--इदाणिं तं चेव सिद्धकेवलनाणं समयभेदतो अणेगधा विसेसिज्जति--पढमसमयसिद्धस्स जो बितियसमयो तंमि सिद्धो सो परो, तस्स वि य अण्णो, एवं परंपरसिद्धकेवलनाणं भाणितव्वं, तं च अपढमसमय इत्यादि, नास्य प्रथमः समयो विद्यत इत्यप्रथमः द्वितीयसमयसिद्ध इत्यर्थः; स च परंपरसिद्धविसेसणस्स प्रथमः, तस्स परतो बितियादि समया भाणितव्वा ॥

तं सव्वं पि चउव्विहं दव्वादियं, सव्वदव्वं ति धम्माधम्मागासादयो तेहिंतो जीवदव्वा अणंतगुणा, तेहिंतोऽवि पुग्गलदव्वा अणंतगुणा, एते सव्वे सरूवतो जाणति, खेत्तं पि लोगालोगभेदभिण्णमणंतं सरूवओ जाणति, कालं पि समयावलियादियं तीयमणागतं सव्वद्धं वा सरूवतो सव्वं जाणति, भावाऽवि दुविहा, जीवभावा अजीवभावा य, तत्थ जीवभावा कम्मु-दयसतत्तपरिणामितलक्खणा गतिकसायादिया कम्मुदयलक्खणा अणेगविधा। उवसमखयखयोवसमजीवसतत्तलक्खणा अणेगविहा, पारिणामिता य जीवभव्वाभव्वत्तादिया, अजीवाऽमुत्तदव्वेसु धम्माधम्मागासगतिठितिअवगाहलक्खणा अगुरुलहुगा य अणंता, पुग्गलदव्वा य सुहुमबादरविस्ससापरिणता अब्भिदधणुमादिया अणेगविहा, परमाणुदुअणुगादीण य वण्णादिपज्जवा एगादिया अणंता, एते दव्वादिया सव्वे सव्वधा सव्वत्थ सव्वकालं उवउत्तो सागाराणागारलक्खणेहिं णाणदंसणेहिं जाणति पासति य। एत्थ केवलणाणदंसणोवयोगेहिं बहुधा समयसब्भावं आयबुद्धीए पकप्पेंता इमं भणंति- "केयी भणंति जुगवं, जाणइ पासति य केवली नियमा। अण्णे एगंतरियं, इच्छंति सुतोवदेसेणं ॥ १ ॥ अण्णे ण चेव वीसुं, दंसणमिच्छंति जिणवरिंदस्स। जं चिय केवलनाणं, तं चिय से दंसणं बेंति ॥ २ ॥" तत्थ जे ते भणंति जुगवं जाणति पासति य ते इमं उववत्तिं उवदिसंति—"जं केवलाइं सादी, अपज्जवसिताइं दोऽवि भणिताइं। तो बेंति केइ जुगवं, जाणति पासति य सव्वण्णू ॥३॥" किंच "इहराऽऽईनिहणत्तं, मिच्छावरणक्खयो त्ति व जिणस्स। इतरेतरावरणया, अहवा निक्कार-णावरणं ॥ ४ ॥ तह य असव्वण्णुत्तं, असव्वदरिसित्तणप्पसंगो य। एगंतरोवयोगे, जिणस्स दोसा बहुविहा य ॥ ५ ॥" एवं परेण बहुधा भणिते आगमवादी उत्तरं इमं आह- "भण्णइ भिन्नमुहुत्तो- वयोगकालेऽवि तो तिनाणिस्स। मिच्छा छावट्ठी

सागरोवमाइं खयोवसमो ॥ ६ ॥" जहा छउमत्थस्स मतिसुतावधिणाणेसु अंतमुहुत्तकालोवयोगसंभवे उवयोगाणुवयोगेण य छावट्ठिसागरो से ठितिकालो दिट्ठो तहा जति जिणस्स णाणदंसणा सादिअपज्जवसाणा उवओगाणुवओगेण भवंति तो को दोसो? जइ एतं ते णाणुमतं तो इमं ते कहं अणुमतं भविस्सइ? "अह णवि एवं तो सुण, जहेव खीणंतराइओ अरहा। संतेऽवि अंतराय-क्खयम्मि पंचप्पगारम्मि ॥ ७ ॥ सततं ण देइ लभइ व, भुंजइ उवभुंजइ व सव्वण्णू। कज्जम्मि देइ लभइ व, भुंजइ व तहेव इहयं पि ॥ ८ ॥" किंच- "दिंतस्स लभंतस्स व, भुंजंतस्स व जिणस्स एस गुणो। खीणंतरायत्ते, जं से विग्घं न संभवति ॥ ९ ॥ उवउत्तस्सेमेव य, नाणम्मि व दंसणम्मि व जिणस्स। खीणावरणगुणोऽयं, जं कसिणं मुणइ पासइ वा ॥ १० ॥" पुणो पर आह---"पासंतोऽवि ण जाणइ, जाणं व ण पासती जति जिणिंदो। एवं ण कदाइवि सो, सव्वण्णू सव्वदरिसी य ॥ ११ ॥ उत्तरं आचार्य आह- "जुगवमजाणंतोऽवि हु, चउहिं वि नाणेहिं जह चतुण्णाणी। भण्णइ तहेव अरहा, सव्वण्णू सव्वदरिसी य ॥ १२ ॥" पर एवाह- "तुल्ले उभयावरण-क्खयम्मि पुव्वं समुब्भवो कस्स। दुविधुवयोगाभावे जिणस्स जुगवं ति चोदेति ॥ १३ ॥" उत्तरमाचार्य आह- "भण्णति ण एस नियमो, जुगवुप्पण्णेण जुगवमेवेह। होयव्वं उवयोगेण, एत्थ सुण ताव दिट्ठंतं ॥ १४ ॥ जह जुगवुप्पत्तीएऽवि, सुत्ते सम्मत्तमइसुयाईणं। णत्थि जुगवोवयोगो, सव्वेसु तहेव केवलिणो ॥ १५ ॥" किंच- "भणितं पि य पण्णत्ती-पण्णवणादीसु जह जिणो समयं। जं जाणती ण पासति, तं अणुरतणप्पभादीणि ॥ १६ ॥" जे भणंति केवलणाणदंसणाण एगत्तं, ते इमं हेतुजुत्तिं भणंति- "जह किर खीणावरणे, देसण्णाणाण संभवो ण जिणे। उभयावरणातीते, तह केवलदंसणस्सावि ॥ १७ ॥" एस ते हेतुजुत्ति जहा अत्थसाधणं ण संसदइ,

तहा उत्तरं हेतुजुत्तीए चेव भण्णति-"देसण्णाणोवरमे, जह केवलणाणसंभवो भणितो। देसदंसणविगमे, तह केवलदंसणं होतु ॥ १८ ॥ अह देसनाणदंसण-विगमे तव केवलं मतं नाणं। न मतं केवलदंसणमिच्छामेत्तं णणु तवेदं ॥ १९ ॥" किंच- भण्णति जहोहिणाणी, जाणाति पासति य भासितं सुत्ते। ण य णाम ओहिदंसण- नाणेगत्तं तह इमं पि ॥ २० ॥" एवं पराभिप्पाये पडिसिद्धे एगतंरोवयोगता सिद्धा तहाविमं भण्णति- "जह पासइ तहा पासउ, पासति जेणेव दंसणं तं से। जाणइ जेणं अरिहा, तं से णाणं ति घेतव्वं ॥ २१ ॥" किंच सिद्धाधिकारे एगंतरोवयोगदंसिगा इमा फुडा गाहा-"नाणम्मि दंसणम्मि य एत्तो एगयरयम्मि उवउत्ता। सव्वस्स केवलिस्सा, जुगवं दो णत्थि उवयोगा ॥ २२ ॥" किंच भगवतीए- "उवयोगो एगतरो पणुवीसातिमे सए सिणायस्स। भणितो विगडत्थो च्चिय छट्ठुद्देसे विसेसेणं ॥ २३ ॥" किं च-"कस्स व णाणुमतमिणं, जिणस्स जति होज्ज दोऽवि उवयोगा। णूणं ण होंति जुगवं, जतो णिसिद्धा सुते बहुसो ॥ २४ ॥" 'अह सव्वदव्व' गाहा— ( कंठा )

वृत्ति—'से किं तं परंपर' इत्यादि, न प्रथमसमयसिद्धा अप्रथमसमयसिद्धाः परंपरसिद्धविशेषणं प्रथमसमयवर्तिनः सिद्धत्वसमयाद्द्वितीयसमयवर्तिन इत्यर्थः, त्र्यादिषु तु द्विसमयासिद्धादयः प्रोच्यन्ते, यद्वा सामान्येनाप्रथमसमयसिद्धा अभिधानविशेषतो द्विसमयादिसिद्धाभिधानमिति। शेषं प्रकटार्थं यावत् 'तं समासओ' इत्यादि, तदिति सामान्येन केवलज्ञानमभिगृह्यते, द्रव्यतः केवलज्ञानी सर्वद्रव्याणि धर्मास्तिकायादीनि सक्षाज्जानाति पश्यति, क्षेत्रतः केवलज्ञानी सर्वं क्षेत्रं लोकालोकभेदभिन्नं साक्षाज्जानाति पश्यति, इह च धर्मास्तिकायादिसर्वद्रव्यग्रहणे सत्यप्याकाशास्तिकायस्य क्षेत्रत्वेन

रूढत्वाद्भेदेनोपन्यासः, कालतः केवलज्ञानी सर्वं कालमतीतानागतवर्तमानभेदभिन्नं साक्षाज्जानाति पश्यति, भावतः केवलज्ञानी सर्वान् जीवाजीवगतान् भावान् गतिकषायागुरुलघुलक्षणादीन् साक्षाज्जानाति पश्यति । इह च केवलज्ञानदर्शनोपयोगचिन्तायां क्रमोपयोगादौ सूरीणामनेकविधा विप्रतिपत्तिः, अतः संक्षेपतो विनेयजनानुग्रहाय तत्प्रदर्शनं क्रियत इति, तत्र- "केयी भणंति जुगवं, जाणइ पासइ य केवली णियमा । अन्ने एगंतरियं, इच्छंति सुओवएसेणं ॥ १ ॥ अन्ने ण चेव वीसुं, दंसणमिच्छंति जिणवरिंदस्स । जं चिय केवलनाणं, तं चिय से दंसणं बिंति ॥ २ ॥" गाथाद्वयम् , अस्य व्याख्या- केचन सिद्धसेनाचार्यादयः भणन्ति, किं ? युगपत्- एकस्मिन्नेव काले जानाति पश्यति च, कः ? केवली, न त्वन्यः, 'नियमात्' नियमेन । अन्ये जिनभद्रगणिक्षमाश्रमणप्रभृतयः एकान्तरितं जानाति पश्यति चेत्येवमिच्छन्ति श्रुतोपदेशेन–यथाश्रुतागमानुसारेणेत्यर्थः । अन्ये तु वृद्धाचार्याः 'न' नैव विष्वक्–पृथक् दर्शनमिच्छन्ति जिनवरेन्द्रस्य–केवलिनः इत्यर्थः, किं तर्हि ? यदेव केवलज्ञानं तदेव'से'तस्य केवलिनो दर्शनं ब्रुवते क्षीणावरणस्य देशज्ञानाभाववत्केवलदर्शनाभावादिति भावना । अयं गाथाद्वयार्थः । साम्प्रतं युगपदुपयोगवादिमतप्रदर्शनायाह- "जं केवलाइ सादी, अपज्जवसियाइ दोऽवि भणियाइं । ता बिंति केइ जुगवं, जाणइ पासइ य सव्वन्नू ॥ ३ ॥" यस्मात् केवलज्ञानदर्शने साद्यपर्यवसिते द्वे अपि भणिते ततः ब्रुवते केचन सिद्धसेनाचार्यादयः, किं ? 'युगपत्' एकस्मिन् काले जानाति पश्यति च, कः ? सर्वज्ञ इति गाथार्थः । "इहरादीणिधणत्तं, मिच्छावरणक्खयो त्ति व जिणस्स । इयरेतरावरणता, अहवा निक्कारणावरणं ॥ ४ ॥" इतरथा' अन्यथा आदिनिधनत्वं–सादिपर्यवसानत्वं' केवलज्ञानदर्शनयोरुत्पत्त्यन्तरमेव केवलज्ञानोपयोगकाले केवलदर्शनाभावात्, एवं केवलदर्शनोपयोगकालेऽपि

केवलज्ञानाभावात् । तथा मिथ्याऽऽवरणक्षय इति वा जिनस्य, न ह्यपनीतावरणौ द्वौ प्रदीपौ क्रमेण प्रकाश्यं प्रकाशयत इत्यभिप्रायः । तथेतरेतरावरणता स्वावरणे क्षीणेऽप्यन्यतमभावेऽन्यतमाभावादिति भावना । अथवा 'निष्कारणावरणं' इति अकारणमेव अन्यतरोपयोगकालेऽन्यतरस्यावरणं, तथा च सति सर्वदैव भावाभावप्रसंगः, तथा चोक्तम्- 'नित्यं सत्त्वमसत्त्वं वा, हेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां, कादाचित्कत्वसंभवः ॥१॥' इति गाथार्थः । तह य असव्वन्नुत्तं, असव्वदरिसणप्पसंगो य । एगंतरोवयोगे, जिणस्य दोसा बहुविहा य ॥ ५ ॥" व्याख्या-तथा- च सति असर्वज्ञत्वम् असर्वदर्शित्वप्रसंगश्च पाक्षिकं वाऽसर्वज्ञत्वं यदा सर्वज्ञो न तदा सर्वदर्शी दर्शनोपयोगाभावात्, एवं यदा सर्वदर्शी न तदा सर्वज्ञः ज्ञानोपयोगाभावात्, एवमेकान्तरोपयोगेऽभ्युपगम्यमाने सति 'जिनस्य' केवलिनः दोषा बहुविधा इति गाथार्थः । एवं परेणोक्ते सति आगमबाधाह- 'भण्णति भिन्नमुहुत्तोवयोगकालेऽवि तो तिनाणिस्स । मिच्छा छावट्ठी सागरोवमाइं खओवसमो ॥ ६ ॥' व्याख्या-यदुक्तमितरथाऽऽदिनिधनत्वमिति तदसदिति दर्शयति- उपयोगानुपयोगकालापेक्षयैव साद्यपर्यवसितत्वात्केवलज्ञानदर्शनयोरित्यभिप्रायः, न चानार्षमिदं, कथं ? भण्यते- अन्यथा हि भिन्नमुहूर्त्तोपयोगकालेऽपि मत्यादीनां तत्त्रिज्ञानिनः मिथ्या षट्षष्टिसागरोपमाणि क्षयोपशमः, प्रतिपादितश्च सूत्रे, न च युगपदेव मत्याद्युपयोगः, एवं क्षायिकोपयोगोऽपि भविष्यति जीवस्वाभाव्यादिति गाथाभिप्रायः । न च क्षयकार्येण अवश्यमनवरतमेव भवितव्यमिति दर्शयन्नाह- 'अह नवि एवं ता सुण जहेव खीणंतरायओ अरहा । संतेऽवि अंतराय-क्खयम्मि पंचप्पगारम्मि ॥ ७ ॥ सततं न देति लहति व, भुंजति उवभुंजई व सव्वण्णू । कज्जम्मि देति लभति व, भुंजाति व तहेव इहइं पि ॥ ८ ॥' किंच- 'दिंतस्स लभंतस्स य, भुजंतस्स व जिणस्स

एस गुणो । खीणंतराययत्ते, जं से विग्घं न संभवइ ॥ उवउत्तस्सेमेव य, नाणम्मि व दंसणम्मि व जिणस्स । खीणावरणगुणोऽयं जं कसिणं मुणइ पासइ अ ॥ १० ॥ पासंतोऽवि न जाणइ, जाणं व न पासई, जइ जिणिंदो । एवं न कयाइ वि सो, सव्वण्णू सव्वदरिसी य ॥ ११ ॥' व्याख्या- पश्यन्नपि न जानाति, जानन् वा न पश्यति यदि जिनेन्द्रः, एवं न कदाचिदप्यसौ सर्वज्ञः सर्वदर्शी वा युगपदन्यतरोपयोगकालेऽन्यतरोपयोगाभावात् इति गाथार्थः । सिद्धान्तवाद्याह- 'जुगवमजाणंतोऽवि हु, चउहि वि नाणेहि जह व चउनाणी । भन्नइ तहेव अरहा, सव्वन्नू सव्वदरिसी य ॥ १२ ॥' इयं तु निगदसिद्धा एव, नवरं क्षायिकभावमाश्रित्येति गाथार्थः । पुनरप्याह-तुल्ले उभयावरण-क्खयम्मि पुव्वं समुब्भवो कस्स । दुविहुवयोगाभावे, जिणस्स जुगवं ति चोएइ ॥ १३ ॥ व्याख्या-तुल्ये उभयावरणक्षये--केवलज्ञानदर्शनावरणक्षये पूर्वतरं-प्रथमतरमुद्भव-उत्पादः कस्य ? यदि ज्ञानस्य स किंनिबन्धनः ? इति वाच्यं, तदावरणक्षयनिबन्धन इति चेत् दर्शनेऽपि तुल्य इति तस्याप्युद्भवप्रसंगः, एवं दर्शनेऽपि वाच्यम्, अतः स्वावरणक्षयेऽपि दर्शनाभाववत् ज्ञानस्याप्यभावप्रसंगः विपर्ययो वा, एवंविधोपयोगाभावे जिनस्य युगपदिति चोदयत्ययं गाथार्थः । अत्र सिद्धान्तवाद्याह- 'भन्नति ण एस नियमो, जुगवुप्पण्णेण जुगवमेवेह । होयव्वं उवयोगेण, एत्थ सुण ताव दिट्ठंतं ॥ १४ ॥ जह जुगवुप्पत्तीएऽवि, सुत्ते सम्मत्तमइसुयाईणं । नत्थि जुगवोवओगो, सव्वेसु तहेव केवलिणो ॥ १५ ॥ भणियं चिय पण्णत्ती-पण्णवणाईसु जह जिणो समयं । जं जाणइ न वि पासइ, तं अणुरयणप्पभादीणं ॥ १३ ॥' इदं गाथात्रयमपि प्रकटार्थम् । अधुना ये केवलज्ञानदर्शनाभेदवादिनस्तन्मतमुपन्यस्यन्नाह-'जह किर खीणावरणे, देसन्नाणाण संभवो न जिणे । उभयावरणातीते, तह केवलदंसणस्सा वि ॥ १७ ॥' निगदसिद्धा । सिद्धान्त-

वाधाह- 'देसन्नाणोवरमे, जह केवलणाणसंभवो भणिओ । देसद्दंसणविगमे, तह केवलदंसणं होऊ ॥ १८ ॥ अह देसणाण-
दंसण- विगमे तव केवलं मयं नाणं । ण मतं केवलदंसण- मिच्छामित्तं नणु तवेदं ॥ १९ ॥ भन्नइ जह ओहिनाणी, जाणइ
पासइ य भासियं सुत्ते । ण य णाम ओहिदंसण-णाणेगत्तं तह इमं पि ॥ २० ॥ जह पासइ तह पासतु, पासइ जेणेह
दंसणं तं से । जाणइ जेणं अरिहा, तं से णाणं ति घेतव्वं ॥ २१ ॥' स्वपक्षसमर्थनायैव सिद्धान्तवाधाह- 'नाणम्मि दंसणम्मि
य, एत्तो एगतरयम्मि उवउत्तो । सव्वस्स केवलिस्सा, जुगवं दो णत्थि उवओगा ॥ २२ ॥ उवओगो एगयरो, पणुवीस-
तिमे सते सिणायस्स । भणिओ वियडत्थो च्चिय छट्ठुद्देसे विसेसेणं ॥ २३ ॥' गाथाद्वयमपि निगदसिद्धं, नवरं भगवत्यां
पंचविंशतितमे शतेऽधिकारोपलक्षिते 'सिणायस्स त्ति' स्नातकस्य केवलिनः सिद्धान्तवाधेवानुद्धतत्वामागमभक्तिं च परां
संख्यापयन्नाह- 'कस्स व नाणुमतमिणं, जिणस्स जदि होज्ज दोऽवि उवओगा । णूणं ण होंति जुगवं, जेण णिसिद्धा सुते
बहुसो ॥ २४ ॥ निगदसिद्धैवेत्यलं प्रसंगेन । प्रकृतं प्रस्तुमः- 'अह' गाहा- इह मनःपर्यायज्ञानानन्तरं सूत्रक्रमोद्देशतः शुद्धि-
लाभतश्च प्राक्केवलज्ञानमुक्तं तदुपन्यस्यते इत्यतस्तदर्थोऽयमथशब्दः, उक्तं च- 'अथशब्दः प्रक्रियाप्रश्नानन्तर्यमंगलोपन्यास-
प्रतिवचनसमुच्चयेषु' । सर्वाणि च तानि द्रव्याणि च सर्वद्रव्याणि जीवाजीवलक्षणानि, तेषां परिणामाः प्रयोगविस्रसोभ-
याख्या उत्पादादयः सर्वद्रव्यपरिणामाः, तेषां भावः- सत्ता स्वलक्षणमित्यनर्थान्तरं, तस्य विशेषेण ज्ञापनं विज्ञप्तिर्विज्ञानं वा
विज्ञप्तिः तत्र भेदोपचारात्तस्या विज्ञप्तेः- परिच्छित्तेः कारणं सर्वद्रव्यपरिणामभावविज्ञप्तिकारणं, अथवा विज्ञप्तिरेव कारणं
विज्ञप्तिकारणम्, अत एव सकलक्षेत्रकालविषयं तत्क्षेत्रादीनामपि द्रव्यत्वात्, तच्च ज्ञेयानन्तत्वादनन्तं । शश्वद्भावाच्छाश्वतं

सदोपयोगादिति भावार्थः। प्रतिपतनशीलं प्रतिपाति, न प्रतिपाति अप्रतिपाति सदाऽवस्थितमित्यर्थः। आह- यच्छाश्वतं तदप्रतिपात्येवातः किं विशेषणेनेति ? उच्यते- मा भूद्यावद्भवति तावच्छाश्वतमनवरतमेव भवतीति प्रतिपत्तिर्न पुनरवध्यादिवदन्यथेत्यतो विशेषणमित्यनवरतं भवति सर्वकालं चेति, अथवैकपदव्यभिचारेऽपि विशेषणविशेष्यभावो भवतीति ज्ञापनार्थं, तथाहि- शाश्वतमप्रतिपात्येव, अप्रतिपाति तु शाश्वतमशाश्वतं वा अप्रतिपात्यवधेरप्यशाश्वतत्वादिति। एकविधम्-एकप्रकारम् आवरणाभावात्, क्षयस्यैकरूपत्वात्केवलं मत्यादिनिरपेक्षं केवलं च तत् ज्ञानं चेति गाथार्थः॥

इह तीर्थकृत् समुपजातकेवलः सत्वानुग्रहार्थं देशनां करोति तीर्थकरनामकर्मोदयाच्चतश्च ध्वनेर्द्रव्यश्रुतरूपत्वात्तस्य च भावश्रुतपूर्वकत्वाच्छ्रुतज्ञानसंभवादनिष्टापत्तिरिति मा भून्मतिमोहोऽव्युत्पन्नबुद्धीनामित्यतस्तद्विनिवृत्त्यर्थमाह—

**केवलनाणेणऽत्थे, नाउं जे तत्थ पण्णवणजोगे। ते भासइ तित्थयरो, वइजोग सुअं हवइ सेसं ॥ ५१ ॥ सेतं केवलनाणं। सेतं पच्चक्खनाणं ॥ ( सू० २३ )**

चूर्णिः—'केवलनाण' गाहा- एताओ जहा पेढियाए, सेसं कंठं॥ इदाणिं कमागतं बहुवत्तव्वं परोक्खं भणति—

वृत्ति—'केवल' गाहा। व्याख्या- इह तीर्थकरः केवलज्ञानेनार्थान् धर्मास्तिकायादीन्मूर्त्तामूर्त्तानभिलाप्यानभिलाप्यान् ज्ञात्वा-विनिश्चित्य केवलज्ञानेनैव ज्ञात्वा, न तु श्रुतज्ञानेन, तस्य क्षायोपशमिकत्वात्केवलिनश्च तदभावात् सर्वशुद्धौ देशशुद्ध्यभावादित्यर्थः, तत्र-तेषामर्थानां मध्ये प्रज्ञापनं प्रज्ञापना, तस्या योग्याः प्रज्ञापनायोग्याः, तान् भाषते-तानेव वक्ति नेतरानिति प्रज्ञापनीयानिति। न सर्वानेव भाषतेऽनन्तत्वात् आयुषः परिमितत्वात्, किं तर्हि ? योग्यानेव गृहीतृशक्त्यपेक्षया

यो हि यावतां योग्य इति, तत्र केवलज्ञानोपलब्धार्थाभिधायकः शब्दराशिः प्रोच्यमानस्तस्य भगवतो वाग्योग एव भवति, न श्रुतं, नामकर्मोदयनिबन्धनत्वात्, श्रुतस्य च क्षायोपशमिकत्वात्, स च श्रुतं भवति शेषं, शेषमित्यप्रधानम्, एतदुक्तं भवति-श्रोतॄणां श्रुतग्रन्थानुसारिभावश्रुतनिबन्धनत्वाच्छेषमप्रधानं द्रव्यश्रुतमित्यर्थः अन्ये त्वेवं पठन्ति--' वइजोगं सुयं हवइ तेसिं ' स वाग्योगः श्रुतं भवति तेषां श्रोतॄणां भावश्रुतकारणत्वादित्यभिप्रायः । अथवा वाग्योगः श्रुतं द्रव्यश्रुतमेवेति गाथार्थः ॥ से तमित्यादि निगमनं तदेतत्केवलज्ञानम् । तदेतत्प्रत्यक्षम् ॥

एवं प्रत्यक्षे प्रतिपादिते सति परोक्षस्वरूपमनवगच्छन्नाह--चोदकः—

**से किं तं परुक्खनाणं ? परुक्खनाणं दुविहं पन्नत्तं, तं जहा--आभिणिबोहियनाणपरोक्खं च सुअनाणपरोक्खं च जत्थ आभिणिबोहियनाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थाभिणिबोहियनाणं, दोऽवि एयाइं अण्णमण्णमणुगयाइं, तहवि पुण इत्थ आयरिया नाणत्तं पण्णवयंति--अभिनिबुज्झइ त्ति आभिणिबोहिअनाणं, सुणेइ त्ति सुयं, मइपुव्वं जेण सुअं न मई सुअपुव्विआ ( सू० २४ )**

चूर्णिः—अक्खा इंदियमणा परा तेसु जं णाणं तं परोक्खं, मतिश्रुते परोक्षम् आत्मनः परनिमित्तत्वात् अनुमानवत् । णणु सुत्ते इंदियपच्चक्खं भणितं ? उच्यते--सच्चामिणं, एत्थं जं इंदियमणेहिं बहिलिंगपच्चयमुप्पज्जति तमेगंतेणेव इंदियाणं अत्तणो य परोक्खं अणुमाणत्तणतो धूमाओ अग्गिणाणं व, जं पुण सक्खा इंदियमणो निमित्तं तं तेसिं चेव पच्चक्खं अलिं-

गत्तणतो अत्तणो अवधिमादिव्व, अत्तणो तु तं एगंतेणेव परोक्खं इंदियाणं पि तं संववहारतो पच्चक्खं, ण परमत्थतो, कम्हा ? जम्हा दव्विंदिया अचेतणा इति । तं दुविहं—मतिणाणं सुतनाणं च, । इह मतिसुतनाणसुवण्णासक्कमे कारणं पुव्वुत्तं दट्ठव्वं । मतिसुताण य अभेदसामिणिरूवणत्थं इमं सुत्तं—'जत्थ मतिनाणे'त्यादि, जत्थ त्ति पुरिसे जत्थ वा इंदियनोइंदियखयोवसमे मतिणाणमात्थि तत्थेव सुतनाणं पि, अहवा जत्थाभिनिबोधियसरूवं तत्थेव सुतं पि नियमा अण्णोण्णाणुगता भवंतेते आह-मतिसुताणं अण्णोण्णाणुगतत्तणतो सामिकालकारणखयोवसमतुल्लत्तणतो य एगत्तं पावति णो दुगपरिकप्पणंति, अत्रोच्यते-मतिसुताणं अण्णोण्णाणुगताण वि आयरिया भेदमाह दिट्ठंतसामत्थतो--जहा आगासपइट्ठिताणं धम्माधम्माणं अण्णोण्णाणुगताणं लक्खणभेदा भेदो दिट्ठो तहा मतिसुताण वि सामिकालादिअभेदेऽवि भेदो भण्णाति--'आभिणिबुज्झती'त्यादि, एवं लक्खणविधाण भेदा भेदो तेसिं, अहवा इमो मतिसुतविसेसो—'मतिपुव्वयं सुतं ण मती सुतपुव्विया' इति, जतो सुतस्स मतिरेव पुव्वं कारणं, कहं? उच्यते—मतीए सुतं पाविज्जति ण मतिमंतरेण प्रापयितुं शक्यते, गहितं च मतीए पालिज्जति, परिवत्तयतो णो पणस्सइ त्ति, जतो मती एवं सुतपुव्वा ण भवति, णणु सुतं पि सोतुं मती भवति, उच्यते--तं दव्वसुतं न भावश्रुतादित्यर्थः, अहवा मतिसुताण भेदकतो विसेसो—मतिणाणं अट्ठावीसइभेदभिण्णं, सुतणाणं पुण अंगानंगाइभेदभिण्णं अणेगहा, अहवा मतिसुताणं इंदियोवलद्धिविभागतो भेदो इमो--'सोतिंदियोवलद्धी' गाहा पूर्ववद्व्याख्येया, अहवा मतिसुतभेदं भणंति-'बुद्धि दिट्ठे' गाहा, एतीए गाहाए अत्थो मतिसुतविसेसो य जहा विसेसावस्सगे तहा भाणितव्वो। अण्णे वग्गसमं मतिणाणं सुंबसमं च सुतणाणं भणंति, तं च ण घडति, जम्हा वग्गसुंबदिट्ठंतेणं मइनाणस्सेव सुतपरिणामो दंसिज्जति जम्हा तं ण

जुज्जते इत्यर्थः । अहवऽण्णो मतिसुतभेदो-अक्खराणुगतं सुतं अणक्खरं मतिनाणं ति । अहवाऽऽत्मप्रत्यायकं मतिणाणं, स्वपरप्रत्यायकं सुतणाणं । अहवा मतिसुताण आवरणभेदातो भेदो दिट्ठो तक्खतोवसमविसेसातो चेव मतिसुताण भेदो भवति भणितो मतिसुतविसेसो, इदाणिं जहा मतिसुतणाणाण कज्जकारणभेदेहि भेदो दिट्ठो तहा मतीए सुतस्स य सम्म-मिच्छविसेसदंसणपरिग्गहातो भेदो इति अतो सुतं भण्णाति ॥

वृत्तिः—'से किं तं' इत्यादि, अथ किं तत् परोक्षं ? परोक्षं द्विविधं प्रज्ञप्तं, तद्यथा—आभिनिबोधिकज्ञानपरोक्षं च श्रुतज्ञानपरोक्षं च, चौ पूर्ववत्, अनयोश्चेत्थं क्रमोपन्यासे प्रयोजनमुक्तमेव साम्प्रतं स्वाम्यभेदप्रतिपादनायाह—'जत्थ आभिणिबोधियणाणं' इत्यादि, यत्र पुरुषे इन्द्रियनोइन्द्रियक्षयोपशमे वा आभिनिबोधिकज्ञानं तत्रैव पुरुषादौ श्रुतज्ञानं, तथा यत्र श्रुतज्ञानं, तत्राभिनिबोधिकज्ञानम् । आह—यत्राभिनिबोधिकं ज्ञानं तत्र श्रुतज्ञानमित्युक्ते यत्र श्रुतज्ञानं तत्राभिनिबोधिकज्ञानमिति गम्यत एवेत्यतः किमनेनोक्तेनेति ? अत्रोच्यते—नियमतो न गम्यत इति, अतो नियमार्थं, तथा चाह—'दोऽवि एयाइं' इत्यादि, द्वे अप्येते-आभिनिबोधिकश्रुते अन्योऽन्यानुगते-परस्परं प्रतिबद्धे । स्यादेतदेवं सत्यभेद एवास्त्वनयोरित्याशङ्क्याह-'तह वि पुणो' इत्यादि, तथापि पुनराचार्या नानात्वं-भेदं प्रज्ञापयन्ति-प्ररूपयन्ति, कथं ? लक्षणभेदात्, दृष्टश्चान्योऽन्यानुगतयोरप्येकाकाशस्थयोर्धर्माधर्मास्तिकाययोर्लक्षणभेदाद्भेद इति, तत्र यो हि गतिपरिणामपरिणतयोर्जीवपुद्गलयोर्गत्युपष्टम्भहेतुर्जलमिव झषस्य स खल्वसङ्ख्येयप्रदेशात्मकोऽमूर्तो धर्मास्तिकाय इति, तथा यः स्थितिपरिणामपरिणतयोर्जीवपुद्गलयोरेव स्थित्युपष्टम्भहेतुर्विवक्षया क्षितिरिव झषस्य स खल्वसङ्ख्येयप्रदेशात्मकोऽमूर्त्त एवाधर्मास्तिकाय इति, एवमा-

परोक्षज्ञानम् मतिश्रुतयोर्भेदः

भिनिबोधिकश्रुतयोरपि लक्षणभेदाद्भेदः, तथा चाह—'अभिनिबुज्झइ' इत्यादि, अभिनिबुध्यत इत्याभिनिबोधिकम्-आत्मनः परिणामविशेषः एवं शृणोतीति श्रुतं-आत्मन एव परिणामविशेष इति, एतदुक्तं भवति-यदिन्द्रियमनोनिमित्तमात्मनो विज्ञानं श्रुतग्रन्थानुसारेणोपजायते तच्छ्रुतं, शेषमिन्द्रियमनोनिमित्तमाभिनिबोधिकमिति । इत्थं लक्षणभेदाद्भेदमभिधायाधुना प्रकारान्तरेण भेदमभिधित्सुराह-'मतिपुव्वं सुतं, ण मती सुयपुव्विया' "पॄ पालनपूरणयोः"इत्येतस्य पूर्यते प्राप्यते पाल्यते वाऽनेन कार्यमिति पूर्व—कारणं, मतिः पूर्वमस्येति मतिपूर्वं श्रुतं-श्रुतज्ञानं, तथा चेदं मत्या पूर्यते-प्राप्यते पाल्यते वा, अन्यथा प्रणश्यतीत्यर्थः । न मतिः श्रुतपूर्वेत्ययं महान् भेद इति । अत्राह-मतिश्रुतयोर्युगपदेव सम्यक्त्वावाप्तौ भाव उक्तः, अज्ञानयोरपि विगमः, तत्कथं मतिपूर्वं श्रुतमिति ? किं च मतिपूर्वकत्वेऽभ्युपगम्यमाने सति मतिज्ञानभावेऽपि तत्काले श्रुतमज्ञानं प्राप्नोति, अनार्षं चेदमिति, अत्रोच्यते-ननु लब्धिं प्रति मतिश्रुते समकाले भवतः, न तूपयोगोऽनयोः समकाले इति मतिपूर्वं श्रुतम्, इह पुनः को भावार्थः ? श्रुतोपयोगो मतिप्रभवः, यतो नासंचिन्त्य मत्या श्रुतग्रन्थानुसारिविज्ञानमुत्पद्यते । आह-एवं मतिरपि श्रुतपूर्वा भवत्येव, तथाहि-शब्दं श्रुत्वा या मतिरुत्पद्यते सा श्रुतपूर्वेति प्रतीतम्, अतो न विशेषो यथा मतिपूर्वं श्रुतं तथा मतिरपि श्रुतपूर्वेति, अत्रोच्यते-ननु सा द्रव्यश्रुतोद्भवा वर्तते, इह तु न मतिः श्रुतपूर्वेति का भावना ? भावश्रुतात् सकाशात् मतिर्नास्तीति, यद्वा कार्यतया निषिध्यते, न पुनः क्रमेण, क्रमेण तु श्रुतोपयोगाच्च्युतस्य मत्यवस्थानमिष्यते एवेत्यलं प्रसङ्गेन । न चैतत्स्वमनीषिकयोच्यते, यतोऽभ्यधायि भाष्यकृता-"णाणाणण्णाणाणि य, समकालाइं यतो मइसुयाइं । तो न सुयं मतिपुव्वं, मतिणाणे वा सुयऽण्णाणं ॥ १ ॥

इह लद्धिमइसुयाइं, समकालाइं न तूवयोगो सिं । मतिपुव्वं सुयमिह पुण, सुतोवयोगो मतिप्पभवो ॥ २ ॥ सोऊण जा मती ते सुयपुव्व त्ति तेण ण विसेसो । सा दव्वसुयप्पभवा, भावसुयाओ मती नत्थि ॥ ३ ॥ कज्जतया ण तु कमसो, कमेण को वा मतिं निवारेइ । जं तत्थावत्थाणं, चुतस्स सुत्तोवयोगातो ॥ ४ ॥ ” इतश्च मतिश्रुतयोर्भेदः, भेदभेदात्, तथाहि- अवग्रहादि- भेदादष्टाविंशतिविधं मतिज्ञानम्, अङ्गप्रविष्टाद्यनेकभेदभिन्नं च श्रुतज्ञानम्, इन्द्रियोपयोगलाभ ( इन्द्रियलब्धिविभाग ) तो वा, उक्तं च- 'सोइंदियोवलद्धी, होइ सुयं सेसयं तु मतिणाणं । मोत्तूणं दव्वसुयं, अक्खरलंभो य सेसेसु ॥ १ ॥' इतश्च भेदः, अनक्षरमपि मतिज्ञानम् अक्षरानुगतं च श्रुतज्ञानमिति, अथवाऽऽत्मप्रत्यायकं मतिज्ञानं स्वपरप्रत्यायकं श्रुतज्ञानमिति, आव- रणभेदाच्च भेद इत्यलमतिप्रसंगेन ॥

इह च यथा मतिश्रुतयोः कार्यकारणभेदान्मिथो भेदस्तथा सम्यग्मिथ्यादर्शनपरिग्रहविशेषस्वरूपतोऽपि भेद इति दर्शयन्नाह-

**अविसेसिया मई मइनाणं च मइअन्नाणं च, विसेसिया सम्मादिट्ठिस्स मई मइनाणं, मिच्छदि- ट्ठिस्स मई मइअन्नाणं । अविसेसिअं सुयं सुयनाणं च सुयअन्नाणं च, विसेसिअं सुयं सम्मादिट्ठिस्स सुयं सुअनाणं, मिच्छदिट्ठिस्स सुअं सुयअन्नाणं ( सू० २५ )**

चूर्णिः—'अविसेसिता मती' त्यादि, सामिणा अविसेसिता मती इमं वत्तव्वा 'आभिणिबोधिके' त्यादि, चसद्दो समुच्चये, 'विसेसिता मती' त्यादि, जदा पुण इमेण सामिणा विसेसिता मती भवति तदा इमं वत्तव्वा 'सम्मादिट्ठिस्स मती' त्यादि, सुत्रसिद्धं ।

'अविसेसितं सुय' मित्यादि, एतं पि उवउज्जिउं एवं चेव वत्तव्वं, अहवा जाव विसेसेण अविसेसिता मती ताव मती चेव वत्तव्वा, सच्चेव मती णाणण्णाणसद्दविसेसणतो इमं वत्तव्वा आभिनिबोधिकेत्यादि सूत्रसिद्धं, णाणण्णाणसद्दविसेसणं कहं ? भण्णति- सम्मत्तमिच्छसामिगुणत्तणतो सम्मद्दिट्ठिस्स मतीत्यादि सूत्रसिद्धं, सुतेऽवि एवं चेव वत्तव्वं । पर आह- तुल्लखयोवसमत्तणतो घडाइवत्थूण य सम्मपरिच्छेदत्तणतो सद्दादिविसयाण य समुवलंभातो कहं मिच्छद्दिट्ठिस्स मतिसुता अण्णाणं ति भणिता ? उच्यते- 'सदसदविसेसणातो, भवहेतुजहिच्छिओवलंभाओ । नाणफलाभावातो, मिच्छद्दिट्ठिस्स अण्णाणं ॥ १ ॥' मतिपुव्वं सुतं ति काउं मतिनाणं चेव पुव्वं भणामि ॥

वृत्तिः—'अविसेसिता' इत्यादि, अविशेषिता मतिः सामान्येनैव मतिज्ञानं मत्यज्ञानं च सामान्येनोभयत्रापि मतिशब्दप्रवृत्तेः । 'विशेषिता' इति स्वामिविशेषेण सम्यग्दृष्टेर्मतिः- मतिज्ञानं निश्चयनयदर्शनेन स्वकार्यप्रसाधकत्वात् । मिथ्यादृष्टेर्मतिः मत्यज्ञानं तत्त्वतः स्वफलरहितत्वादित्यर्थः । एवं श्रुतसूत्रमपि व्याख्येयम् । आह- क्षयोपशमादिकारणाभेदे घटादिपरिच्छेदकार्याभेदे च कथं मिथ्यादृष्टेरज्ञाने इति ? तथा च मिथ्यादृष्टेरपि क्षयोपशमादेव मतिश्रुतप्रवृत्तिः, तथोर्ध्वादिलक्षणाकारमेव घटादिसंवेदनमिति, अत्रोच्यते मिथ्यादृष्टेरज्ञाने मतिश्रुते सदसतोरविशेषादुन्मत्तकवत्, उक्तं च भाष्यकारेण- 'सदसदविसेसणातो, भवहेउजहिच्छिओवलंभाओ । णाणफलाभावातो, मिच्छद्दिट्ठिस्स अन्नाणं ॥ १ ॥' विनेयजनानुग्रहार्थमियं लेशतो व्याख्यायत इति- मिथ्यादृष्टिः कथंचित्सन्तमपि पुरुषे देवादिधर्मं न प्रतिपद्यते पुरुष एवेत्यभ्युपगमात्, तथाऽसन्तमपि घटादिधर्मं प्रतिपद्यते अस्त्येवेत्यभ्युपगमात्, अतः सदसतोरविशेष इत्यतश्च मिथ्यादृष्टेर्मतिश्रुते अज्ञाने भवहेतुत्वाच्च

॥ ५३ ॥

मिथ्यादर्शनवत्, इतश्चाज्ञानं यदृच्छोपलब्धेरुन्मत्तवत्, इतश्चाज्ञानं फलाभावादन्धप्रदीपवत्, ज्ञानस्य हि फलं विरतिः सा
च मिथ्यादृष्टेर्न विद्यते इत्यलं प्रसंगेन। प्रकृतं प्रस्तुमः- इह मतिपूर्वं श्रुतमिति कृत्वा मतिज्ञानमेवाधिकृत्य प्रश्नसूत्रमाह—

सेकिंतं आभिणिबोहिअनाणं ? आभिणिबोहियनाणं दुविहं पन्नत्तं, तं जहा- सुयनिस्सियं च
अस्सुयनिस्सिअं च। सेकिंतं असुअनिस्सियं ? असुअनिस्सिअं चउव्विहं पन्नत्तं, तंजहा-उप्पत्तिआ १
वेणइआ २, कम्मया ३ परिणामिआ ४। बुद्धी चउव्विहा वुत्ता, पंचमा णोवलब्भइ ॥५१॥ सू० २६

चूर्णिः—'सेकिंतं आभिणिबोधिके'त्यादि सुत्तं, तत्थ 'सुतनिस्सितं' ति, सुतं ति सुतं, तं च सामाइयादिबिंदुसारपज्जव-
साणं, एतं दव्वसुतं गहितं, तं अणुसरतो जं मतिणाणमुप्पज्जति तं सुतणिस्साए उप्पण्णंति सुतातो वा णिस्सितं तं सुतणिस्सितं
भण्णति, तं च उग्गहेहावायधारणाठितं चतुब्भेदं। 'असुतणिस्सितं च' त्ति जं पुण दव्वभावसुतणिरवेक्खं आभिणिबोधिक-
मुप्पज्जति तं असुयभावतो समुप्पण्णं ति असुतनिस्सितं भण्णति, तं च उप्पत्तियादिबुद्धिचउक्कं इमं-'उप्पत्तिया' गाहा—

वृत्तिः—'सेकिंतं' इत्यादि, अत्र निर्वचनं- द्विविधं प्रज्ञप्तं, तद्यथा- श्रुतनिश्रितं चाश्रुतनिश्रितं च, चौ पूर्ववत्, श्रुतमिह
सामायिकादिलोकबिन्दुसारान्तं द्रव्यश्रुतं गृह्यते, तदनुसारेण श्रुतपरिकर्मितमतेस्तदपेक्षमेव चोत्पादकाले यदुत्पद्यते तच्छ्रुत-
निश्रितमवग्रहादि, यत्पुनस्तदनपेक्षं तथाविधक्षयोपशमप्रभवमेव वर्तते तदश्रुतनिश्रितमौत्पत्तिक्यादि। आह- इदमप्यवग्रहादि-
रूपमेव, सत्यं, किंतु श्रुतानुसारमन्तरेणोत्पत्तेर्भेदेनोक्तं। तत्राल्पतरवक्तव्यत्वादश्रुतनिश्रितमतिज्ञानप्रतिपादनायाह- 'सेकिंतं'

इत्यादि, 'उप्पत्तिया' गाहा, व्याख्या- उत्पत्तिरेव प्रयोजनं यस्याः सा औत्पात्तिकी, आह- क्षयोपशमः प्रयोजनमस्याः, सत्यं, किंतु स खल्वन्तरंगत्वात्सर्वबुद्धिसाधारण इति न विवक्ष्यते, न चान्यच्छास्त्रस्वकर्माभ्यासादिकमपेक्षत इति। विनयो-गुरुशुश्रूषा स कारणमस्यास्तत्प्रधाना वा वैनयिकी। अनाचार्यकं कर्म, साचार्यकं शिल्पं, नित्यव्यापारः कर्म, कादाचित्कं शिल्पं कर्मजेति कर्मणो जाता कर्मजा परि-समन्तात् नमनं परिणामः सुदीर्घकालपूर्वापरार्थावलोकनादिजन्य आत्मधर्म इत्यर्थः स कारणमस्यास्तत्प्रधाना वा पारिणामिकी। बुध्यतेऽनयेति बुद्धिः मतिरित्यर्थः,सा चतुर्विधोक्ता तीर्थकरगणधरैः, किमिति? यस्मात् पंचमी नोपलभ्यते केवलिनाऽप्यसत्त्वादिति गाथार्थः। औत्पत्तिक्या लक्षणं प्रतिपादयन्नाह—

पुव्वं अदिट्ठमस्सुअ-मवेइयतक्खणविसुद्धगहिअत्था। अव्वाहयफलजोगा, बुद्धी उप्पत्तिआ नाम ॥ ६० ॥ भरहसिल १ पणिय २ रुक्खे ३, खुड्डग ४ पड ५ सरड ६ काय ७ उच्चारे ८। गय ९ घयण १० गोल ११ खंभे १२ खुड्डग १३ मग्गित्थि १४ पइ १५ पुत्ते १६ ॥ ६१ ॥ भरह १ सिल २ मिंढ ३ कुक्कुड ४, वालुअ ५ हत्थी ६ अगड ७ वणसंडे ८। पायस ९ अइया १० पत्ते ११, खाडहिला १२ पंच पिअरो अ १३ ॥ ६२॥ महुसित्थ १७ मुद्दि १८ अंके १९, नाणए २० भिक्खु२१ चेडगनिहाणे २२। सिक्खाय २३ अत्थसत्थे २४, इच्छा य महं २५ सयसहस्से २६ ॥ ६३ ॥

चूर्णिः—'पुव्वं' गाहा, 'भरह' गाहा, 'भरह' गाहा, 'मधु' गाहा, उप्पत्तिया गता, इमा वेणतिया—

वृत्तिः—पूर्वमिति बुद्ध्युत्पादात् प्राक् स्वयमदृष्टः अन्यतश्चाश्रुतः अवेदितो- मनसाऽप्यनालोचितः तस्मिन्नेव क्षणे विशुद्धो यथावस्थितः गृहीतो-ऽवधारितः अर्थः- अभिप्रेतपदार्थो यया सा तथा, इहैकान्तिकमिहपरलोकाविरुद्धं फलान्तराबाधितं चाव्याहतमुच्यते, फलं-प्रयोजनम् अव्याहतं च तत्फलं चाव्याहतफलं, योगोऽस्या अस्तीति योगिनी, अव्याहतफलेन योगिनी अव्याहतफलयोगिनी, अन्ये पठन्ति- 'अव्याहतफलयोगा' अव्याहतफलेन योगोऽस्याः साऽव्याहतफलयोगा बुद्धिः औत्पत्तिकी नामेति गाथार्थः ॥ ६० ॥ साम्प्रतं विनेयजनानुग्रहायास्या एव स्वरूपप्रतिपादनार्थमुदाहरणानि प्रतिपादयन्नाह- 'भरहसिल' गाहा, 'भरह' गाहा, 'महुसित्थ' गाहा, आसामर्थः कथानकेभ्य एवावसेयः, तानि चावसरप्राप्तान्यपि गुरुनियोगान्न ब्रूमः, किं त्वावश्यके वक्ष्यामः । अधुना वैनयिक्या लक्षणं प्रतिपादयन्नाह—

**भरनित्थरणसमत्था, तिवग्गसुत्तत्थगहिअपेआला । उभओ लोगफलवई, विणयसमुत्था हवइ बुद्धी ॥ ६४ ॥ निमित्ते १ अत्थसत्थे अ २, लेहे ३ गणिए अ ४ कूव ५ अस्से अ ६ । गद्दभ ७ लक्खण ८ गंठी ९, अगए १० रहिए अ ११ गणिया य १२ ॥ ६५ ॥ सीया साडी दीहं च, तणं अवसव्वयं च कुंचस्स १३ । निव्वोदए अ १४ गोणे, घोडगपडणं च रुक्खाओ १५ ॥ ६६ ॥**

चूर्णिः—'भरनि' गाहा, 'निमित्ते' गाहा, 'सीता' गाहा । इमा कम्मइया—

वृत्तिः—'भरनित्थ' गाहा- इहातिगुरुकार्यदुर्निर्वहत्वाद्भर इव भरस्तन्निस्तरणे समर्था भरनिस्तरणसमर्था, त्रयो वर्गा-

त्रिवर्गमिति लोकरूढेर्धर्मार्थकामाः तदर्जनपरोपायप्रतिपादननिबन्धनं सूत्रं, तदन्वाख्यानं त्वर्थः, पेयालं- प्रमाणं सारो वा, त्रिवर्गसूत्रार्थयोर्गृहीतं प्रमाणं सारो वा यया सा तथाविधा। अथवा त्रिवर्गस्त्रैलोक्यम्। आह- त्रिवर्गसूत्रार्थगृहीतसारत्वे सत्यश्रुतनिश्रितत्वं विरुद्ध्यत इति, न हि श्रुताभ्यासमन्तरेण त्रिवर्गसूत्रार्थगृहीतसारत्वं संभवति, अत्रोच्यते- इह प्रायोवृत्ति-मंगीकृत्याश्रुतनिश्रितत्वमुक्तम्, अतः स्वल्पश्रुतनिश्रितभावेऽपि न कश्चिद्दोष इति 'उभयलोकफलवती' ऐहिकामुष्मिकफलवती' 'विनयसमुत्था' विनयोद्भवा भवति बुद्धिरिति गाथार्थः। अस्या एव विनेयजनानुग्रहार्थमुदाहरणैः स्वरूपमुपदर्शयन्नाह- 'निमित्ते' गाहा, 'सीआ' गाहा, गाथाद्वयार्थः कथानकेभ्य एवावसेयः, तानि चोत्तरत्र वक्ष्यामः॥ साम्प्रतं कर्मजाया बुद्धेर्लक्षणं प्रतिपादयन्नाह—

**उवओगदिट्ठसारा, कम्मपसंगपरिघोलणविसाला। साहुक्कारफलवई, कम्मसमुत्था हवइ बुद्धी ॥ ६१ ॥ हेरण्णिए १ करिसए २ कोलिअ ३ डोवे अ ४ मुत्ति ५ घय ६ पवए ७। तुन्नाए ८ वड्ढई य ९ पूयइ १० घड ११ चित्तकारे अ १२ ॥ ६८ ॥**

**चूर्णिः**— 'उवओग' गाहा, 'हेरण्णि' गाहा, कम्मइआ गता॥ इमा पारिणामिया—

**वृत्तिः**— 'उवयोग०' गाहा--उपयोजनमुपयोगः विवक्षिते कर्मणि मनसोऽभिनिवेशः, सारः--तस्यैव कर्मणः परमार्थः, उपयोगेन दृष्टः सारो ययेति समासः, अभिनिवेशोपलब्धकर्मपरमार्थेत्यर्थः, कर्मणि प्रसङ्गः-कर्मप्रसङ्गः प्रसङ्गोऽभ्यासः, परिघोलनं

विचारः, कर्मप्रसङ्गपरिघोलनाभ्यां विशाला कर्मप्रसंगपरिघोलनविशाला अभ्यासविचारविस्तीर्णेति भावार्थः। साधुकृतमिति सुष्ठुकृतमिति विद्वद्भ्यः प्रशंसा-साधुकारः, तेन फलवतीति समासः, साधुकारेण वाऽशेषमपि फलं यस्याः सा तथा। 'कर्मसमुत्था' कर्मोद्भवा भवति बुद्धिरिति गाथार्थः। अस्या अपि विनेयवर्गानुकम्पयोदाहरणैः स्वरूपमुपदर्शयन्नाह- 'हेरन्निए' गाहा, अस्या अप्यर्थं वक्ष्यामः। साम्प्रतं पारिणामिक्या लक्षणं प्रतिपादयन्नाह—

अणुमाणहेउदिट्ठंत--साहिआ वयविवागपरिणामा। हिअनिस्सेअसफलवइ-बुद्धी परिणामिआ नाम ॥ ६९ ॥ अभए १ सिट्ठि २ कुमारे ३, देवी ४ उदिओदए हवइ राया ५। साहू य नंदिसेणे ६ धणदत्ते ७ सावग ८ अमच्चे ९ ॥ ७० ॥ खमए १० अमच्चपुत्ते ११, चाणक्के १२ चेव थूलभद्दे अ १३। नासिकसुंदरिनंदे १४, वइरे १५ परिणामबुद्धीए ॥ ७१ ॥ चलणाहण १६ आमंडे १७, मणी अ १८ सप्पे अ १९ खग्गि २० थूभिंदे २१। परिणामियबुद्धीए, एवमाई उदाहरणा ॥ ७२ ॥ से तं असुअनिस्सियं ॥

चूर्णिः— 'अणुमाण' गाहा, 'अभए' गाहा, 'खमए' गाहा, 'चलण' गाहा। एताओ सव्वाओ जहा णमोक्कारे तहा दट्ठव्वाओ ॥ इदाणिं सुताणिस्सियं उग्गहाइयं सवित्थरं भणति—

वृत्तिः— ' अणुमाण ' गाहा अनुमानहेतुदृष्टान्तैः साध्यमर्थं साधयतीति अनुमानहेतुदृष्टान्तसाधिका । इह लिङ्गज्ञानमनुमानं स्वार्थमित्यर्थः, तत्प्रतिपादकं वचो हेतुः परार्थमित्यर्थः, अथवा ज्ञापकमनुमानं, कारको हेतुः, दृष्टमर्थमन्तं नयतीति दृष्टान्तः । आह–अनुमानग्रहणादेव दृष्टान्तस्य गतत्वादलमुपन्यासेन, न, अनुमानस्य तत्त्वत एकलक्षणत्वात् उक्तं च–" अन्यथाऽनुपपन्नत्वं, यत्र तत्र त्रयेण किम् " इत्यादि, साध्योपमाभूतश्च दृष्टान्तः, उक्तं च– "यः साध्यस्योपमाभूतः, स दृष्टान्त कथ्यते " इति कालकृतो देहावस्थाविशेषो वय इत्युच्यते तद्विपाकेन परिणामः पुष्टता यस्याः सा तथाविधा हितम्-अभ्युदयः तत्कारणं वा, निःश्रेयसं-मोक्षः तन्निबन्धनं वा, हितनिःश्रेयसाभ्यां फलवती बुद्धिः पारिणामिकी इति गाथार्थः । अस्या अपि शिष्यगणहितायोदाहरणैः स्वरूपं दर्शयन्नाह– ' अभए ' गाहा, ' खमए ' गाहा, ' चलणा' गाहा, आसामर्थः कथानकेभ्य एवावसेयः, तानि चान्यत्र वक्ष्यामः । से तमित्यादि तदेतदश्रुतनिश्रितम् ॥

**से किं तं सुअनिस्सिअं ? २ चउव्विहं पण्णत्तं, तं जहा–उग्गह १ ईहा २ अवायो ३ धारणा ४ ( सू. २६ )**

**चूर्णिः**— इह सामण्णस्स रूवादिअसेसविसेसनिरवेक्खस्स आणिद्देसस्स अवग्रहणं अवग्रहः, तस्सेवत्थस्स विचारणविसेसेणेहणमीहा, तस्स विसेसणविसिट्ठस्सत्थस्स अवसातोऽवायः तव्विसेसावगमइत्यर्थः, तव्विसेसावगमत्थस्स धरणं–अविचुती धारणा इत्यर्थः ॥

वृत्तिः—' से किं तं ' इत्यादि, चतुर्विधं प्रज्ञप्तं, तद्यथा--अवग्रह ईहा अपायो धारणा । इह अवग्रहणमवग्रहः सामान्यमात्रानिर्दिश्यार्थग्रहणमित्यर्थः । तथा ईहनमीहा सदर्थपर्यालोचनचेष्टेत्यर्थः, एतदुक्तं भवति-अवग्रहादुत्तीर्णः अपायात्पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषत्यागाभिमुखश्च प्रायो मधुरत्वादयः शङ्खादिशब्दधर्मा अत्र घटन्ते, न खरकर्कशनिष्ठुरतादयः शार्ङ्गादिशब्दधर्मा इति मतिविशेष ईहा इति । तथा तदर्थाध्यवसायोऽपायः निर्णयो निश्चयोऽवगम इत्यनर्थान्तरम्, एतदुक्तं भवति-शाङ्ख एवायं शार्ङ्ग एव वेत्याद्यवधारणात्मकः प्रत्ययोऽपाय; इति । तथा तदर्थविशेषधरणं धारणा अविच्युतिस्मृतिवासनारूपा ॥

## से किं तं उग्गहे ? उग्गहे दुविहे पण्णत्ते, तं जहा--अत्थुग्गहे अ वंजणुग्गहे अ ( सू०२७ )

चूर्णिः— तत्थ उग्गहो दुविहो—अत्थोग्गहो वंजणउग्गहो य एत्थ वंजणोग्गहस्स पच्छाणुपुव्वितो अत्थोग्गहातो वा पुव्वं वंजणउग्गहो भवइ त्ति वंजणोग्गहमेव पुव्वं भणामि—

वृत्तिः— ' से किं तं ' इत्यादि, अथ कोऽयमवग्रहः ? अवग्रहो द्विविधः प्रज्ञप्तः, तद्यथा—अर्थावग्रहश्च व्यञ्जनावग्रहश्च अर्थ्यत इत्यर्थः, अर्थस्यावग्रहोऽर्थावग्रहः सकलविशेषनिरपेक्षानिर्देश्यार्थग्रहणमेकसामयिकमिति भावार्थः । व्यज्यतेऽनेन अर्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेन्द्रियं शब्दादिपरिणतद्रव्यसंघातो वा ततश्च व्यञ्जनेनोपकरणेन्द्रियेण व्यञ्जनानां शब्दादिपरिणतद्रव्याणामवग्रहो व्यञ्जनावग्रहः। अथार्थावग्रहस्य तु लक्ष्यत्वात्सकलेन्द्रियार्थव्यापकत्वाच्च प्रथममुपन्यासः, ततो दुर्लक्ष्यत्वात्सकलेन्द्रियार्थाव्यापकत्वाच्चेतरस्य ॥

**से किं तं वंजणुग्गहे ? वंजणुग्गहे चउव्विहे पण्णत्ते, तं जहा सोइंदियवंजणुग्गहे घाणिंदियवंजणुग्गहे जिब्भिंदियवंजणुग्गहे फासिंदियवंजणुग्गहे । से तं वंजणुग्गहे ( सू० २८ )**

चूर्णिः— वंजणाणं अवग्गहो वंजणोवग्गहो, एत्थ वंजणग्गहणेण सद्दाइपरिणता दव्वा घेतव्वा, वंजणे अवग्गहो, एत्थ वंजणग्गहणेण दव्विंदियं घेतव्वं, एतेसिं दोण्ह वि समासाणं इमो अत्थो जेण करणभूतेण अत्थो वंजिज्जइ तं वंजणं जहा पदीवेण घडो, एवं सद्दादिपरिणतेहिं दव्वेहिं उवकरणिंदियपत्तेहिं चित्तेहिं संबद्धेहिं संप्पसत्तेहिं जम्हा अत्थो वंजिज्जइ त्ति तम्हा ते दव्वा वंजणावग्गहो भण्णति, एस वंजणावग्गहो सुतसिद्धो चउव्विहो ॥

वृत्तिः— 'से किं तं' इत्यादि, अथ कोऽयं व्यञ्जनावग्रहः? इत्यत्र पुनरुत्पत्तिक्रम एवाश्रितो यथासंभवमिति सुश्लिष्टमेतदिति, प्रकृतमुच्यते--व्यंजनावग्रहश्चतुर्विधः प्रज्ञप्तः, तद्यथा--श्रोत्रेन्द्रियव्यञ्जनावग्रह इत्यादि सूत्रसिद्धम् । आह--पञ्चेन्द्रियमनःसद्भावे सति किमित्ययं चतुर्विधः ? अत्रोच्यते--नयनमनसोरप्राप्तकारित्वात्, अप्राप्तकारित्वं च विषयकृतानुग्रहोपघातशून्यत्वात्, प्राप्तकारित्वे पुनरनलजलशूलाद्यालोकने दहनक्लेदनपाटनादयः स्युः, अत्र च विषयदेशं गत्वा न पश्यति प्राप्तं चार्थं नालम्बते इत्येतावन्नियम्यते, मूर्तिमता पुनः प्राप्तेन भवत एवानुग्रहोपघातौ भास्करकिरणादिनेति, अन्यस्त्वाह-व्यवहितार्थानुपलब्धेरनुमानात्प्राप्तकारित्वं लोचनस्येति, एतदयुक्तम्, अनैकान्तिकत्वात्,रुचोऽभ्रपटलस्फटिकान्तरितोपलब्धेः, स्यादेतत् नायना रश्मयो निर्गत्य तमर्थं गृह्णन्तीति दर्शने रश्मीनां तैजसत्वात्तेजोद्रव्यैरप्रतिस्खलनाददोष इति, एतदप्ययुक्तम्, महाज्वालादौ प्रतिस्खलनोपलब्धेरिति, अत्र बहु वक्तव्यं, तत्तु नोच्यते, ग्रन्थविस्तरभयात्,गमनिकामात्रमेतादिति ॥

सेकिंतं अत्थुग्गहे ? अत्थुग्गहे छव्विहे पण्णत्ते, तंजहा- सोइंदियअत्थुग्गहे चक्खिदियअत्थु-
ग्गहे घाणिंदिअअत्थुग्गहे जिब्भिदियअत्थुग्गहे फासिंदियअत्थुग्गहे नोइंदियअत्थुग्गहे (सू० २९)

चरिमसमयाणंतरं

चूर्णिः—'सेकिंतं अत्थोग्गहे' इत्यादि सूत्रं । अत्थस्स उग्गहो अत्थोग्गहो, सो य वंजणावग्गहातो चक्खिदियस्स मणसो य वंजणाभावे पढमं चेव जं अवसिट्ठ-एक्कसमयं अविसिट्ठसव्विंदियविसयं गेण्हतो अत्थावग्गहो भवति, सव्वोवि सो विभागेण छव्विहो दंसिज्जति, ण पुण तस्सोग्गहस्स मत्थग्गहणकाले यो एगसमयं सो अत्थोग्गहो भाणितव्वो काले सद्दादिविसेसबुद्धी अत्थि, णोइंदियो त्ति मणो, सो य दुविहो दव्वमणो य, भावमणो य तत्थ मणपज्जत्तिणामकम्मुदयातो तज्जोग्गे मणोदव्वे घेत्तुं मणजोगपरिणामिता दव्वा दव्वमणो भण्णति, जीवो पुण मणणपरिणामकाक्रियावण्णो भावमणो एस उभयरूवो मणदव्वालंबणो जीवस्स णाणव्वावारो भावमणो भण्णति, तस्स जो उवकरणिंदियदुवारनिरवेक्खो घडाइअत्थ-सरूवचिंतणपरो बोधो उप्पज्जति सो णोइंदियत्थावग्गहो भवति ॥

वृत्तिः—'सेकिंतं' इत्यादि, अथ कोऽयमर्थावग्रहः ? अर्थावग्रहः षड्विधः प्रज्ञप्तः, तद्यथा-श्रोत्रेन्द्रियार्थावग्रह इत्यादि सूत्रसिद्धं यावत् 'तस्स णं इमे' इत्यादि ॥

तस्स णं इमे एगट्ठिआ नाणाघोसा नानावंजणा पंच नामधिज्जा भवंति, तं जहा- ओगेण्ह-णया उवधारणया सवणया अवलंबणया मेहा । से तं उग्गहे (सू० ३०)

चूर्णि:—'घोस'त्ति उदत्तादिया सरविससो घोसा भण्णंति, 'वंजणं' ति अभिलावक्खरा तेसिं इमे एगट्ठिया पंच 'ओगिण्हणता' इत्यादि, एते ओग्गहसामण्णतो पंच वि णियमा एगट्ठिता, उग्गहविभागे पुण कज्जमाणे उग्गहविभागंसेण भिण्णत्था भवंति, सो य उग्गहो तिविहो- विसेसावग्गहो सामण्णत्थावग्गहो विसेससामण्णत्थावग्गहो य, एगट्ठियाण इमो भिण्णत्थो वंजणोग्गहस्स पढमसमयपविट्ठपोग्गलाण गहणता ओगिण्हणता भण्णति आइल्ले त्ति काउं, बितियादिसमयादिसु जाव वंजणोग्गहो ताव उवधारणता भण्णाति, एगसामइगसामण्णत्थावग्गहकाले सवणता भण्णति, विसेससामण्णत्थावग्गहकाले अवलंबणता भण्णति, उत्तरुत्तरविसेससामण्णत्थावग्गहेसु जाव मेहया धावति ताव मेधा भण्णइ, जत्थ वंजणावग्गहो नत्थि तत्थ सवणादिया तिण्णि एगट्ठिता भण्णंति, आह- णणु भिण्णत्थदंसणे एगट्ठितत्ति विरुद्धं, उच्यते- ण विरुद्धं, जतो सव्वविकप्पेसु उग्गहस्सेव सरूवं दंसिज्जति ॥

वृत्ति:—तस्यावग्रहस्यामूनि वक्ष्यमाणानि, णं पूर्ववत्, अवग्रहसामान्यापेक्षया एकार्थिकानि नानाघोषाणि नानाव्यंजनानि पंच नामधेयानि भवन्ति। घोषा- उदात्तादयः, कादीनि व्यंजनानि, नामैव नामधेयम्, अवग्रहविशेषापेक्षया तु कथंचिद्भिन्नार्थानि। त्रिविधश्चावग्रहः सामान्यावग्रहः विशेषावग्रहः विशेषसामान्यार्थावग्रहश्च, तत्र भिन्नार्थता निदर्श्यते तं जहा- 'ओगिण्हता' इत्यादि अवगृह्यतेऽनेनेति अवग्रहणं, 'करणे ल्युट्' व्यंजनावग्रहप्रथमसमयप्रविष्टशब्दादिद्रव्यादानपरिणाम इत्यर्थः तद्भावः अवग्रहणता। धार्यतेऽनेनेति धारणं, उप-सामीप्येन धारणमुपधारणं व्यंजनावग्रहद्व्यादिसमयेष्ववसानान्तं प्रतिसमयमेव शब्दादिद्रव्यादानधारणपरिणाम इति भावना, तद्भाव उपधारणता। श्रूयतेऽनेनेति श्रवणम् एकसामयिक-

अर्थावग्रह भेदाः अवग्रह-पर्यायाः

सामान्यार्थावग्रहावबोधपरिणाम इत्युक्तं भवति, तद्भावः श्रवणता। अवलम्ब्यत इत्यवलम्बनं "कृत्यल्युटो बहुलम्" (पा० ३-३-११३) इति वचनात् कर्मणि ल्युट्, तद्भावः अवलम्बनता विशेषसामान्यार्थावग्रह इति भावार्थः, तथाहि-उत्तरोत्तरधर्मजिज्ञासायां सत्यां शब्दादिज्ञानमेवावलम्ब्येहादयः प्रवर्तन्ते किमयं शाङ्खः किं वा शार्ङ्ग इति, अतस्तदनन्तर-मेवेहादिप्रवृत्तेर्विशेषसामान्यार्थावग्रहोऽवलम्बनमिति। एवमुत्तरोत्तरधर्मजिज्ञासायां सत्यां विशेषसामान्यार्थावग्रहेषु मर्यादया धावतो मेधोच्यते यावदधिगच्छति यथा शाङ्खः स किं मन्द्रः ? किं वा तारः ? इत्यादि, यत्र व्यञ्जनावग्रहो नास्ति तत्राद्यभेदद्वयाभाव इति। 'से तं उग्गहे' सोऽयमवग्रहः ॥

**से किं तं ईहा ? ईहा छव्विहा पण्णत्ता, तं जहा--सोइंदियईहा चक्खिंदियईहा घाणिंदिअईहा जिब्भिदिअईहा फासिंदिअईहा नोइंदिअईहा। तीसे णं इमे एगट्ठिआ नाणाघोसा नाणावंजणा पंच नामधिज्जा भवंति, तं जहा--आभोगणया मग्गणया गवेसणया चिंता विमंसा। से तं ईहा॥ (सू० ३१)**

चूर्णिः--इदाणिं उग्गहसमणंतरं ईहा, सा छव्विहा सुत्तसिद्धा। इमे तस्सेगट्ठिता, तेवि ईहासामण्णतो एगट्ठिता चेव, अत्थविकप्पणतो पुणभिण्णत्था इमेण विधिणा--'आभोयणता' इच्चादि, उग्गहसमयाणंतरं सब्भूतविसेसत्थाभिमुहमालोयणं आभोयणता भण्णति, तस्सेव विसेसत्थस्स अण्णयवइरेगधम्मसमालोयणं मग्गणा भण्णति, तस्सेवत्थस्स वइरेगधम्मपरिच्चाओ अण्णयधम्मसमालोगणं च गवेसणता भण्णति, तस्सेव तद्धम्माणुगतत्थस्स पुणो पुणो समालोयणत्तेण चिंता भण्णति,

तमेवत्थं णिच्चाणिच्चादिएहिं दव्वभावेहिं विमरिसता वीमंसा भण्णति । एवं बहुधा अत्थमालोगतं तस्स उक्कोसतो अंतमुहुत्तकालं सव्वा ईहा भवति ॥

वृत्तिः—'से किं तं' इत्यादि सूत्रं निगदसिद्धं यावत् आभोगनता ईहा, अर्थावग्रहसमयसमनन्तरमेव सद्भूतार्थविशेषाभिमुखमालोचनमाभोगनमुच्यते, तद्भाव आभोगनता । मृग्यतेऽनेन परिणामकरणेनेति मार्गणं सद्भूतार्थविशेषाभिमुखमेव तदूर्ध्वमन्वयव्यतिरेकधर्मान्वेषणमिति हृदयं, तद्भावो मार्गणता, एवम् अन्विष्यते गवेष्यतेऽनेनेति गवेषणं, तत ऊर्ध्वं सद्भूतार्थविशेषाभिमुखमेव व्यतिरेकधर्मपरित्यागतोऽन्वयधर्माध्यासेनालोचनमिति गर्भः, तद्भावो गवेषणता, ततो मुहुर्मुहुः क्षयोपशमविशेषतः स्वधर्मानुगतसद्भूतार्थविशेषचिन्तनं चिन्ता, विमर्षणं विमर्षः क्षयोपशमविशेषादेवोर्ध्वं स्पष्टतरावबोधतः सद्भूतार्थविशेषाभिमुखमेव व्यतिरेकधर्मपरित्यागतोऽन्वयधर्मालोचनं विमर्शः, नित्यानित्यादिद्रव्यभावालोचनमित्यन्ये । से तं ईहा ॥

से किं तं अवाए? अवाए छव्विहे पण्णत्ते, तं जहा--सोइंदिअअवाए चक्खिंदिअअवाए घाणिंदिअअवाए जिब्भिंदिअअवाए फासिंदिअअवाए नोइंदिअअवाए तस्स णं इमे एगट्ठिआ नाणाघोसा नाणावंजणा पंच नामधिज्जा भवंति, तं जहा--आउट्टणया पच्चाउट्टणया अवाए बुद्धी विण्णाणे । से तं अवाए ॥ (सू० ३२)

चूर्णिः—ईहाणंतरं अवातो, सो छव्विहो सुत्तसिद्धो, तस्सेगट्ठिता इमे पंच, ते य अवायसामण्णत्तणतो णियमा एगट्ठिता चेव, अभिधाणभिण्णत्तणतो पुण भिण्णत्था। इमेण विधिणा-'आउट्टणता' इत्यादि, ईहणभावनियट्टस्स अत्थसरूवपडिबोधबुद्धस य परिच्छेदमुप्पादंतस्स आउट्टणता भणणति; इहणभावनियट्टस्स वि तमत्थमालोयंतस्स पुणो पुणो णियट्टणं पच्चाउट्टणं भण्णाति। सव्वहा ईहाए अवणयणं कातुं अवधारणावधारितत्थस्स अवधारयतो अवातोत्ति भण्णइ। पुणो पुणो तमत्थावधारणावधारितं बुज्झतो बुद्धी भवइ। तम्मि चेवावधारितमत्थे विसेसे पेरकतो अवधारयतो य विण्णाणे त्ति भण्णाति॥

वृत्तिः—'से किं तं' इत्यादि सूत्रसिद्धं यावत् आवर्तनता, वर्त्यतेऽनेनेति वर्तनं क्षयोपशमकरणमेव ईहाभावनिवृत्त्यभिमुखस्यापायभावप्रतिपत्त्यभिमुखस्य चार्थविशेषावबोधविशेषस्य आ–मर्यादया वर्तनमावर्तनं, तद्भाव आवर्तनता। ततः प्रतिपमावर्तनं प्रत्यावर्तनम् अर्थविशेष एव विवक्षितापायप्रत्यासन्नतरबोधविशेषाणां मुहुर्मुहुर्वर्तनामित्यर्थः, तद्भावः प्रत्यावर्तनता। अप अयः अपायः विशेषतः सङ्कलनेन निश्चयो निर्णयोऽवगम इत्यनर्थान्तरं, सर्वथेहाभावान्निवृत्तस्यावधारणावधारितमर्थमवगच्छतोऽपाय इति भावार्थः। ततस्तमेवावधारितमर्थं क्षयोपशमविशेषात् स्थिरतया पुनः पुनः स्पष्टतरमेव बुद्ध्यमानस्य बुद्धिः। विशिष्टं ज्ञानं विज्ञानं क्षयोपशमविशेषादवधारितार्थविषयमेव तीव्रतरधारणाकारणमित्यर्थः। 'से तं अवाए' सोऽयमपायः॥

**से किं तं धारणा? धारणा छव्विहा पण्णत्ता, तं जहा--सोइंदिअधारणा चक्खिंदिअधारणा घाणिंदिअधारणा जिब्भिंदिअधारणा फासिंदिअधारणा नोइंदिअधारणा। तीसे णं इमे एगट्ठिआ**

नाणाघोसा नाणावंजणा पंच नामधिज्जा भवंति, तं जहा--धारणा साधारणा ठवणा पइट्ठा कोट्ठे । से तं धारणा ॥ ( सू० ३३ )

चूर्णिः—अवायाणंतरं धारणा, सा य छव्विहा सुत्तसिद्धा, तस्सेगट्ठिता पंच, ते य सामण्णधारणं पडुच्च णियमा एगट्ठिया, धारणत्थविकप्पणताए भिण्णत्था इमेण विधिणा--'धारणा' इत्यादि, अवायाणंतरं तमत्थं अविच्चुतीए जहण्णुक्कोसेणं अंतमुहुत्तं धरेंतस्स धारणा भण्णति, तमेव अत्थं अणुवयोगत्तणतोऽविच्चुतं जहण्णेणं अंतमुहुत्तातो परतो दिवसादिकालविभागेसु संभरतो य धारणा भण्णति । 'ठवण' त्ति ठावणा सा य अवायावधारियमत्थं पुव्वावरमालोइयं हितयम्मि ठावयंतस्स ठवणा इति भण्णाति पूर्णघटस्थापनावत् । 'पतिट्ठ' त्ति सोवि य अवधारितत्थो हितयम्मि प्रभेदेन पइट्ठाइतमाणो पतिट्ठा भण्णति जले उपलप्रक्षेपप्रतिष्ठावत् । 'कोट्ठे' त्ति जहा कोट्ठगे सालिमादिबीया परिक्त्ता अविनट्ठा धारिज्जंति तहा अवातावधारितमत्थं गुरूवदिट्ठं सुत्तमत्थं वा अविणट्ठं धारयतो धारणाकोट्ठगसमात्ति कातुं कोट्ठेति वत्तव्वा ॥

वृत्तिः—'से किं तं' इत्यादि निगदासिद्धं यावद्धारणेत्यादि, अपायानन्तरमवगतार्थमविच्युत्या जघन्योत्कृष्टमन्तर्मुहूर्तमात्रं कालं धारयतो धारणेति भण्यते । ततस्तमेवार्थमनुपयोगाच्युतं जघन्येनान्तर्मुहूर्तादुत्कृष्टतोऽसङ्ख्येयकालात् परतः स्मरतो धरणं धारणोच्यते । स्थापनं स्थापना, ततोऽपायावधारितमर्थं पूर्वापरालोचितं हृदि स्थापयतः स्थापना पूर्णघटस्थापनावत् वासनेत्यर्थः । अन्ये तु धारणास्थापनयोर्व्यत्ययेन स्वरूपमाचक्षते । प्रातिष्ठापनं प्रतिष्ठा अपायावधारित-

मेवार्थं हृदि प्रभेदेन प्रतिष्ठापयतः प्रतिष्ठा भण्यते जले उपलप्रक्षेपप्रतिष्ठावत् । 'कोष्ठक' इति अविनष्टसूत्रार्थबीजधारणात् कोष्ठकवद्धारणा कोष्ठक इति । इहात्मनो ज्ञानस्वभावत्वाज्ज्ञानावरणीयादिकर्ममलपटलाच्छादितस्वभावत्वात् गुरुवदनसमुत्थशब्दाद्यनेकविधकारणापाद्यमानक्षयोपशमसामर्थ्यादवबोधः, ज्ञेयस्य चानन्तधर्मात्मकत्वात्कालक्षयोपशमविशेषतोऽवग्रहेहापायावबोधविशेषो भावनीयः/कथञ्चिदेकाधिकरणत्वात् अन्यथा परिच्छेदप्रवृत्तिलक्षणसकललोकप्रसिद्धसंव्यवहारोच्छेदप्रसंग इत्यलं प्रसंगेन, गमनिकामात्रमेतत् ॥ अवग्रहादिकालप्रमाणं प्रतिपादयन्नाह—

उग्गहे इक्कसमइए, अंतोमुहुत्तिया ईहा, अंतोमुहुत्तिए अवाए, धारणा संखेज्जं वा कालं असंखेज्जं वा कालं ( सू० ३४ ) एवं ( इच्चेतस्स ) अट्ठावीसइविहस्स आभिणिबोहियनाणस्स वंजणुग्गहस्स परूवणं करिस्सामि पडिबोहगदिट्ठंतेण मल्लगदिट्ठंतेण य । से किं तं पडिबोहगदिट्ठंतेणं ? पडिबोहगदिट्ठंतेणं से जहानामए केइ पुरिसे कंचि पुरिसं सुत्तं पडिबोहिज्जा अमुगा अमुग त्ति, तत्थ चोअगे पन्नवगं एवं वयासी-किं एग समयपविट्ठा पुग्गला गहणमागच्छंति ? दुसमयपविट्ठा पुग्गला गहणमागच्छंति? जाव दससमयपविट्ठा पुग्गला गहणमागच्छंति? संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति ? असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति ? एवं वदंतं चोअगं पण्णवए एवं वयासी--नो एगसमयपविट्ठा पुग्गला गहणमागच्छंति, नो दुसमयपविट्ठा पुग्गला

गहणमागच्छंति, जाव नो दससमयपविट्ठा पुग्गला गहणमागच्छंति, नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, से तं पडिबोहगदिट्ठंतेणं। से किं तं मल्लगदिट्ठंतेणं? मल्लगदिट्ठंतेणं से जहा नामए केइ पुरिसे आवागसीसाओ मल्लगं गहाय तत्थेगं उदगबिंदुं पक्खेविज्जा, से नट्ठे, अण्णेऽवि पक्खित्ते सेऽवि नट्ठे, एवं पक्खिप्पमाणेसु २ होही से उदगबिंदू जे णं तं मल्लगं रावेहिइ त्ति, होही से उदगबिंदू जे णं तंसि मल्लगंसि ठाहिति होही से उदगबिंदू जे णं तं मल्लगं भरिहिति होही से उदगबिंदू जे णं तं मल्लगं पवाहेहिति, एवामेव पक्खिप्पमाणेहिं२ अणंतेहिं पुग्गलेहिं जाहे तं वंजणं पूरिअं होइ ताहे हुंति करेइ, नो चेव णं जाणइ केऽवि एस सद्दाइ? तओ ईहं पविसइ, तओ जाणइ अमुगे एस सद्दाइ, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ णं धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं, से जहा नामए केई पुरिसे अव्वत्तं सद्दं सुणिज्जा तेणं सद्दो त्ति उग्गहिए, नो चेव णं जाणइ के वेस सद्दाइ, तओ ईहं पविसइ, तओ जाणइ, अमुगे एस सद्दे, तओ णं अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखेज्जं

प्रतिबोध-
कदृष्टान्तो
मल्लक-
दृष्टान्तश्च

वा कालं। से जहा नामए केई पुरिसे अव्वत्तं रूवं पासिज्जा तेणं रूव त्ति उग्गहिए, नो चेव णं जाणइ के वेस रूवात्ति, तओ ईहं पविसइ, तओ जाणइ, अमुगे एस रूवे त्ति, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ, संखेज्जं वा कालं असंखिज्जं वा कालं। से जहा नामए केई पुरिसे अव्वत्तं गंधं अग्घाइज्जा, तेणं गंध त्ति उग्गहिए, नो चेव णं जाणइ के वेस गंधे त्ति, तओ ईहं पविसइ, तओ जाणइ अमुगे एस गंधे, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखेज्जं वा कालं असंखेज्जं वा कालं। से जहा नामए केई पुरिसे अव्वत्तं रसं आसाइज्जा, तेणं रसो त्ति उग्गहिए, नो चेव णं जाणइ के वेस रसेत्ति, तओ ईहं पविसइ, तओ जाणइ अमुगे एस रसे, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं। से जहा नामए केई पुरिसे अव्वत्तं फासं पडिसंवेइज्जा, तेणं फासे त्ति उग्गहिए नो चेव णं जाणइ के वेस फासओ त्ति, तओ ईहं पविसइ, तओ जाणइ अमुगे एस फासे, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ धारणं पविसइ, तओ णं धारेइ संखेज्जं वा कालं असंखेज्जं

वा कालं । से जहा नामए केई पुरिसे अव्वत्तं सुमिणं पासिज्जा, तेणं सुमिणो त्ति उग्गहिए, नो चेव णं जाणइ के वेस सुमिणे त्ति, तओ ईहं पविसइ, तओ जाणइ अमुगे एस सुमिणे, तओ अवायं पविसइ, तओ से उवगयं होइ, तओ धारणं पविसइ, तओ धारेइ संखेज्जं वा कालं असंखेज्जं वा कालं । से तं मल्लगदिट्ठंतेणं ॥ ( सू० ३५ )

चूर्णिः—'इच्चेतस्से'त्यादि सुत्तं, इतिः उपप्रदर्शने एतस्स ति जं अतिक्कंतं । अट्ठावीसातिभेदं, ते य के अट्ठावीसं भेदा:? उच्यते–चउव्विहो वंजणावग्गहो, छव्विहो अत्थावग्गहो, छव्विहा ईहा, छव्विहो अवायो, छव्विधा धारणा, एते सव्वे अट्ठावीसं । एयस्स अट्ठावीसइविहस्स मज्झातो जो वंजणावग्गहो चउव्विहो तस्स दुगादिट्ठंतेण परूवणा, 'से जहा णामए' इत्यादि, 'से' त्ति पडिबोधकस्स णिद्देसे, 'जहा णामए' त्ति जहा णाम संभवत आत्माभिप्रायकृतादित्यर्थः, सव्वण्णुप्पणीयमत्थं तदणुसारि सुत्तं वा अप्पबुद्धिविण्णाणत्तणयो अणवगच्छमाणो सीसो पुच्छाचोदणातो चोदको, अहवा तमेव सुतमत्थं वा अघडमाणं ति मण्णमाणो तदा स चोदयतो चोदगो भण्णति, पवयणमविरुद्धं निद्दोसं सुतत्थं पण्णवेंतो पण्णवगो विरुद्धपुणरुत्तसुत्तं वा अत्थतो अविरुद्धं दरिसेंतो पण्णवेति जो सो वा पण्णवगो भण्णति, यथावत्संशयच्छेदीत्यर्थः, चोदको संसयमावन्नो पण्णवगं पुच्छाति–'किं एगसमयादिपविट्ठा' इत्यादि कंठं, एवं चोदकं पुच्छाभिप्पायेण वदंतं पण्णवगोआह–'णोएगसमयप विट्ठा' इत्यादि, जो एस पडिसेहो कतो एस सद्दाइफुडविण्णाणजणगत्तेणं ति णो गहणमागच्छंति इहरा पोग्गला

गहणमागच्छन्त्येवेत्यर्थः, एवं एगादिसमयपविट्ठपोग्गलपडिसिद्धेसु इमा अणुण्णा असंखेज्जसमयपविट्ठा पोग्गला गहणमागच्छंति त्ति, इमस्स अणणुयोगत्थो अणुयोगत्थो य, तत्थ अणणुयोगो इमो-जहा पवासी सगिहमेंतो अद्धाणं पंचाहेण दसाहेण वा वीतीवतित्ता सगिहं पविट्ठो त्ति, एवं असंखेज्जेहिं समयेहिं आगता पविट्ठा कण्णाबिलेसु पोग्गला गेण्हति त्ति, एवं अणणुयोगो भवति, इमो अणुयोगत्थो पढमसमयादारब्भ पतिसमयं पविसमाणेसु असंखेज्जइमे समए जे पविट्ठा ते गहणमागच्छंति, ते य सद्दादिविण्णाणजणग त्ति काउं अतो तेसिं गहणमुवादिट्ठं, सो य असंखेज्जइमो समयो किं पमाणे असंखेज्जए भण्णति ? उच्यते–जहण्णेणं आवलियाए असंखेज्जभागमेत्तेसु समयेसु गतेसु त्ति, उक्कोसेणं संखेज्जासु आवलियासु आणापाणुकालपुहत्ते वा उभयधाऽवि अविरुद्धं, गतो पडिबोधकदिट्ठंतो, इदाणिं आवागसीसगदिट्ठंतो–तत्थ आवागसीसगं ति पागट्ठाणमेव, अहवा आपागट्ठाणस्स आसण्णं समंता परिपेरंतं, अहवा आपागस्सुत्तारियाण जं ठाणं तं आपागसीसयं भण्णति, अणंतेहिं ति प्रथमसमयादारभ्य प्रतिसमयं अणंता प्रविशन्तीत्यतोऽनन्ता, जाहे तं वंजणं पूरितं भवति त्ति, एत्थ वंजणग्गहणेण सद्दाइपुग्गलदव्वा दव्विंदियं वा उभयसंबंधो वा घेतव्वं तिधाऽवि ण विरोधो, वंजणं पूरियं ति कहं ? उच्यते--जदा पुग्गलदव्वा वंजणं तदा पूरियंति पभूता ते पोग्गलदव्वा जाता स्वं प्रमाणमागता सविसयपडिबोधसमत्था जाता इत्यर्थः। जदा पुण दव्विंदियं वंजणं तदा पूरियं ति कहं ? उच्यते–जाहे तेहिं पोग्गलेहिं तं दव्विंदियं आवूतं भरितं वा वि तं तदा पूरियं ति भण्णति, जदा तु उभयसंबंधो वंजणं तदा पूरियं ति कहं ? उच्यते दव्विंदियस्स पुग्गला अंगीभावमागता पुग्गला य दव्विंदिए अनुपक्ताः एस उभयभावो, एतम्मि उभयभावे पुग्गलेहिं इंदियं पूरितं, पूरितं इंदिएण विसयपडिबोधकप्पमाणा

'पडिबोधएज्ज' त्ति प्रतिबोधयेत्, कथं ? अमुक ! अमुक ! इति, तत्र 'चोयगे' इत्यादि, इह ज्ञानावरणकर्मोदयतः कथितमपि सूत्रार्थमनवगच्छन् प्रश्नचोदनाच्चोदकः, अविशिष्टक्षयोपशमभावतो वाऽगृहीतशास्त्रगर्भार्थपूर्वापरविरोधचोदनाच्चोदकः। यथावस्थितं सूत्रार्थं प्रज्ञापयतीति प्रज्ञापकः श्रौतार्थापेक्षया विरुद्धं पुनरुक्तसूत्रं वाऽर्थतोऽविरुद्धं अपुनरुक्तं प्रज्ञापयतीति प्रज्ञापकः। तत्र चोदकः प्रज्ञापकमेवमुक्तवानिति, भूतकालनिर्देशोऽनादिमानागम इति ख्यापनार्थः। किमेकसमयप्रविष्टेत्यादि सुगमं यावत् एवं वदन्तं चोदकं प्रज्ञापक एवमुक्तवान्–नो एकसमयप्रविष्टेत्यादि प्रकटार्थं यावत् नो संख्येयसमयप्रविष्टाः पुद्गला ग्रहणमागच्छन्ति, नवरमयं प्रतिषेधः स्फुटशब्दविज्ञानग्राह्यतामधिकृत्य वेदितव्यः शब्दविज्ञानजनकत्वेनेत्यर्थः, अन्यथा संबंधमात्रमधिकृत्य प्रथमसमयादारभ्य ग्रहणमागच्छन्त्येव। 'असंखेज्ज' इत्यादि, प्रतिसमयप्रवेशनादित आरभ्यासंख्येयसमयैः प्रविष्टैः असंख्येयसमयप्रविष्टाः, न पुनर्विंशत्याऽहोभिः पथिकगृहप्रवेशवदपान्तरालागमनसमयापेक्षयाऽसंख्येयसमयप्रविष्टा इति। पुद्गलाः शब्दद्रव्यविशेषा ग्रहणमागच्छन्ति, अर्थावग्रहज्ञानहेतवो भवन्तीति भावः। इह च चरमसमयप्रविष्टा एव ग्रहणमागच्छन्ति तदन्ये त्विन्द्रियक्षयोपशमोपकारिण इत्योघतो ग्रहणमुक्तमिति, असंख्येयमानं चात्र जघन्यमावलिकाऽसंख्येयभागसमयतुल्यम्, उत्कृष्टं तु संख्येयावलिकासमयतुल्यं, तच्च प्राणापानपृथक्त्वकालसमयमिति उक्तं च -" वंजणवग्गहकालो, आवलियाअसंखभागमेत्तो उ। थोवो उक्कोसो पुण, आणापाणूपुहत्तं ति॥१॥" 'से तं' इत्यादि निगमनं, सेयं प्रतिबोधकदृष्टान्तेन व्यञ्जनावग्रहप्ररूपणेति वाक्यशेषः। 'से किं तं' इत्यादि, अथ कोऽयं मल्लकदृष्टान्तः ? मल्लकदृष्टान्तो नाम तद्यथा नाम कश्चित् पुरुषः 'आपाकशिरसः' आपाकः–प्रतीतः तच्छिरसश्च मल्लकं–

शरावं गृहीत्वा, इदं रूक्षं भवतीत्यतोऽस्य ग्रहणमिति, तत्र मल्लके एकमुदकबिंदुं प्रक्षिपेत् स नष्टः तत्रैव तद्भावपरिणतिमा-
पन्न इत्यर्थः, शेषं सुगमं यावत् ' जे णं तं मल्लगं रावेहिइ त्ति ' आर्द्रतां नेष्यति, शेषं सुगमं यावत् ' एवामेव ' इत्यादि,
अतिबहुत्वात्प्रतिसमयमनन्तैः पुद्गलैः शब्दपुद्गलैः यदा तद्व्यञ्जनं पूरितं भवति तदा ' हुमिति करोति ' तमर्थं गृह्णाति
इत्युक्तं भवति, अत्र व्यञ्जनशब्देन त्रयमभिगृह्यते द्रव्यमिन्द्रियं संबंधो वा, यदा द्रव्यं व्यञ्जनमधिक्रियते तदा पूरितमिति
प्रभूतीकृतं स्वप्रमाणमानीतं स्वविषयव्यक्तौ समर्थीकृतमित्यर्थः, यदा व्यञ्जनमिन्द्रियं तदा पूरितमिति आभृतं व्याप्त-
मित्यर्थः, यदा द्वयोरपि संबंधोऽधिक्रियते तदा पूरितमिति अङ्गाङ्गीभावमानीतमनुपक्तमित्यर्थः, एवं यदा पूरितं भवति
तदानीं तमर्थं गृह्णाति, किंविशिष्टं ? नामजात्यादिकल्पनारहितं, तथा चाह--" णो चेव णं जाणाइ के वेस सद्दादि त्ति "
न पुनरेवं जानाति क एष शब्दादिरर्थः इत्येकसामयिकत्वादर्थावग्रहस्य, अत्रार्थावग्रहात् पूर्वं सर्वो व्यञ्जनावग्रह इति ' ततो
ईहं पविसइ ' इत्यादि सुगमं यावत् ' संखेज्जं वा असंखेज्जं वा कालं ति '। अत्राह--सुप्तमङ्गीकृत्य युज्यतेऽयं न्यायः,
जाग्रतस्तु शब्दश्रवणसमनन्तरमेवावग्रहेहाव्यतिरेकेणैवापायज्ञानमुत्पद्यते, तथोपलम्भात्, न चैतदनार्षं, यत आह--सूत्रकारः--
' से जहा नामए ' इत्यादि, अथवा यदुक्तं न पुनरेवं जानाति क एष शब्दादिः किं तर्हि नामजात्यादिकल्पनारहितं
गृह्णातीत्येतदयुक्तं, यत एवमागमः--' से ' इत्यादि, अथवा सुप्तप्रतिबोधकमल्लकदृष्टान्ताभ्यां व्यंजनार्थावग्रहयोः सामान्येन
स्वरूपमभिधाय अधुना मल्लकदृष्टान्तेनैव प्रतिपादयन्नाह--' से जहा ' इत्यादि, तद्यथा नाम कश्चित् पुरुषोऽव्यक्तं शब्दं
शृणुयात्, अव्यक्तमिति अनिर्देश्यस्वरूपं नामादिकल्पनारहितमित्यनेनार्थावग्रहमाह, तस्य च श्रोत्रेन्द्रियसंबन्धिनो व्यञ्ज-

मुहुत्तकालं ईह त्ति, ततो विसिट्ठमतिनाणखयोवसमभावत्तणतो अंतमुहुत्तकालब्भंतर एव जाणति अमुए एस सद्दो संख-संगादिए त्ति दुखबोधत्तणतो पुण अत्यस्स अविसिट्ठमइण्णाणखयोवसमयत्तणतो वा ईहोवयोगे अंतोमुहुत्ते वुत्ते अणवगतत्थो पुणोऽवि अण्णं अंतमुहुत्तं ईहते । एवं ईहोवयोगविच्छेदसंताणतो बहुएऽवि अंतमुहुत्ते ईहेज्जा ण दोसो । ततो ईहाणंतरं अवातो, सो य सद्दाइअत्थपडुप्पण्णस्स जे परधम्मा तेसु विमुहस्स सधम्मे य अवधारयतो ण एस संगसद्दो णिद्धमधुरगंभीर-त्तणतो संखसद्दोऽयमिति, एवमवगतत्थो असंखेज्जसमयितो उक्कोसतो णियमा एगंतमुहुत्तिओ जो अवबोधो यो एस अत्थ-परिच्छेदो सो अवातो भवति । ततो अवायाणंतरं धारणं पविसइ त्ति, सा य धारणा जहण्णतो असंखेज्जसमते अविच्चुतीए-तमत्थं धरेति, उक्कोसतो अंतमुहुत्तं अणुवयोगतो पुण तमत्थं विस्मृतं पुणोऽवि संभरइ त्ति धारणा, एवं सा संखेज्जवासा-उयाणं मुहुत्तदिवसादिकालसंखाए संखेज्जं कालं भवेज्ज, असंखेज्जवासाउयाणं पुण असंखेज्जकालं हवेज्जा एवं चक्खिदिएऽ-वि रूवं भाणितव्वं वंजणोग्गहवज्जं, घाणरसफासिंदिएसु वि जहा सोइंदिते तहा सव्वं भाणितव्वं संवेदेज्जाति, एते सद्दादि-इंदियत्थे पडुप्पण्णे इंदियं स्वं स्वं इंदियत्थं आयरवयोवसममणुरूवं सुभमसुभं वा वेदेज्ज त्ति, एते सद्दाई चक्खुइंदियवज्जं सेसेंदिएहि पत्तमिंदियत्थं पायसो इट्ठमणिट्ठं वा स्वमात्मानुगतं वेदनं वेदते न सरीरेण अनुपलंभं वा वेदयतीत्यर्थः, फासिं-दियमत्थं पुण स्वमनुगतं सरीरानुगतं च दुहाऽवि फुडं वेदइ त्ति संवेदेज्जाति, अतो भाणितं, एवं मणसो सुविणंमि सद्दादि-विसएसु अवग्रहादयो णेया । अण्णत्थ वा इंदियवावारअभावे मणो माणसीए त्ति इह सुत्ते णं निदरिसणं मणे, 'से जहा णामए' इत्यादि सुत्तं कंठं । सुविणो मे दिट्ठो त्ति सुविणदट्ठं अव्वत्तं सुमरइ, तच्च प्रतिबोधप्रथमसमये सुविणामिति संभरतो अत्थावग्गहो

तस्य पूर्वमवस्थायां व्यञ्जनावग्रहः परत ईहादि, शेषं पूर्ववत् । जग्गतो अणिंदियत्थवावारेऽवि मणसो जुज्जते वंजणावग्गहो, उवयोगस्स असंखेज्जसमयत्तणयो उवयोगद्धाए य प्रतिसमयमणोदव्वग्गहणतो मणोदव्वाणं च वंजणववदेसतो समए य असंखेज्जातिमे मनसो नियमार्थग्रहणं भवेत्तस्य च प्रथमसमयार्थप्रतिबोधकालेऽर्थावग्रहः तस्य पूर्वमसंङ्ख्येयसमयेषु व्यञ्जनावग्रहः, शेषमीहादि पूर्ववत् । सीसो पुच्छति--उग्गहादीणं उ कमातिक्कमे एकतरअभावे वा किं सद्दादिवत्थुपरिच्छेदो ण भवति ? आचार्य आह--आमं ण भवति, अत एव च क्रमे नियमः, जम्हा णो अगहितं ईहति, तम्हा, पुव्वं उग्गहो, जम्हा य अणीहितं णो अवगच्छाति, ईहाणंतरं तम्हा अवायो, जम्हा य अणावायं ण धारिज्जति वत्थुं, अवायाणंतरं तम्हा धारणा, जम्हा य एष क्रमनियमो तम्हा सव्वो आभिनिबोधियनाणावगमो नियमा एवं भवति, अत एव च कारणा सव्वे अवग्रहादयो मतिनाणभेदा भवन्तीत्यर्थः ॥

वृत्तिः—'उग्गहे'त्यादि, अर्थावग्रह एकसामयिकः, आन्तर्मौहूर्त्तिकी ईहा, आन्तर्मौहूर्त्तिकोऽपायः, धारणा सङ्ख्येयं वाऽसङ्ख्येयं वा कालं स्मृतिवासनारूपा, सङ्ख्येयवर्षायुषां सङ्ख्येयमसङ्ख्येयवर्षायुषामसङ्ख्येयम् । 'एवं अट्ठावीसविधस्स' इत्यादि, एवम्-उक्तेन प्रकारेण अष्टाविंशतिविधस्य, कथमष्टाविंशतिविधम् ? चतुर्विधो व्यञ्जनावग्रहः, षड्विधोऽर्थावग्रहः, षड्विधा ईहा, षड्विधोऽपायः,षड्विधा धारणा, एवमष्टाविंशतिविधस्य आभिनिबोधिकज्ञानस्य सम्बन्धी यो व्यञ्जनावग्रहस्तस्य प्ररूपणं--प्रतिपादनं करिष्यामि । कथं ? प्रतिबोधकदृष्टान्तेन मल्लकदृष्टान्तेन च 'से किं तं' इत्यादि, प्रतिबोधयतीति प्रतिबोधकः, स एव दृष्टान्तस्तेन, तद्यथा नाम कश्चिदानिर्दिष्टस्वरूपः पुरुषः कञ्चिदन्यतममनिर्दिष्टस्वरूपमेव पुरुषं सुप्तं सन्तं

'पडिबोधएज्ज' त्ति प्रतिबोधयेत्, कथं ? अमुक ! अमुक ! इति, तत्र 'चोयगे' इत्यादि, इह ज्ञानावरणकर्मोदयतः कथितमपि सूत्रार्थमनवगच्छन् प्रश्नचोदनाच्चोदकः, अविशिष्टक्षयोपशमभावतो वाऽगृहीतशास्त्रगर्भार्थपूर्वापरविरोधचोदनाच्चोदकः। यथावस्थितं सूत्रार्थं प्रज्ञापयतीति प्रज्ञापकः श्रौतार्थापेक्षया विरुद्धं पुनरुक्तसूत्रं वाऽर्थतोऽविरुद्धं अपुनरुक्तं प्रज्ञापयतीति प्रज्ञापकः। तत्र चोदकः प्रज्ञापकमेवमुक्तवानिति, भूतकालनिर्देशोऽनादिमानागम इति ख्यापनार्थः। किमेकसमयप्रविष्टेत्यादि सुगमं यावत् एवं वदन्तं चोदकं प्रज्ञापक एवमुक्तवान्—नो एकसमयप्रविष्टेत्यादि प्रकटार्थं यावत् नो संख्येयसमयप्रविष्टाः पुद्गला ग्रहणमागच्छन्ति, नवरमयं प्रतिषेधः स्फुटशब्दविज्ञानग्राह्यतामधिकृत्य वेदितव्यः शब्दविज्ञानजनकत्वेनेत्यर्थः, अन्यथा संबंधमात्रमधिकृत्य प्रथमसमयादारभ्य ग्रहणमागच्छन्त्येव। 'असंखेज्ज' इत्यादि, प्रतिसमयप्रवेशनादित आरभ्यासंख्येयसमयैः प्रविष्टैः असंख्येयसमयप्रविष्टाः, न पुनर्विंशत्याऽहोभिः पथिकगृहप्रवेशवदपान्तरालागमनसमयापेक्षयाऽसंख्येयसमयप्रविष्टा इति। पुद्गलाः शब्दद्रव्यविशेषा ग्रहणमागच्छन्ति, अर्थावग्रहज्ञानहेतवो भवन्तीति भावः। इह च चरमसमयप्रविष्टा एव ग्रहणमागच्छन्ति तदन्ये त्विन्द्रियक्षयोपशमोपकारिण इत्योघतो ग्रहणमुक्तमिति, असंख्येयमानं चात्र जघन्यमावलिकाऽसंख्येयभागसमयतुल्यम्, उत्कृष्टं तु संख्येयावलिकासमयतुल्यं, तच्च प्राणापानपृथक्त्वकालसमयमिति उक्तं च -"वंजणवग्गहकालो, आवलियाअसंखभागमेत्तो उ। थोवो उक्कोसो पुण, आणापाणूपुहत्तं ति॥१॥" 'से तं' इत्यादि निगमनं, सेयं प्रतिबोधकदृष्टान्तेन व्यञ्जनावग्रहप्ररूपणेति वाक्यशेषः। 'से किं तं' इत्यादि, अथ कोऽयं मल्लकदृष्टान्तः ? मल्लकदृष्टान्तो नाम तद्यथा नाम कश्चित् पुरुषः 'आपाकशिरसः' आपाकः--प्रतीतः तच्छिरसश्च मल्लकं--

शरावं गृहीत्वा, इदं रूक्षं भवतीत्यतोऽस्य ग्रहणमिति, तत्र मल्लके एकमुदकबिंदुं प्रक्षिपेत् स नष्टः तत्रैव तद्भावपरिणतिमापन्न इत्यर्थः, शेषं सुगमं यावत् 'जे णं तं मल्लगं रावेहिइ त्ति' आर्द्रतां नेष्यति, शेषं सुगमं यावत् 'एवामेव' इत्यादि, अतिबहुत्वात्प्रतिसमयमनन्तैः पुद्गलैः शब्दपुद्गलैः यदा तद्व्यञ्जनं पूरितं भवति तदा 'हुमिति करोति' तमर्थं गृह्णाति इत्युक्तं भवति, अत्र व्यञ्जनशब्देन त्रयमभिगृह्यते द्रव्यमिन्द्रियं संबंधो वा, यदा द्रव्यं व्यञ्जनमधिक्रियते तदा पूरितमिति इत्युक्तं भवति, अत्र व्यञ्जनशब्देन त्रयमभिगृह्यते द्रव्यमिन्द्रियं संबंधो वा, यदा द्रव्यं व्यञ्जनमधिक्रियते तदा पूरितमिति आभृतं व्याप्तमित्यर्थः, यदा व्यञ्जनमिन्द्रियं तदा पूरितमिति आभृतं व्याप्तप्रभूतीकृतं स्वप्रमाणमानीतं स्वविषयव्यक्तौ समर्थीकृतमित्यर्थः, यदा द्वयोरपि संबंधोऽधिक्रियते तदा पूरितमिति अङ्गाङ्गीभावमानीतमनुषक्तमित्यर्थः, एवं यदा पूरितं भवति तदानीं तमर्थं गृह्णाति, किंविशिष्टं ? नामजात्यादिकल्पनारहितं, तथा चाह--"णो चेव णं जाणाइ के वेस सद्दादि त्ति" न पुनरेवं जानाति क एष शब्दादिरर्थः इत्येकसामयिकत्वादर्थावग्रहस्य, अत्रार्थावग्रहात् पूर्वं सर्वो व्यञ्जनावग्रह इति 'ततो ईहं पविसइ' इत्यादि सुगमं यावत् 'संखेज्जं वा असंखेज्जं वा कालं ति'। अत्राह--सुप्तमङ्गीकृत्य युज्यतेऽयं न्यायः, जाग्रतस्तु शब्दश्रवणसमनन्तरमेवावग्रहेहाव्यतिरेकेणैवापायज्ञानमुत्पद्यते, तथोपलम्भात्, न चैतदनार्षं, यत आह--सूत्रकारः--'से जहा नामए' इत्यादि, अथवा यदुक्तं न पुनरेवं जानाति क एष शब्दादिः किं तर्हि नामजात्यादिकल्पनारहितं गृह्णातीत्येतदयुक्तं, यत एवमागमः--'से' इत्यादि, अथवा सुप्तप्रतिबोधकमल्लकदृष्टान्ताभ्यां व्यंजनार्थावग्रहयोः सामान्येन स्वरूपमभिधाय अधुना मल्लकदृष्टान्तेनैव प्रतिपादयन्नाह--'से जहा' इत्यादि, तद्यथा नाम कश्चित् पुरुषोऽव्यक्तं शब्दं शृणुयात्, अव्यक्तमिति अनिर्देश्यस्वरूपं नामादिकल्पनारहितमित्यनेनार्थावग्रहमाह, तस्य च श्रोत्रेन्द्रियसंबन्धिनो व्यञ्ज-

नावग्रहपूर्वकत्वात् व्यञ्जनावग्रहं च । आह--न ह्यत्रैवं क्रम उपलभ्यते, किं त्वक्षेपेण शब्दापायज्ञानमेव वेद्यते, सूत्रे व्यक्तामिति शब्दविशेषणं कृतम्, अतोऽव्यक्तं सांदिग्धं पुरुषादिशब्दभेदेन शब्दं शृणुयादिति न्याय्यं, तथा चोत्तरसूत्रमप्येतदेवाह-- ' तेणं सद्दे त्ति उग्गहिते ' तेन श्रोत्रा शब्द इत्यवगृहीतं, ' णो चेव णं जाणति को वेस सद्दादि ' न पुनरेवं जानाति क एष पुरुषादिसमुत्थानामन्यतमः शब्द इति, आदिशब्दाद्रसादिष्वपि अययेव न्याय इति ज्ञापयति ' ततो ईहं पविसति ' इत्याद्यपि संबद्धमिति, नैतदेवमुत्पलपत्रशतव्यतिभेददृष्टान्तेन कालभेदस्य दुर्लक्षत्वादक्षेपेण शब्दापायज्ञानानुपपत्तेः, यच्च तेन शब्द इत्यवगृहीतमित्युक्तम्, अत्र शब्द इति भणति वक्ता सूत्रकार इति करणनिर्देशाच्छब्दमात्रं वा शेषविशेषविमुखं न तु शब्दबुद्ध्या, तस्यैवापायप्रसंगात्, अवग्रहादिश्रुतव्यतिरेकेण च मतिज्ञानानुत्पत्तेः, तथा चाह--'णो चेव णं ' इत्यादि, न पुनरेवं जानाति क एष शब्दादिरर्थः सामान्यमात्रप्रतिभासनात्, आह च भाष्यकारः--" अव्वत्तमणिद्देसं, सरूवणामादिकप्पणारहितं । जदि एवं जं तेणं, गहियं सद्देत्ति तं कह णु ॥ १ ॥ सद्दे त्ति भणति वत्ता तम्मत्तं वा ण सद्दबुद्धीए । जदि होज्ज सद्दबुद्धी, तोऽवाओ चेव सो होज्जा ॥२॥ जदि सद्दबुद्धिमेत्तय--मवग्गहे तव्विसेसणमवाओ । णणु सद्दो णासद्दो, ण य रूवादी विसेसोऽयं ॥३॥ थोवम्मि य णावायो, तब्भेयाविक्खणं अवाओ त्ति । तब्भेयाविक्खाए, णणु थोवमिणं पि णावाओ ॥४॥ " इत्यादि । अन्ये त्वाचार्या इदं सूत्रं विशेषसामान्यार्थावग्रहविषयं व्याचक्षते--अव्यक्तम्--अनिर्धारितविशेषस्वरूपम्, अशब्दव्यवच्छेदेन शब्दं शृणुयात् तेन शब्द इति शब्दमात्रमवगृहीतं, न पुनरेवं जानाति क एष शब्दः शांखशार्ङ्गादीनामन्यतमः ? आदिशब्दाद्रसादिपरिग्रहः, तत्रापीयमेव वार्तेति युक्तियुक्ता चेयं व्याख्येति । तत ईहां प्रविशति सदर्थ-

मल्लक-दृष्टान्तः

पर्यालोचनां करोति । इह च दुरवबोधत्वाद्वस्तुनः अपटुत्वाच्च मतिज्ञानावरणक्षयोपशमस्यासंजातापाय एवेहोपयोगाच्च्युतः पुनरप्यन्यमन्तर्मुहूर्त्तमीहते, एवमीहोपयोगाविच्छेदत एव प्रभूतानप्यन्तर्मुहूर्त्तानीहत इति संभवः, ततो जानातीत्यादि, वस्तुतः गतार्थं यावत्स्पर्शनेन्द्रियवक्तव्यता, उक्तं च भाष्यकारेण-'सेसेसु वि रूवादिसु, विसएसु वि होइ रूवलक्खाइं । पायं पच्चासन्नत्तणणमीहादिवत्थूणि ॥१॥ थाणुपुरिसादि कुट्टुप्पलादि संभिन्नकरिल्लमंसादी । सप्पुप्पलनालाइ य समाणरूवाइ विसयाइं ॥२॥ एवं चिय सुमिणादिसु, मणसो सद्दादिएसु विसएसु। होंति दियवावारा-भावेवि अवग्गहादीया ॥३॥' इत्यादि 'से जहा णामए' इत्यादि, इह प्रतिबोधप्रथमसमयेऽव्यक्तमनिर्धारितस्वरूपं स्वप्नं प्रति संवेदयेत् तस्य तदार्थावग्रहः, तत ऊर्ध्वमीहादय इति । अन्ये तु मनसोऽप्यर्थावग्रहात् पूर्वं व्यंजनावग्रहं मनोद्रव्यव्यंजनग्रहणलक्षणं व्याचक्षते तत्पुनरयुक्तम् अनार्षत्वात् व्यंजनावग्रहस्य श्रोत्रादिभेदेन चतुर्विधत्वात् । शेषं प्रकटार्थं यावत् 'से तं मल्लगदिट्ठंतेणं' इह च सुखप्रतिपत्त्यर्थं स्वप्नमधिकृत्य नोइंद्रियार्थावग्रहादयः प्रतिपादिताः, अन्यथाऽन्यत्रापीन्द्रियव्यापाराभावे सति मनसा पर्यालोचयतोऽवगन्तव्या इति । अत्राह- किमुक्तलक्षणमवग्रहादिक्रमं विहाय क्वचिदपि मतिज्ञानं नोत्पद्यते येनैवं क्रम इति ? अत्रोच्यते- नोत्पद्यते, तथाहि- नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यते, इत्यलं प्रसंगेन ॥ सर्वमेवेदं द्रव्यादिभिर्निरूपयन्नाह—

**तं समासओ चउव्विहं पण्णत्तं, तं जहा-दव्वओ खित्तओ कालओ भावओ । तत्थ दव्वओ णं आभिणिबोहिअनाणी आएसेणं सव्वाइं दव्वाइं जाणइ न पासइ, खेत्तओ णं आभिणिबोहि-**

अनाणी आएसेणं सव्वं खेत्तं जाणइ न पासइ, कालओ णं आभिणिबोहिअनाणी आएसेणं सव्वं कालं जाणइ न पासइ, भावओ णं आभिणिबोहिअनाणी आएसेणं सव्वे भावे जाणइ न पासइ। उग्गह ईहाऽवाओ य, धारणा एव हुंति चत्तारि। आभिणिबोहियनाणस्स, भेयवत्थू समासेणं ॥७३॥ अत्थाणं उग्गहणम्मि, उग्गहो तह विआलणे ईहा। ववसायम्मि अवायो, धरणं पुण धारणं बिंति ॥ ७४ ॥ उग्गह इक्कं समयं, ईहावाया मुहुत्तमद्धं तु। कालमसंखं संखं च, धारणा होइ नायव्वा ॥ ७५ ॥ पुट्ठं सुणेइ सद्दं, रूवं पुण पासइ अपुट्ठं तु। गंधं रसं च फासं च, बद्धपुट्ठं वियागरे ॥ ७६ ॥ भासासमसेढीओ, सद्दं जं सुणइ मीसियं सुणइ। वीसेढी पुण सद्दं, सुणेइ नियमा पराघाए ॥ ७७ ॥ ईहा अपोह वीमंसा, मग्गणा य गवेसणा। सन्ना सई मई पन्ना, सव्वं आभिणिबोहियं ॥ ७८ ॥ से तं आभिणिबोहियनाणपरोक्खं [ से तं मइनाणं ] ( सू० ३६ )

चूर्णिः—'तं च मतिनाणं समासतो चउव्विहे' त्यादि सुत्तं, तं च मतिणाणं खयोवसमरूवतो एगविहं पि होतं णेय-

१ अत्थाणं उग्गहणं च, उग्गहं तह बियालणं ईहं। ववसायं च अवायं, धरणं पुण धारणं बिंति ॥ १ ॥ इति मूलपाठान्तरापेक्षिणीयं व्याख्या.

भेदत्तणतो नाणाभेदा; दव्वादिया से भवंति, 'दव्वतो णं' ति दव्वतो वत्तव्वो 'णं' ति वयणालंकारे देसीवयणतो वा णं, अहवा अपादाने पंचमी विभक्तिः तत्थ पायतवयणसेलीतो दव्वतो णं, एवं आभिनिबोधियनाणी लभति, 'आदेसेणं' इत्यादि, इहादेसो नाम प्रकारो, सो य सामण्णतो विसेसतो य, तत्थ दव्वजातिसामण्णादेसेणं सव्वदव्वाणि धम्मत्थिकायादियाणि जाणति, विसेसदव्वेऽवि जहा धम्मत्थिकाए धम्मत्थिकायस्स देसेत्यादि केयी जाणति सव्वे ण याणाति जहा सुहुमपरिणता अवि सतत्था उप्पण्णवणादिया, ण पस्सइ त्ति सव्वे सामण्णविसेसा दसविहे धम्मादिए चक्खुअचक्खुदंसणेण रूवसद्दाइतो केसिं पासवि त्ति वत्तव्वं, अहवाऽऽदेसो सुत्तं तस्सादेसतो सव्वदव्वे जाणतीत्यादि। चोदक आह-जति सुत्तं कहं मतिनाणं ति? उच्यते-सुतोवलद्धत्थेसु अणुसरतो तब्भावणबुद्धिसामत्थतो सुतोवयोगाणिरवेक्खाऽवि मती पवत्तइ त्ति ण सुत्तादेसो विरुज्झति। खेत्तंपि सामण्णविसेसादेसतो, तत्थ सामण्णतो खेत्तमागासं तं चेगं सव्वगतममुत्तं अवगाहलक्खणं सव्वं जाणति, विसेसतोऽवि लोगालोगुड्ढहतिरियादिविसेसे खेत्ते जाणाति, ण जाणइ य केयी, क्षेत्रं न पश्यत्येव। कालेऽवि आदेसो सामण्णविसेसतो, तत्थ सामण्णतो इमं भण्णति ण य दरिसणतो, णिच्चमणिच्चं वा मुत्तममुत्तं वा कलासमूहं सव्वदव्वाणि वा कलेइ त्ति कलणं वा कालो, तमेगविहं सामण्णतो सव्वकालं जाणाति, विसेसादेसो समयावलियादि उस्सप्पिणिमादि वा विसेसकालो केयी जाणति ण जाणति केयी कालं ण पश्यत्येव। भाव इति भवनं भूतिर्वा भावः, एवं सव्वभावे भावजातिमत्तसामण्णतो जाणति, विसेसादेसतो जीवाजीवभावे तत्थ नाणकसायादिया जीवे अजीवे वण्णपज्जवादिए अणेगहा वीससपयोगपरिणते एत्थ मतिनाणविसयत्थे जे ते जाणति सेसे ण याणाति सव्वभावे ण पासइ त्ति, मतिणाणस्स अ सव्वणेयाविसयत्तणयो। 'उग्गह ईहा' गाहा, 'अत्थाणं'

गाहा, ' उग्गह एक्कं ' गाहा, ' पुट्ठं सुणेइ ' गाहा, ' भासासम ' गाहा, ' ईहा ' गाहा, एताओ गाहाओ जहा पेढियाए तहा भाणितव्वा इति । 'से तं मतिणाणं' ति एस आदीए जा पुच्छा तस्स सव्वहा सरूवे वण्णिते । इमं परिसमत्ति दंसगं णिगमणवाक्यं से तं मतिणाणं ति, अहवा सीसो पुच्छाति--जो एस वण्णियसरूवेण ठितो णाणविसेसो सो किं वत्तव्वो ? आचार्य आह--' से ' इति निद्देसे ' तं ' ति पुव्वपन्हामारिसणे तं एतत् मतिणाणं ति स्वनामाख्यानमित्यर्थः, अहवा ' से ' ति अस्य व्यञ्जनलोपे कृते एतं मतिणाणं ति भवति एतावत् मतिज्ञानमित्यर्थः ॥ इदाणिं सव्वचरणकरणक्रियाधारं जहुद्दिट्ठं कमप्पत्तं सुतणाणं भण्णति—

वृत्तिः—'तं समासतो' इत्यादि, द्रव्यत आभिनिबोधिकज्ञानी आदेशेन आदेशः--प्रकारः, स च सामान्यतो विशेषतश्च, तत्र द्रव्यजातिसामान्यादेशेन द्रव्याणि-धर्मास्तिकायादीनि जानाति, विशेषतोऽपि यथा धर्मास्तिकायो धर्मास्तिकायस्य देश इत्यादि, न पश्यति सर्वात्मना धर्मास्तिकायादीन्, घटादीन् तु योग्यदेशावस्थितान् पश्यत्यपि, श्रुतादेशतो वा जनाति, एवं क्षेत्रादिष्वपि भावनीयं, नवरं तान्न पश्यत्येव, तथा चोक्तं भाष्यकारेण- 'आदेसो त्ति पगारो, ओहादेसेण सव्वदव्वाइं । धम्मत्थिकाइयाइं, जाणइ न उ सव्वभावेणं ॥ १ ॥ खेत्तं लोगालोगं, कालं सव्वद्धमहव तिविधोऽवि । पंचोदइयादीए, भावे जं नेयमेवतियं ॥ २ ॥ आदेसो त्ति व सुत्तं, सुतोवलद्धेसु तस्स मतिणाणं । पसरइ तब्भावणया, विणाऽवि सुत्ताणुसारेणं ॥ ३ ॥' साम्प्रतं संग्रहगाथा उच्यन्ते- तत्र 'उग्गह' गाहा, व्याख्या- अवग्रहः प्राग्निरूपितशब्दार्थः, तथा ईहा अपायश्च, चशब्दः पृथगवग्रहादिस्वरूपस्वातन्त्र्यप्रदर्शनार्थः अवग्रहादीनामीहादयः पर्याया न भवन्तीत्युक्तं भवति, समुच्चयार्थो वा,

यदा समुच्चयार्थस्तदा व्यवहितो द्रष्टव्यः धारणा च, एवकारः क्रमपरिदर्शनार्थः, एवमनेनैव क्रमेण भवन्ति चत्वारि आभिनिबोधिकज्ञानस्य भिद्यन्त इति भेदा-विकल्पा अंशा इत्यनर्थान्तरं, त एव वस्तूनि भेदवस्तूनि, कथं ? यतो नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यत इति। अथवा काक्वा नीयते- एवं भवन्ति चत्वार्याभिनिबोधिक ज्ञानस्य भेदवस्तूनि समासेन-संक्षेपेण विशिष्टावग्रहादिस्वरूपापेक्षया, न तु विस्तरत इति, विस्तरतोऽष्टाविंशतिभेदभिन्नत्वात्तस्येति गाथार्थः। इदानीमनन्तरोपन्यस्तानामवग्रहादीनां स्वरूपं प्रतिपिपादयिषयाऽऽह- 'अत्थाणं' गाहा, व्याख्या- तत्र अर्थन्ते इत्यर्थाः, अर्यन्ते गम्यन्ते परिच्छिद्यन्त इति यावत्, ते च रूपादयः, तेषामर्थानां प्रथमदर्शनानन्तरं च ग्रहणमवग्रहं ब्रुवत इति योगः। आह- वस्तुनः सामान्यविशेषात्मकतया विशिष्टत्वात् किमिति प्रथमं दर्शनं ततो ज्ञानमिति ? उच्यते- तस्य प्रबलावरणत्वात् दर्शनस्य चाल्पावरणत्वादिति। तथेत्यानन्तर्ये विचारणं पर्यालोचनमर्थानामिति वर्तते, ईहनमीहा तां ब्रुवत इति संबन्धः, विविधोऽवसायो व्यवसायः-निर्णयः तं व्यवसायं च अर्थानामिति वर्तते अपायं ब्रुवत इति, संसर्गो धृतिर्धरणम् अर्थानामिति वर्तते, परिच्छिन्नस्य वस्तुनोऽविच्युतिस्मृतिवासनारूपं तद्धरणं पुनर्धारणं ब्रुवत इति, अनेन शास्त्रपारतन्त्र्यमाह इत्थं तीर्थकरगणधरा ब्रुवते। अन्ये त्वेवं पठन्ति- 'अत्थाणं उग्गहणम्मि उग्गहो' इत्यादि, अत्राप्यर्थानामवग्रहणे सत्यवग्रहो नाम मतिविशेष इत्येवं ब्रुवते, एवमीहादिष्वपि योज्यम्, भावार्थस्तु पूर्ववदिति गाथार्थः। इदानीमभिहितस्वरूपाणामवग्रहादीनां कालप्रमाणमभिधित्सुराह-'उग्गहो'गाहा व्याख्या- इहाभिहितलक्षणोऽर्थावग्रहो यो जघन्यो नैश्चयिकः स खल्वेकं समयं भवतीति संबन्धः, तत्र कालः परमनिकृष्टः समयोऽभिधीयते, स च प्रवचनप्रतिपादितोत्पलपत्रशतव्यतिभेदोदाहरणाज्जीर्ण-

पट्टशाटिकापाटनदृष्टान्ताच्चावसेय इति । तथा सांव्यावहारिकार्थावग्रहव्यंजनावग्रहौ तु पृथक् अन्तर्मुहूर्त्तकालं भवत इति ज्ञातव्यौ, ईहा चापायश्च ईहापायौ, प्राकृतशैल्या, बहुवचनं, उक्तं च-'बहुवयणेण दुवयणं, छट्ठविभत्तीए भन्नइ चउत्थी । जह हत्था तह पाया, णमोऽत्थु देवाहिदेवाणं ॥ १ ॥' तावीहापायौ मुहूर्त्तार्द्धं ज्ञातव्यौ भवतः, तत्र मुहूर्त्तशब्देन घटिकाद्वयपरिमाणः कालोऽभिधीयते, तस्यार्धं मुहूर्त्तार्धं, तुशब्दो विशेषणार्थः, किं विशिनष्टि ? व्यवहारापेक्षयैतन्मुहूर्त्तार्धमुक्तं, तत्त्वतस्त्वन्तर्मुहूर्त्तमवसेयमिति । अन्ये त्वेवं पठन्ति-'मुहुत्तमंतं तु' मुहूर्त्तान्तस्तु द्वे पदे, अयमर्थः-अन्तर्मध्यकरणे, तुशब्द एवकारार्थः, स चावधारणे, एतदुक्तं भवति ईहापायौ मुहूर्त्तान्तः भिन्नं मुहूर्त्तं ज्ञातव्यौ भवतः अन्तर्मुहूर्त्तमेवेत्यर्थः । कलनं कालः तं कालं । न विद्यते संख्या इयन्तः पक्षमासत्वयनसंवत्सरादय इत्येवंभूता संख्या यस्यासावसंख्यः पल्योपमादिलक्षणः इत्यर्थः, तं कालमसंख्यं, तथा संख्यायते इति संख्यः इयन्तः पक्षमासत्वयनादय इत्येवं संख्याप्रमित इत्यर्थः, तं संख्यं च, चशब्दादन्तर्मुहूर्त्तं च धारणा-अभिहितलक्षणा भवति ज्ञातव्या । अयमत्र भावार्थः-अपायोत्तरकालमविच्युतिरूपान्तर्मुहूर्त्तं भवत्येव स्मृतिरूपाऽपि वासनारूपा तु तदावरणक्षयोपशमाख्या स्मृतिधारणाया बीजभूता संख्येयवर्षायुषां सत्त्वानां संख्येयकालमसंख्येयवर्षायुषां पल्योपमादिजीविनां चासंख्येयमिति गाथार्थः । इत्थमवग्रहादीनां स्वरूपमभिधायेदानीं श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयतां प्रतिपिपादयिषुराह- 'पुट्ठं सुणेइ' गाहा, व्याख्या-तत्र स्पृष्टमिति आलिंगितं तनौ रेणुवत्, शृणोति-गृह्णाति, किं ? शब्दं-शब्दद्रव्यसंघातं कुतः ? तस्य सूक्ष्मत्वात् भावुकत्वात् प्रचुरद्रव्याकुलत्वात् श्रोत्रेन्द्रियस्यान्येन्द्रियगणात्प्रायः पटुतरत्वात् । रूप्यत इति रूपं तद्रूपं पुनः पश्यति- गृह्णाति अस्पृष्टम्-अनालिंगितमसंबद्धमित्यर्थः । पुनः शब्दो विशेषणार्थः, तुशब्द-

अवग्रहादयो भेदाः अवग्रहादीनां कालमानम्

स्त्वेवकारार्थः, ततश्चायमर्थः-अस्पृष्टमेव पश्यति, पुनः शब्दादस्पृष्टमपि योग्यदेशावस्थितं नायोग्यदेशावस्थितमधोलोकादि,
कुतः ? अप्राप्तकारित्वात् परिमितदेशस्थविषयग्राहित्वाच्चक्षुष इति। घ्रायत इति गंधस्तं, रस्यत इति रसस्तं च, स्पृश्यत इति
स्पर्शस्तं च, चशब्दौ पूरणसमुच्चयार्थौ, बद्धस्पृष्टमिति बद्धमाश्लिष्टं तोयवदात्मप्रदेशैरात्मीकृतमित्यर्थः, स्पृष्टं पूर्ववत्, प्राकृत·
शैल्या चेत्थमुपन्यासो 'बद्धपुट्ठं'ति, अर्थतस्तु स्पृष्टं च बद्धं च स्पृष्टबद्धमिति विज्ञेयम् आलिंगितानन्तरमात्मप्रदेशैरागृहीत-
मित्यर्थः, गन्धादेः स्तोकद्रव्यत्वादभावुकत्वात् घ्राणादीनां चापटुत्वात् विनिश्चिनोतीत्येव व्यागृणीयादिति गाथार्थः। इह
स्पृष्टं शृणोति शब्दमित्युक्तं, तत्र किं शब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि गृह्णाति उतान्यानि तद्भावितानि आहो-
स्विन्मिश्राणीति चोदकाभिप्रायमाशंक्य न तावत् केवलानि, तेषां वासकत्वात्तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, किंतु मिश्राणि
तद्वासितानि वा गृह्णातीति, अमुमर्थमभिधित्सुराह- 'भासा' गाहा, भाष्यत इति भाषा वक्त्रा शब्दतयोत्सृज्यमाना द्रव्य-
संहतिरित्यर्थः तस्याः समश्रेणयो भाषासमश्रेणयः, समग्रहणं विश्रेणिव्यवच्छेदार्थम्, इह श्रेणयः क्षेत्रप्रदेशश्रेणयोऽभिधीयन्ते,
ताश्च सर्वस्यैव भाषमाणस्य षट्सु दिक्षु विद्यन्ते, यासु उत्सृष्टा सती भाषाऽऽद्यसमये एव लोकान्तमनुधावतीति, ताः इतः
भाषासमश्रेणीतः, इतो गतः प्राप्तः स्थित इत्यनर्थान्तरम्, एतदुक्तं भवति- भाषासमश्रेणिव्यवस्थित इति, शब्द्यतेऽनेनेति
शब्दः- भाषात्वेन परिणतः पुद्गलराशिः, तं शब्दं यं पुरुषाश्वादिसंबन्धिनं शृणोति गृह्णाति उपलभत इति पर्यायाः, यत्तदो-
र्नित्यसंबन्धात्तं मिश्रं शृणोति, एतदुक्तं भवति- उत्सृष्टद्रव्यभावितापान्तरालस्थशब्दद्रव्यमिश्रमिति विश्रेणिं पुनः इत इति
वर्तते, ततश्चायमर्थो भवति- विश्रेणिव्यवस्थितः पुनः श्रोता शब्दं शृणोति नियमेन पराघाते सति, यानि शब्दद्रव्याणि

उत्सृष्टद्रव्याभिघाते वासितानि तान्येव, न पुनरुत्सृष्टानीति भावार्थः, कुतः ? तेषामनुश्रेणिगमनात्प्रतिघाताभावाच्च, अथवा विश्रेणिस्थित एव विश्रेणिरभिधीयते, पदेऽपि पदावयवप्रयोगदर्शनात् भीमसेनः सेनः सत्यभामा भामेति यथा इति गाथार्थः । साम्प्रतं विनेयगणसुखप्रतिपत्तये मतिज्ञानपर्यायशब्दानभिधित्सुराह-'ईहा' गाहा, व्याख्या- ईहनमीहा-सदर्थपर्यालोचनचेष्टेत्यर्थः, अपोहनमपोहो निश्चय इत्यर्थः. विमर्षणं विमर्षः ईहापायमध्यवर्त्ती प्रत्ययः, तथाऽन्वयधर्मान्वेषणा मार्गणा, चः समुच्चयार्थः, व्यतिरेकधर्मालोचना गवेषणा, तथा संज्ञानं संज्ञा व्यञ्जनावग्रहोत्तरकालभावी मतिविशेष इत्यर्थः, स्मरणं स्मृतिः पूर्वानुभूतार्थालम्बनप्रत्ययः, मननं मतिः कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मालोचनरूपा बुद्धिरित्यर्थः, तथा प्रज्ञानं प्रज्ञा विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथावस्थितधर्मालोचनरूपा संविदिति भावना, सर्वमिदमाभिनिबोधिकं मतिज्ञानमित्यर्थः । एवं किञ्चिद्भेदाद्भेदः प्रदर्शितः, तत्वतस्तु मतिवाचकाः सर्वे एते पर्यायशब्दा इति गाथार्थः, । 'से तं' इत्यादि, तदेतदाभिनिबोधिकज्ञानमिति ॥ साम्प्रतं प्रागुपन्यस्तसकलचरणकरणक्रियाधारश्रुतज्ञानस्वरूपजिज्ञासयाऽऽह—

आप्याप्राप्यकारिता भाषाश्रुतिः मतिपर्यायाः श्रुतभेदाः

**से किं तं सुयनाणपरोक्खं ? सुयनाणपरोक्खं चोद्दसविहं पन्नत्तं, तं जहा--अक्खरसुयं १ अणक्खरसुयं २ सण्णिसुयं ३ असण्णिसुअं ४ सम्मसुअं ५ मिच्छसुअं ६ साइअं ७ अणाइअं ८ सपज्जवसिअं ९ अपज्जवसिअं १० गमिअं ११ अगमिअं १२ अंगपविट्ठं १३ अणंगपविट्ठं १४ (सू० ३७)**

चूर्णिः—'से किं तं सुतनाण' इत्यादि, तं च सुतावरणखयोवसमत्तणतो एगविहं पि तं अक्खरादिभावे पडुच्च जाव

अंगवाहिरं ति चोद्दसविधं भण्णाति, तत्थ अक्खरं तिविहं--नाणक्खरं अभिलावक्खरं वण्णक्खरं च तत्थ नाणक्खरं 'क्षर संचरणे' न क्षरतीत्यक्षरं न प्रच्यवतेऽनुपयोगेऽपीत्यर्थः अभिलावत्तणतो, तं च णाणं अविसेसतो चेतनेत्यर्थः, आह--एवं सव्वमविसेसतो णाणमक्खरं कम्हा सुतं अक्खरमिति भण्णाति ? उच्यते--रूढिविसेसतो अभिलाववण्णा अक्खरं भणिता पंकजवत्, एवं ताव अभिलावहेतुत्तणतो सुतविण्णाणस्स अक्खरता भणिता, इदाणीं वण्णक्खरं वण्णिज्जति--अण्णेणाभिहितो अत्थो इति वण्णे स चार्थस्य कुड्ये चित्रवर्णकवत्, अहवा द्रव्ये गुणविशेषवर्णकवत् वर्ण्यते-अभिलप्यते तेन वर्णाक्षरम्, एत्थ सुत्तं--

वृत्तिः—'से किं तं' इत्यादि, अथ किं तच्छुतज्ञानं ? श्रुतज्ञानमुपाधिभेदाच्चतुर्दशविधं प्रज्ञप्तं, तद्यथा--अक्षरश्रुतम् १ अनक्षरश्रुतम् २ संज्ञिश्रुतम् ३ असंज्ञिश्रुतम् ४ सम्यक्श्रुतम् ५ मिथ्याश्रुतम् ६ सादि ७ अनादि ८ सपर्यवसितम् ९ अपर्यवसितम् १० गमिकम् ११ अगमिकम् १२ अङ्गप्रविष्टम् १३ अनङ्गप्रविष्टम् १४ । एतेषां च भेदानां स्वरूपं यथावसरं वक्ष्यामः। अक्षरश्रुतानक्षरश्रुतभेदद्वयान्तर्भावेऽपि शेषभेदानामुपन्यासोऽज्ञातज्ञापनार्थः, न च भेदद्वयादेवाव्युत्पन्नमतीनां शेषभेदावगम इति प्रतीतमेतत्, अलं विस्तरेण ॥ साम्प्रतमुपन्यस्तश्रुतभेदानां स्वरूपमनवगच्छन्नाद्यं भेदमाधिकृत्य प्रश्नसूत्रमाह–

**से किं तं अक्खरसुअं ? अक्खरसुअं तिविहं पन्नत्तं, तं जहा--सन्नक्खरं वंजणक्खरं लद्धिअक्खरं । से किं तं सन्नक्खरं ? सन्नक्खरं अक्खरस्स संठाणागिई, से तं सन्नक्खरं। से किं तं वंजणक्खरं ? वंजणक्खरं अक्खरस्स वंजणाभिलावो, से तं वंजणक्खरं । से किं तं लद्धिअक्खरं ?**

लद्धिअक्खरं अक्खरलद्धियस्स लद्धिअक्खरं समुप्पज्जइ, तं जहा--सोइंदिअलद्धिअक्खरं चक्खिंदियलद्धिअक्खरं घाणिंदियलद्धिअक्खरं रसणिंदियलद्धिअक्खरं फासिंदियलद्धिअक्खरं नोइंदियलद्धिअक्खरं, से तं लद्धिअक्खरं। से तं अक्खरसुयं। से किं तं अणक्खरसुअं? अणक्खरसुअं अणेगविहं पण्णत्तं, तं जहा--ऊससियं नीससियं, निच्छूढं खासियं च छीअं च। निस्सिंघियमणुसारं, अणक्खरं छेलिआईअं ॥१॥ से तं अणक्खरसुअं (सू० ३८)

चूर्णिः—'से किं तं अक्खरसुतं' इत्यादि, अक्खरसद्दं सुणतो भासतो वा अक्खरसुतं तत्थक्खरलंभो अभिलावो वा दव्वसुतं, खयोवसमलद्धी भावसुतं, तच्च वर्णाक्षरं त्रिविधं सण्णक्खरादि, तत्थ सण्णक्खरं अक्खरागारविसेसो, सो य ब्रह्मादिलिविविधाणो अणेगविधो आगारो, तेसु आगारेसु जम्हा अकारे अकारसण्णा एव भवति, एवं सेसेसु वि, तम्हा ते सण्णक्खरा भणिता, जहा वट्टं पडागारं दट्ठुं ठकारसण्णा उप्पज्जतीत्यर्थः। व्यक्तीकरणं वंजणं, व्यज्यतेऽनेनार्थ इति वा व्यञ्जनं यथा प्रदीपेन घटः, व्यञ्जनं च तदक्षरं चेति व्यञ्जनाक्षरं, तच्चेह सर्वमेव भाष्यमाणमकारादिहकारान्तमर्थाभिव्यञ्जकत्वाच्छब्दस्य तमेवं अक्खरं अर्थाभिव्यञ्जकं वंजणक्खरं भवति जहा घटः पटः इत्यादि, लद्धिक्खरं ति अक्खरलद्धी जस्सत्थि तस्स इंदियमणोभयविण्णाणतो इह जो अक्खरलाभो उप्पज्जति तं लद्धिअक्खरं, तं च पंचविहं सोइंदियादि जहा सोइंदियलद्धिओ सद्दं सोतुं संख इति अक्खरदुयलाभो भवति, एवं सव्वं लद्धिअक्खरं भाणितव्वं, इह सण्णवंजणक्खरे दोऽवि दव्वसुतं संगहितं,

सुतविण्णाणकारणत्तातो, लद्धिक्खरं तु भावसुतं, लद्धीए विण्णाणमयत्तणतो भयणा वा। इदाणिं अणक्खरसुतं-अणक्खरसद्दसवणता कारणतो वा अणक्खरसुतं भवति, तं च अणेगविहं इमं–'ऊससितं' गाहा पूर्ववत् कंठा ॥ इदाणिं सण्णिमसण्णिसुतं–

वृत्तिः—'से किं तं' इत्यादि, अथ किं तदक्षरश्रुतं ? 'क्षर संचलने' न क्षरतीत्यक्षरं तच्च ज्ञानं चेतनेत्यर्थः जीवस्वाभाव्यादनुपयोगेऽपि तत्वतो न प्रच्यवत इत्यर्थः, इत्थंभूतभावाक्षरकार्यकारणत्वादकाराद्यप्यक्षरमुच्यते, तत्राक्षरात्मकं श्रुतमक्षरश्रुतं द्रव्याक्षराण्यधिकृत्य, अथवा अक्षरं च तच्छ्रुतं चाक्षरश्रुतं, भावाक्षरमधिकृत्येदमक्षरश्रुतं त्रिविधं प्रज्ञप्तम्, अक्षरस्यैव त्रिभेदत्वात्, त्रिभेदतामेव दर्शयन्नाह-संज्ञाक्षरं व्यञ्जनाक्षरं लब्ध्यक्षरं। 'से किं तं' इत्यादि, अथ किं तत् संज्ञाक्षरं ? संज्ञानं संज्ञा, संज्ञायते वाऽनयेति संज्ञा, तन्निबन्धनमक्षरं संज्ञाक्षरम्, इदं चाक्षरस्याकारादेः संस्थानस्य आकृतिः संस्थानाकारः, यतः तन्निबन्धनैवैतेष्वकारादिसंज्ञा प्रवर्तत इत्येतच्च ब्राह्म्यादिलिपीविधानादनेकविधं, 'से तं सन्नक्खरं' तदेतत्संज्ञाक्षरं। 'से किं तं' इत्यादि, अथ किं तद्व्यञ्जनाक्षरं? व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, व्यञ्जनं च तदक्षरं च व्यञ्जनाक्षरं, तच्चेह सर्वमेव भाष्यमाणमकारादिहकारान्तम् अर्थाभिव्यञ्जकत्वाच्छब्दस्य, तथा चाह सूत्रकारः–अक्षरस्याकारादेर्व्यञ्जनाभिलापः शब्दोच्चारणं। 'से तं' इत्यादि, तदेतद्व्यञ्जनाक्षरम्। 'से किं तं' इत्यादि, अथ किं तल्लब्ध्यक्षरं ? लब्धिः–क्षयोपशम उपयोग इत्यर्थः, 'अक्खरलद्धियस्स' इत्यादि, इहाक्षरे लब्धिर्यस्य सोऽक्षरलब्धिकस्तस्य इन्द्रियमनउभयविज्ञानसमुत्थघटाद्यक्षरलब्धिसमन्वितस्येत्यर्थः, अनेन विकलेन्द्रियादिव्यवच्छेदमाह–लब्ध्यक्षरं समुत्पद्यते कुतश्चिच्छब्दादेर्निमित्तात्संजातं तदावरणकर्मक्षयोपशमस्य लब्ध्यक्षरं समुत्पद्यते अक्षरोपलम्भः संजायते, एतदुक्तं भवति–शब्दादिग्रहणसमनन्तर-

मिन्द्रियमनोनिमित्तं श्रुतग्रन्थानुसारि शाङ्ख इत्याद्यक्षरानुषक्तं विज्ञानमुत्पद्यते, तच्चानेकप्रकारं, तद्यथा--श्रोत्रेन्द्रियलब्ध्यक्षरम्' इत्यादि, इह श्रोत्रेन्द्रियेण शब्दश्रवणे सति शाङ्खोऽयमित्याद्यक्षरद्वयलाभः श्रोत्रेन्द्रियनिमित्तत्वाच्छ्रोत्रेन्द्रियलब्ध्यक्षरमिति एवं शेषेष्वपि भावनीयम् । 'से तं' इत्यादि, तदेतल्लब्ध्यक्षरम् 'से तं' इत्यादि, तदेतदक्षरात्मकम् अक्षरं च तादिति वा श्रुतं चाक्षरश्रुतं । तत्र संज्ञाव्यञ्जनाक्षरे द्रव्यश्रुतं, लब्ध्यक्षरं पुनर्भावश्रुतं, लब्धेर्विज्ञानरूपत्वात् । 'से किं तं' इत्यादि, अथ किं तदनक्षरश्रुतम् ? अनक्षरशब्दकारणकार्यमनक्षरश्रुतम् अनेकविधम्--अनेकप्रकारं प्रज्ञप्तम्, तद्यथा--'ऊसासियं' गाहा, उच्छ्वसनमुच्छ्वसितं, भावे निष्ठाप्रत्ययः, तथा निःश्वसनं निःश्वसितं, निष्ठीवनं निष्ठ्यूतं, कासनं कासितं, चशब्दः समुच्चयार्थः, क्षवणं क्षुतं, चशब्दः समुच्चयार्थ एव, अस्य व्यवहितसम्बन्धः, कथं ? सेंटितं चानक्षरं श्रुतमिति वक्ष्यामः, निःसंघनं निःसंघितम्, अनुस्वारवदनुस्वारम् अक्षरमपि यदनुस्वारवदुच्चार्यते, अनक्षरमिति एतदुच्छ्वसिताद्यनक्षरश्रुतमिति, सेंटनं सेंटितं तच्छेंटितं चानक्षरश्रुतमिति । इदं चोच्छ्वसितादि द्रव्यश्रुतमात्रं ध्वनिमात्रत्वात्, अथवा श्रुतविज्ञानोपयुक्तस्य जन्तोः सर्व एव व्यापारः श्रुतं तस्य तद्भावेन परिणतत्वात् । आह--यद्येवं किमित्युपयुक्तस्य चेष्टाऽपि श्रुतं नोच्यते ? येनोच्छ्वसिताद्येवोच्यत इति ? अत्रोच्यते--रूढ्या, अथवा श्रूयत इति श्रुतम् अन्वर्थसंज्ञामधिकृत्योच्छ्वसिताद्येव श्रुतमुच्यते, न चेष्टा, तदभावादिति, अनुस्वारादयस्त्वर्थगमकत्वादेव श्रुतामिति । 'से तं' इत्यादि, तदेतदनक्षरश्रुतम् ॥

से किं तं सण्णिसुअं ? सण्णिसुअं तिविहं पण्णत्तं, तं जहा--कालिओवएसेणं हेऊवएसेणं

दिट्ठिवाओवएसेणं । से किं तं कालिओवएसेणं ? कालिओवएसेणं जस्स णं अत्थि ईहा अवोहो मग्गणा गवेसणा चिंता वीमंसा से णं सण्णीति लब्भइ, जस्स णं णत्थि ईहा अवोहो मग्गणा गवेसणा चिंता वीमंसा से णं असन्नीति लब्भइ । से तं कालिओवएसेणं । से किं तं हेऊवएसेणं ? जस्स णं अत्थि अभिसंधारणपुव्विआ करणसत्ती से णं सण्णीति लब्भइ, जस्स णं नत्थि अभिसंधारणपुव्विआ करणसत्ती से णं असण्णीति लब्भइ । से तं हेऊवएसेणं। से किं तं दिट्ठिवाओवएसेणं? दिट्ठिवाओवएसेणं सण्णिसुअस्स खओवसमेणं सण्णी लब्भइ, असण्णिसुअस्स खओवसमेणं असण्णी लब्भइ । से तं दिट्ठिवाओवएसेणं । से तं सण्णिसुअं, से तं असण्णिसुअं । ( सू० ३८ )

चूर्णिः— 'से किं तं सण्णिसुतं' इत्यादि, सण्णिस्स सुतं सण्णिसुतं, असण्णिस्स सुतं असण्णिसुतं । तत्र संज्ञाऽस्यास्तीति संज्ञी । सो य सण्णी तिविहो कालिओवदेसेणेत्यादि । चोदक आह-जइ सण्णासंबंधयो सण्णी तो सव्वे जीवा सण्णी, जतो एगिंदियाण वि दस आहारादिसण्णातो पढिज्जंति, आचार्य आह--इहोहसण्णा थोवत्तणतो णाधिक्रियते, जहा णो करिसावणेण धणवं भवइ त्ति, सेसा आहारादिसण्णादितोवि भूयिष्ठतराऽवि णाधिक्रियंते अणिट्ठत्तणतो, जह वा हुंडसंठितो ण मुत्तित्तणतो रूववं भण्णति, एते अधिकतसण्णाए अणुवणयदिट्ठंता, इमे उवणयदिट्ठंता जहा बहुधणो धणवं पसत्थणिव्वत्ति-

सन् किं शङ्खः किं वा शार्ङ्ग इति, तथा गवेषणा--व्यतिरेकधर्मस्वरूपालोचना यथा खरादय एवंभूता इति, तथा चिन्ता--
अन्वयधर्मपरिज्ञानाभिमुखचेष्टा यथा मधुरत्वादयस्त्वेवंभूता इति, तथा विमर्षः--त्याज्यधर्मपरित्यागेनोपादेयधर्मग्रहणाभिमुखो
यथा न शार्ङ्गः, प्रायोऽयं मधुरत्वादियोगाच्छाङ्ख इति, ' से णं सण्णीति लब्भति ' त्ति स--प्राणी ' णं ' इति वाक्यालङ्कारे
संज्ञीति लभ्यते मनःपर्याप्त्या पर्याप्तोऽवग्रहादिमतिज्ञानसंपत्समन्वित इत्यर्थः। अथवा यस्यास्ति ईहा--किमेतदिति चेष्टा,
इदमित्यवगमोऽपोहः, अवगतार्थाभिलाषे तत्प्रार्थना मार्गणा, तदप्राप्तौ च निपुणोपायतोऽन्वेषणं गवेषणा, प्रयुक्तप्रतिहतोपाय-
स्योपायान्तरचिन्तनं चिन्ता, तद्विषय एवोपायालोचनात्मकः प्रत्ययो विमर्षः, स संज्ञीति लभ्यते, अयं च गर्भव्युत्क्रान्तिकः
पुरुषादिरौपपातिकश्च देवादिरेव मनःपर्याप्तिप्रयुक्तो विज्ञेयः यथोक्तविशेषणकलापसमन्वितत्वात्, न पुनरन्यस्तद्विशेषणविकल
इति, आह च-' जस्स ' इत्यादि यस्य नास्ति ईहाऽपोहो मार्गणा गवेषणा चिन्ता विमर्षः सोऽसंज्ञीति लभ्यते, अयं च
संमूर्छिमपञ्चेन्द्रियविकलेन्द्रियादिर्ज्ञेयः, अल्पमनोलब्धित्वादभावाच्च। ' से त ' मित्यादि सोऽयं कालिक्युपदेशेन। ' से
किं तं ' इत्यादि, अथ कोऽयं हेतूपदेशेन ? हेतुः कारणम्, उपदेशनमुपदेशः, हेतोरूपदेशो हेतूपदेशस्तेन कारणोपदेशेनेत्यर्थः,
यस्य--प्राणिनः अस्ति--विद्यते अभिसंधारणम्--अव्यक्तेन विज्ञानेनालोचनं तत्पूर्विका--तत्कारणिका करणशक्तिः--क्रियाशक्तिः,
करणं क्रिया, शक्तिः सामर्थ्यम्, अव्यक्तविज्ञानालोचननिबन्धनचेष्टासामर्थ्यमिति भावना, स प्राणी ' णं ' इति वाक्या-
लंकारे संज्ञीति लभ्यते, अयं च द्वीन्द्रियादिः संमूर्छिमपञ्चेन्द्रियावसानो विज्ञेयः, तथाहि--कृम्यादयोऽपीष्टेष्वाहारादिषु
प्रवर्तन्तेऽनिष्टेभ्यश्च निवर्तन्ते, स्वदेहपरिपालनार्थं प्रायो वर्तमान एव, न चासंचिन्त्येष्टानिष्टविषयप्रवृत्तिनिवृत्तिसम्भव इति

संज्ञी, उक्तलक्षणविकलस्त्वसंज्ञी, तथा चाह--'जस्स' इत्यादि यस्य नास्ति अभिसंधारणपूर्विका करणशक्तिः सोऽसंज्ञीति लभ्यते, अयं चैकेन्द्रियः पृथिव्यादिरवसेयः, मनोलब्धिरहितत्वात्, आह--यदि स्वल्पसंज्ञायोगाद्विकलेन्द्रियादयः संज्ञिन इष्यन्ते,(तर्हि) पृथिव्यादयः किं नेष्यन्ते? यतस्तेषामपि दशविधा संज्ञा विद्यन्त एव, तथा चोक्तम् परमगुरुभिः-"कति णं भंते! एगिंदियाणं सन्नाओ पन्नत्ताओ? गोयमा ! दस, तं जहा--आहारसन्ना भयसन्ना मेहुणसन्ना परिग्गहसन्ना कोहसन्ना माणसन्ना मायासन्ना लोभसन्ना ओहसन्ना लोगसन्ना य" त्ति । उपयोगमात्रमोघसंज्ञा, लोकसंज्ञा स्वच्छंदविकल्पिता विश्वगमा लोकिकैराचरिता, तद्यथा- 'अनपत्यस्य न सन्ति लोका' इत्यादि । अन्ये तु व्याचक्षते- ओघसंज्ञा दर्शनोपयोगः, लोकसंज्ञा ज्ञानोपयोगः इति । अत्रोच्यते- इहौघसंज्ञा स्तोकत्वादाहारादिसंज्ञाश्चानिष्टत्वान्नाधिक्रियन्ते यथा न कार्षापणमात्रेण धनवानभिधीयते मूर्त्तिमात्रेण वा रूपवानिति, किंतु यथा प्रभूतरत्नादिसमन्वितो धनवान् प्रशस्तमूर्त्तियुक्तश्च रूपवानभिधीयते, एवं महती शोभना च संज्ञा यस्यास्त्यसौ संज्ञीति विशिष्टतरा च विकलेन्द्रियसंज्ञेत्यलं विस्तरेण, 'से तं' इत्यादि, सोऽयं हेतूपदेशेन । 'से किं तं' इत्यादि, अथ कोऽयं दृष्टिवादोपदेशेन? दृष्टिर्दर्शनं, वदनं वादः, दृष्टीनां वादो दृष्टिवादः,तदुपदेशेन-तन्मतापेक्षया संज्ञिश्रुतस्य क्षयोपशमेन संज्ञीति लभ्यते, अयमत्र भावार्थः- संज्ञानं संज्ञा तद्योगात् संज्ञी तस्य श्रुतं संज्ञिश्रुतम्, इदं सम्यक्श्रुतमेव, अन्यथा संज्ञानाभावात् न हि मिथ्यादृष्टेः संज्ञानमस्ति हिताहितप्रवृत्तिनिवृत्त्यभावाद्रागादिप्रवृत्तेः, उक्तं च- 'तज्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः । तमसः कुतोऽस्ति शक्तिः, दिनकरकिरणाग्रतः स्थातुम् ॥ १ ॥' सम्यग्दृष्टिस्तु तन्निग्रहपरत्वाद्वीतरागसम एव, उक्तं च- 'कलुसफलेण ण जुज्जइ, किं चित्तं तत्थ जं विगतराओ । संतेऽवि

यमनोनिमित्तं श्रुतग्रन्थानुसारि शाङ्ख इत्याद्यक्षरानुपक्तं विज्ञानमुत्पद्यते, तच्चानेकप्रकारं, तद्यथा--श्रोत्रेन्द्रियलब्ध्यक्षरम्' इत्यादि, इह श्रोत्रेन्द्रियेण शब्दश्रवणे सति शाङ्खोऽयमित्याद्यक्षरद्वयलाभः श्रोत्रेन्द्रियनिमित्तत्वाच्छ्रोत्रेन्द्रियलब्ध्यक्षरमिति एवं शेषेष्वपि भावनीयम् । 'से तं' इत्यादि, तदेतल्लब्ध्यक्षरम् 'से तं' इत्यादि, तदेतदक्षरात्मकम् अक्षरं च तदिति वा श्रुतं चाक्षरश्रुतं । तत्र संज्ञाव्यञ्जनाक्षरे द्रव्यश्रुतं, लब्ध्यक्षरं पुनर्भावश्रुतं, लब्धेर्विज्ञानरूपत्वात् । 'से किं तं' इत्यादि, अथ किं तदनक्षरश्रुतम् ? अनक्षरशब्दकारणकार्यमनक्षरश्रुतम् अनेकविधम्--अनेकप्रकारं प्रज्ञप्तम्, तद्यथा--'ऊससियं' गाहा, उच्छ्वसनमुच्छ्वसितं, भावे निष्ठाप्रत्ययः, तथा निःश्वसनं निःश्वसितं, निष्ठीवनं निष्ठ्यूतं, कासनं कासितं, चशब्दः समुच्चयार्थः, क्षवणं क्षुतं, चशब्दः समुच्चयार्थ एव, अस्य व्यवहितसम्बन्धः, कथं ? सेंटितं चानक्षरं श्रुतमिति वक्ष्यामः, निःसंघनं निःसंघितम्, अनुस्वारवदनुस्वारम् अक्षरमपि यदनुस्वारवदुच्चार्यते, अनक्षरमिति एतदुच्छ्वसिताद्यनक्षरश्रुतमिति, सेंटनं सेंटितं तच्छेंटितं चानक्षरश्रुतमिति । इदं चोच्छ्वसितादि द्रव्यश्रुतमात्रं ध्वनिमात्रत्वात्, अथवा श्रुतविज्ञानोपयुक्तस्य जन्तोः सर्व एव व्यापारः श्रुतं तस्य तद्भावेन परिणतत्वात् । आह--यद्येवं किमित्युपयुक्तस्य चेष्टाऽपि श्रुतं नोच्यते ? येनोच्छ्वसिताद्येवोच्यत इति ? अत्रोच्यते--रूढ्या, अथवा श्रूयत इति श्रुतम् अन्वर्थसंज्ञामधिकृत्योच्छ्वसिताद्येव श्रुतमुच्यते, न चेष्टा, तदभावादिति, अनुस्वारादयस्त्वर्थगमकत्वादेव श्रुतमिति । 'से तं' इत्यादि, तदेतदनक्षरश्रुतम् ॥

से किं तं सण्णिसुअं ? सण्णिसुअं तिविहं पण्णत्तं, तं जहा--कालिओवएसेणं हेऊवएसेणं

॥ ७२ ॥

दिट्ठिवाओवएसेणं । से किं तं कालिओवएसेणं ? कालिओवएसेणं जस्स णं अत्थि ईहा अवोहो मग्गणा गवेसणा चिंता वीमंसा से णं सण्णीति लब्भइ, जस्स णं णत्थि ईहा अवोहो मग्गणा गवेसणा चिंता वीमंसा से णं असन्नीति लब्भइ । से तं कालिओवएसेणं । से किं तं हेऊवएसेणं ? जस्स णं अत्थि अभिसंधारणपुव्विआ करणसत्ती से णं सण्णीति लब्भइ, जस्स णं नत्थि अभिसंधारणपुव्विआ करणसत्ती से णं असण्णीति लब्भइ । से तं हेऊवएसेणं। से किं तं दिट्ठिवाओवएसेणं ? दिट्ठिवाओवएसेणं सण्णिसुअस्स खओवसमेणं सण्णी लब्भइ, असण्णिसुअस्स खओवसमेणं असण्णी लब्भइ । से तं दिट्ठिवाओवएसेणं । से तं सण्णिसुअं, से तं असण्णिसुअं । ( सू० ३८ )

चूर्णिः— ' से किं तं सण्णिसुतं ' इत्यादि, सण्णिस्स सुतं सण्णिसुतं, असण्णिस्स सुतं असण्णिसुतं । तत्र संज्ञाऽस्यास्तीति संज्ञी । सो य सण्णी तिविहो कालिओवदेसेणेत्यादि । चोदक आह-जइ सण्णासंबंधयो सण्णी तो सव्वे जीवा सण्णी, जतो एगिंदियाण वि दस आहारादिसण्णातो पढिज्जंति, आचार्य आह-इहोहसण्णा थोवत्तणतो णाधिक्रियते, जहा णो करिसावणेण धणवं भवइ त्ति, सेसा आहारादिसण्णादितोवि भूयिष्ठतराऽवि णाधिक्रियंते अणिट्ठत्तणतो, जह वा हुंडसंठितो ण सुत्तित्तणतो रूववं भण्णति, एते अधिकतसण्णाए अणुवणयदिट्ठंता, इमे उवणयदिट्ठंता जहा बहुधणो धणवं पसत्थणिव्वत्ति-

यदेहमुत्तिणतो य रूववं भण्णति, तधेह महती सुभा य संज्ञाऽधिक्रियते, सा य संज्ञानं संज्ञा–मनोविज्ञानं तत्संबन्धात् सन्नीत्यर्थः, उक्तः प्रसङ्गः, प्रकृतमुच्यते--कालितोवदेसेणं ति इहादिपदलोवो दट्ठव्वो, तस्सुच्चरणा दीहकालितोवदेसेणं ति वत्तव्वं, दीहमायतं कालितो त्ति विसेसणं, कस्स ? उच्यते–उवदेसस्स जहा जिणभवणे मुहुत्तकालितो दीहकालितो वा पुयामंडवो कतो तहा दीहकालितोवदेसेणं ति भाणितव्वो उवदेसणमुवदेसो उवदेसो त्ति वा आदेसो त्ति वा पण्णवण त्ति वा परूवण त्ति वा एगट्ठा, दीहकालिओ उवदेसो दीहकालिउवदेसो, तेण दीहकालितोवदेसेणं जस्स सण्णा भण्णति सो आदिपदलोवातो कालिओवदेसेणं सण्णीत्यर्थः, अहवा कालियं आयारादिसुत्तं, तदुवदेसेणं सण्णी भण्णति, सो य इयेरिसो जो य अतीतकाले सुदीहेऽवि इदं तदिति कृतमणुभूतं वा सुमरति, वट्टमाणे य इंदियणोइंदियएण वा अण्णतरं सद्दाइअत्थमुवलद्धं अण्णयवइरेगधम्मेहिं ईहते त्ति ईहा, तस्सेव परधर्मपरिच्चागे सधम्माणुगतावधारणे य अवोहोत्ति अवातो, विसेसधम्मण्णेसणा मग्गणा, जहा मधुरगंभीरत्तणतो एस संखसद्द इति, वीससप्पयोगुब्भवणिच्चमणिच्चेत्यादि गवेसणा, जो यऽणागते य चिंतयति कहं वा तं तत्थ कातव्वमिति अण्णोण्णालंवणाणुगतं चित्तं चिंता, आत्तपर इह परत्त य हिताहितविमरिसो वीमंसा, अहवा किमेयं ति ईहा, णिच्छयावधारितो अत्थो अवोधो, अभिलसियत्थस्स मणोवयणकाएहिं जायणा मग्गणा, अभिलसितत्थे चेव अपडुप्पन्नमाणे गवेसणा, अणेगहा संकप्पकरणं चिंता, द्वन्द्वमर्थेषु वीमंसा, जहा णिच्चमणिच्चं हितमाहितं थूरं कृशं थोवं बहू इत्यादि, अहवा संकप्पतो चेव विविधा आमरिसणा वीमंसा, अहवा अवोहो त्ति अवातो, सेसा ईहा एगट्ठिया, जस्सेवं अण्णयरविकप्पेण मणोदव्वमणुगतं चित्तं वा वत्तत्ति एस कालिओवदेसेण सण्णि त्ति, सो य अणंते मणोजोगे खंधे

घेत्तुं मणेति एस लद्धिसंपण्णे मणविण्णाणावरणखयोवसमहेतुत्तणत्तो य जहा चक्कुमतो पदीवादिप्पगासेण फुडा रूवोवलद्धी भवति तहा मणखयोवसमलाद्धिमतो मणोदव्वप्पगासेण मणोछट्ठेहिं इंदिएहिं फुडमत्थं उवलभतीत्यर्थः, कालितोवदेससण्णी, विवक्खे असण्णी जहेह अविसुद्धचक्खुमतो मंदमंदप्पगासे रूवोवलद्धी असुद्धा, एवं संमुच्छिमपंचेंदियअसण्णिस्स उक्कोसखयोवसमेऽवि अप्पमणोदव्वग्गहणसामत्थे मंदपरिणामत्तणतो य असण्णिणो अविसुद्धमप्पा य अर्थोपलब्धिरित्यर्थः, ततोऽवि अविसुद्धा चतुरिंदियाणं, ततो तेइंदियाणं, ततोऽवि अविसुद्धा बेइंदियाणं अत्थुवलद्धी, जस्स य जइ इंदिया स तहा तेसु अवग्गहादिसु पवत्तते, विग्गलिंदियाण वि आदेसंतरतो मणोदव्वग्गहणं असुद्धमप्पत्तणतो य भाणितव्वं, सो य मणो तेसिं अमणो चेव दट्ठव्वो, असुद्धत्तणतो असीलवत् अज्ञानवद्वा, तयो बेइंदिएहिंतोऽवि समीवातो अव्वत्ततरं विण्णाणं एगिंदियाण जहा भत्तमुच्छियविसभावितस्स य तहा एगिंदियाण सव्वधा मणाभावे विण्णाणं सव्वजहण्णं कालितोवदेससण्णिणो, एते संमुच्छिमादयो सव्वे असण्णीणो भवन्तीत्यर्थः। इदाणिं 'हेतुवाओवदेसेणं' ति हेतुः कारणं निमित्तमित्यनर्थान्तरम्, उवदेसेणं ति पूर्ववत्, हेतुतो सण्णी भवति त्ति जेण तेण सो हेतुउवदेसेण सण्णी भवति, जस्स त्ति जीवस्स, णं वाक्यालंकारे, देसीवयणउ वा आत्मस्वरूपप्रदर्शनवचनोपन्यासे वा अव्यक्तेन विज्ञानेन अभिसंधार्य पूर्वं ततः विज्ञानस्यैव करणशक्तिः करणं–क्रिया शक्तिः–सामर्थ्यम्., अथवा करण एव शक्तिः करणशक्तिः, तच्चाभिसंधारणं संचिन्त्य संचिन्त्य इट्ठेसु विसयवत्थुसु आहारादिसु प्रवर्तन्ते, अणिट्ठेसु य णियत्तंते, एवं सदेहपरिपालणहेतो पवत्त ति, ते य पायं पडुप्पण्णकाले ण तीताणागतकालावलंबिणो भवंति, उस्सण्णमेवं, केचित्तु तीताणागतकालावलंबिणो वि भवंति, ते पुण ण दीहकालाणुसारिणो, किं च तेसु वि

आगतो सुहुमो संताणचोदको अविस्सरणहेतु दट्ठव्वो, एवं तेसिं विकलेंदियाणं संमुच्छिमपंचेंदियाण य हेतुवायसण्णा भणिता ते पडुच्च असण्णी, जे णिच्चेट्ठा इट्ठाणिट्ठविसयविणियट्टवावारा मत्तमुच्छियविसोपयुत्तादिसारित्थचेतणाट्ठिता पुढवादिएगिंदिया इत्यर्थः। इदाणिं 'दिट्ठिवाओवदेसेणं'त्ति दृष्टिः- दर्शनं वदनं वादः उपदेशनमुपदेशः इति, अनेन दृष्टिवादोपदेशेन संज्ञीत्यभिधीयते, सो य सम्मदिट्ठी सण्णी, तस्स सम्मदिट्ठिणो सण्णिस्स जं सुतं तं सण्णिसुतं, तेण सण्णिसुतखयोवसमभावेण जुत्तत्तणतो दिट्ठिवातसण्णी लब्भति, अहवा दिट्ठिवायसण्णि त्ति मिच्छत्तस्स सुतावरणस्य य खयोवसमेणं कतेणं सण्णिसुतस्स लंभो भवति, एवं सो दिट्ठिवातसण्णी लब्भति, तस्स सुतं दिट्ठिवातसण्णिसुतमित्यर्थः तं खयोवसामियभावत्थं सम्मदिट्ठिं सण्णिं पडुच्च मिच्छादिट्ठी असण्णी भणितो, सो य मिच्छत्तस्सुदयतो अस्सण्णी भवति, तस्स सुतं असण्णिसुतं, तं च सुतअनाणावरणखयोवसमेणं लब्भति, एवं दिट्ठिवातअसण्णीत्यर्थः, तस्स सुतं दिट्ठिवात-असण्णिसुतं, एवं दिट्ठिवाते सण्णिअसण्णिसु सुतखयोवसमभावसुतं घेतव्वं इति। पर आह- खयोवसमभावट्ठितसण्णित्तणतो लक्खिज्जति, खाइगभावट्ठितो केवली किण्ण सण्णि त्ति? उच्यते- अतीतभावसरणत्तणतो पडुप्पण्णभावाण पवुज्झणतो अणागतभावाचिंतणतो य सण्णि त्ति, तं तहा जिणे अणुसरणं णत्थि, जेण सो सव्वदा सव्वधा सव्वत्थ सव्वभावे जाणती-त्यर्थः, तम्हा केवली णो सण्णी णो असण्णी भवति। पुनरप्याह परः- इह मिच्छादिट्ठिणोऽवि केवि हिताहितनाणवावारस-ण्णासंजुत्ता दीसंति, किं ते असण्णिणो भणिता? उच्यते- तस्स जा सण्णा सा जतो कुच्छिता, जहेह कुच्छितवयणमवयणं कुच्छितसीलमसीलं वा तहा तस्स सण्णा कुच्छितत्तणतो असंज्ञैव दृष्टव्या। अण्णं च तस्स मिच्छत्तपरिग्गहातो

आह--एगिंदियाण ओहसण्णा
णाणमनाणमेव दट्ठव्वं, भणितं च--'सदसदविसेसणतो' गाहा कंठा। एवं पि ते असण्णी। 
तदप्पत्तातो ते असण्णी चेव, तेहिं तो बेइंदिया जाव संमुच्छिमपंचेंदी, एते विसिट्ठतरसण्णाए हेतुवायसण्णी भणिता, कालितो-
वदेसं पुण पडुच्च तेऽवि असण्णी, विण्णाणअविसिट्ठत्तणतो दिट्ठिवातोवदेसं पुण पडुच्च कालिकोपदेसाऽवि असण्णी अविसिट्ठ-
त्तणतो चेव, अतो णज्जति दिट्ठिवातसण्णी सव्वुत्तमो सुत्ते य उवरिं ठवितो, जुत्तमेतं, कालियहेतुसण्णीणं पुण उक्कमकरणं
कम्हा? उच्यते--सव्वत्थ सुत्ते सण्णिग्गहणं जं कतं तं कालितोवदेससण्णिस्स, अतः सर्वत्र तत्संव्यवहारज्ञापनार्थमादौ कालिक-
ग्रहणं कृतमित्यर्थः। किंच सण्णिअसण्णीणं समनस्कामनस्का इति क्रमश्च दर्शितो भवति, अत्र विकलेन्द्रिया अमनस्का इति
अल्पमनोद्रव्यग्रहणसामर्थ्यं, प्रविपद्यते पुनर्मनस्तेषां यस्मादुक्तम्--"कृमीकीटपतंगाद्याः, समनस्का जंगमाश्चतुर्भेदाः। अमन-
स्काः पंचविधाः, पृथ्वीकायादयो जीवाः ॥१॥" इति भणितं सण्णिअसण्णिसुतं, इदाणिं सम्ममिच्छासुतं, तत्थ सम्मसुतं--

वृत्तिः--'से किं तं' इत्यादि, अथ किं तत् संज्ञिश्रुतं? संज्ञानं संज्ञा, संज्ञाऽस्यास्तीति संज्ञी, तस्य श्रुतं त्रिविधं प्रज्ञप्तं
संज्ञिनं एव त्रिभेदकत्वात्, त्रिभेदतामेव दर्शयन्नाह, तद्यथा--कालिक्युपदेशेन हेतूपदेशेन दृष्टिवादोपदेशेन। 'से किं तं'
इत्यादि, अथ कोऽयं कालिक्युपदेशेन? इहादिपदलोपाद्दीर्घकालिकी कालिक्युच्यते, संज्ञेति प्रकरणाद्गम्यते, उपदेशनमुपदेशः
कथनमित्यर्थः, दीर्घकालिक्याः सम्बन्धी दीर्घकालिक्या वा मतेनोपदेशो दीर्घकालिक्युपदेशः तेन, यस्य प्राणिनः अस्ति--
विद्यते ईहा--शब्दाद्यवग्रहणोत्तरकालमन्वयव्यतिरेकधर्मालोचनचेष्टेत्यर्थः, तथाऽपोहो--व्यतिरेकधर्मपरित्यागेनान्वयधर्माध्या-
सेनावधारणात्मकः प्रत्यय इति भावना यथा शब्द इति, तथा मार्गणा--विशेषधर्मान्वेषणरूपा संविदित्यर्थः यथा शब्दः

सन् किं शङ्खः किं वा शार्ङ्ग इति, तथा गवेषणा--व्यतिरेकधर्मस्वरूपालोचना यथा खरादय एवंभूता इति, तथा चिन्ता--अन्वयधर्मपरिज्ञानाभिमुखचेष्टा यथा मधुरत्वादयस्त्वेवंभूता इति, तथा विमर्षः--त्याज्यधर्मपरित्यागेनोपादेयधर्मग्रहणाभिमुखो यथा न शार्ङ्गः, प्रायोऽयं मधुरत्वादियोगाच्छाङ्ग इति, 'से णं सण्णीति लब्भति' त्ति स--प्राणी 'णं' इति वाक्यालङ्कारे संज्ञीति लभ्यते मनःपर्याप्त्या पर्याप्तोऽवग्रहादिमतिज्ञानसंपत्समन्वित इत्यर्थः । अथवा यस्यास्ति ईहा--किमेतदिति चेष्टा, इदमित्यवगमोऽपोहः, अवगतार्थाभिलाषे तत्प्रार्थना मार्गणा, तदप्राप्तौ च निपुणोपायतोऽन्वेषणं गवेषणा, प्रयुक्तप्रतिहतोपायस्योपायान्तरचिन्तनं चिन्ता, तद्विषय एवोपायालोचनात्मकः प्रत्ययो विमर्षः, स संज्ञीति लभ्यते, अयं च गर्भव्युत्क्रान्तिकः पुरुषादिरौपपातिकश्च देवादिरेव मनःपर्याप्तिप्रयुक्तो विज्ञेयः यथोक्तविशेषणकलापसमन्वितत्वात्, न पुनरन्यस्तद्विशेषणविकल इति, आह च--'जस्स' इत्यादि यस्य नास्ति ईहाऽपोहो मार्गणा गवेषणा चिन्ता विमर्षः सोऽसंज्ञीति लभ्यते, अयं च संमूर्छिमपञ्चेन्द्रियविकलेन्द्रियादिर्ज्ञेयः, अल्पमनोलब्धित्वादभावाच्च । 'से त' मित्यादि सोऽयं कालिक्युपदेशेन । 'से किं तं' इत्यादि, अथ कोऽयं हेतूपदेशेन ? हेतुः कारणम्, उपदेशनमुपदेशः, हेतोरूपदेशो हेतूपदेशस्तेन कारणोपदेशेनेत्यर्थः, यस्य--प्राणिनः अस्ति--विद्यते अभिसंधारणम्--अव्यक्तेन विज्ञानेनालोचनं तत्पूर्विका--तत्कारणिका करणशक्तिः--क्रियाशक्तिः, करणं क्रिया, शक्तिः सामर्थ्यम्, अव्यक्तविज्ञानालोचननिबन्धनचेष्टासामर्थ्यमिति भावना, स प्राणी 'णं' इति वाक्यालंकारे संज्ञीति लभ्यते, अयं च द्वीन्द्रियादिः संमूर्छिमपञ्चेन्द्रियावसानो विज्ञेयः, तथाहि--कृम्यादयोऽपीष्टेष्वाहारादिषु प्रवर्तन्तेऽनिष्टेभ्यश्च निवर्तन्ते, स्वदेहपरिपालनार्थं प्रायो वर्तमान एव, न चासंचिन्त्येष्टानिष्टविषयप्रवृत्तिनिवृत्तिसम्भव इति

संज्ञी, उक्तलक्षणविकलस्त्वसंज्ञी, तथा चाह–'जस्स' इत्यादि यस्य नास्ति अभिसंधारणपूर्विका करणशक्तिः सोऽसंज्ञीति लभ्यते, अयं चैकेन्द्रियः पृथिव्यादिरवसेयः, मनोलब्धिरहितत्वात्, आह–यदि स्वल्पसंज्ञायोगाद्विकलेन्द्रियादयः संज्ञिन इष्यन्ते (तर्हि) पृथिव्यादयः किं नेष्यन्ते? यतस्तेषामपि दशविधा संज्ञा विद्यन्त एव, तथा चोक्तम् परमगुरुभिः-"काति णं भंते! एगिंदियाणं सन्नाओ पन्नत्ताओ? गोयमा! दस, तं जहा–आहारसन्ना भयसन्ना मेहुणसन्ना परिग्गहसन्ना कोहसन्ना माणसन्ना मायासन्ना लोभसन्ना ओहसन्ना लोगसन्ना य" त्ति। उपयोगमात्रमोघसंज्ञा, लोकसंज्ञा स्वच्छंदविकल्पिता विश्वगमा लोकिकैराचरिता, तद्यथा- 'अनपत्यस्य न सन्ति लोका' इत्यादि। अन्ये तु व्याचक्षते- ओघसंज्ञा दर्शनोपयोगः, लोकसंज्ञा ज्ञानोपयोगः इति। अत्रोच्यते- इहौघसंज्ञा स्तोकत्वादाहारादिसंज्ञाश्चानिष्टत्वान्नाधिक्रियन्ते यथा न कार्षापणमात्रेण धनवानभिधीयते मूर्त्तिमात्रेण वा रूपवानिति, किंतु यथा प्रभूतरत्नादिसमन्वितो धनवान् प्रशस्तमूर्त्तियुक्तश्च रूपवानभिधीयते, एवं महती शोभना च संज्ञा यस्यास्त्यसौ संज्ञीति विशिष्टतरा च विकलेन्द्रियसंज्ञेत्यलं विस्तरेण, 'से तं' इत्यादि, सोऽयं हेतूपदेशेन। 'से किं तं' इत्यादि, अथ कोऽयं दृष्टिवादोपदेशेन? दृष्टिर्दर्शनं, वदनं वादः, दृष्टीनां वादो दृष्टिवादः, तदुपदेशेन-तन्मतापेक्षया संज्ञिश्रुतस्य क्षयोपशमेन संज्ञीति लभ्यते, अयमत्र भावार्थः- संज्ञानं संज्ञा तद्योगात् संज्ञी तस्य श्रुतं संज्ञिश्रुतम्, इदं सम्यक्श्रुतमेव, अन्यथा संज्ञानाभावात् न हि मिथ्यादृष्टेः संज्ञानमस्ति हिताहितप्रवृत्तिनिवृत्त्यभावाद्रागादिप्रवृत्तेः, उक्तं च- 'तज्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः। तमसः कुतोऽस्ति शक्तिः, दिनकरकिरणाग्रतः स्थातुम् ॥ १ ॥' सम्यग्दृष्टिस्तु तन्निग्रहपरत्वाद्वीतरागसम एव, उक्तं च- 'कलुसफलेण ण जुज्जइ, किं चित्तं तत्थ जं विगतराओ। संतेऽवि

जो कसाए, णिगिह्णती सोऽवि तत्तुल्लो ॥ १ ॥' त्तीत्यादि, अलं प्रसंगेन । तदित्थंभूतस्य संज्ञिश्रुतस्य क्षयोपशमेन सता संज्ञीति लभ्यते, अयं च सम्यग्दृष्टिरेव क्षायोपशमिकज्ञानयुक्तो रागादिनिग्रहपरः, तदन्यस्त्वसंज्ञी, यत आह ग्रन्थकारः- असंज्ञिश्रुतस्य-' मिथ्याश्रुतस्य क्षयोपशमेनासंज्ञीति लभ्यते । 'से तं' इत्यादि, सोऽयं दृष्टिवादोपदेशेन । एवं संज्ञिनस्त्रिभेदभिन्नत्वात् श्रुतमपि तदुपाधिभेदात् त्रिविधमेवेति । अत्राह- कालिक्युपदेशेनेत्यादिक्रमः किमर्थम् ? उच्यते- इह प्रायः सूत्रे यत्र क्वचित्संज्ञिग्रहणं तत्र दीर्घकालिक्युपदेशेन समनस्कसंज्ञिपरिग्रह इति प्रथमं तदुपन्यासः, अप्रधानत्वाच्चेतरयोः, अन्ते च प्रधानाभिधानमिति न्याय्यं । 'से तं' इत्यादि, तदेतत्संज्ञिश्रुतम्, असंज्ञिश्रुतं तु प्रतिपक्षाभिधानादेव प्रतिपादितम्, तदेतदसंज्ञिश्रुतम् ॥

से किं तं सम्मसुअं ? जं इमं अरहंतेहिं भगवंतेहिं उप्पण्णनाणदंसणधरेहिं तेलुक्कनिरिक्खिअमहिअपूइएहिं तीयपडुप्पण्णमणागयजाणएहिं सव्वण्णूहिं सव्वदरिसीहिं पणीअं दुवालसंगं गणिपिडगं, तं जहा- आयारो १ सूयगडो २ ठाणं ३ समवाओ ४ विवाहपण्णत्ती ५ नायाधम्मकहाओ ६ उवासगदसाओ ७ अंतगडदसाओ ८ अणुत्तरोववाइयदसाओ ९ पह्नावागरणाइं १० विवागसुअं ११ दिट्ठिवाओ १२, इच्चेअं दुवालसंगं गणिपिडगं चोद्दसपुव्विस्स सम्मसुअं अभिण्णदसपुव्विस्स सम्मसुअं तेण परं भिण्णेसु भयणा । से तं सम्मसुअं ( सू० ४० )

